॥ श्रीः ॥

# कुवलयानन्दचन्द्रिकाचकोरः



## अलङ्कारतत्त्वञ्च



साहित्यालङ्कार सांख्ययोग वेदान्तविदुषा
श्रीजयचामभूपास्थानविदुषा
सांख्यतीर्थेन
जग्गू वेङ्कटाचार्येण विरचितं प्रकाशितञ्च



मैसूरु नगर्यां कारोनेषन् मुद्रणालये
मुद्रापितञ्च
1943



[मूल्यम् ७-८-०

एतत्पुस्तकप्राप्तिस्थानम्—

जग्गू सुदर्शनाचार्यः,
भक्तिविलासः,
मेलुकोटे,
(फ्रेञ्छ्राक्स् मार्गतः)
(मैसूरु स्टेट्)



*Copies can be had from:—*

JAGGU SUDARSANACHAR,
"BHAKTI VILAS,"
MELKOTE P.O.,
(*Via.* French-rocks)
(MYSCRE STATE.)



DEDICATED

BY

GRACIOUS PERMISSION

TO

HIS HIGHNESS

SRI JAYA CHAMARAJENDRA WADEYAR
BAHADUR,

MAHARAJA OF MYSORE

BY

THE AUTHOR



कर्णाट जनपदाधिप
जयचामेन्द्रे समर्पितो भक्त्या ।
ग्रन्थोऽयं तत्कर्त्रा
प्राप्य तदाज्ञां दयादत्ताम् ॥

॥ श्रीः ॥

# उपोद्घातः



अस्तिकिल समस्तभूमण्डलमण्डनायमानदक्षिणकर्णाटक (मैसूर्) जनपदहीरकिरीटायिते वासुदेवादियदुकुलभूपालमालालालिते दक्षिण-बदरिकाश्रमाभिख्ये श्रीरामानुजाचार्याभिमानमुख्यपात्रे यादवगिरि-नाम्नि दिव्यक्षेत्रे (मेलुकोटे) 'वेदवेदान्तबोधिनी' इति प्रथिता संस्कृतशास्त्रमहापाठशाला। तस्याञ्च अध्यक्षपदवीं अलमकार्षुः स्थानि-कम्. ऐम्बत्तिरुवर्. कुप्पण्णास्वामिनाम्नालंकृताः अस्मदाचार्यवर्याः। येकिल साक्षाद्रामानुजाचार्यावतारभूमिभूत श्रीभूतपुरीनित्यवासनि-रत श्रीमद्वेङ्कटलक्ष्मणार्यसंयमिसार्वभौमकरुणासमासादितोभयवेदान्ताः सकलशास्त्रप्रवचनेन विद्याशालामेनां पण्डितजनमण्डितां विदधिरे। अतएव श्रीमन्नाल्वडिकृष्णभूपालसमर्पितां पण्डितरत्नाभिधाञ्चाभूषयन्। तेषाञ्च आकस्मिकया कृपया नाटकालङ्कारतर्कसांख्ययोगवेदान्तद्राविड-वेदान्तादिसर्वं तेभ्यस्समासाद्य मद्रास् मैसूरु कल्कत्ता प्रभृतिनगरीषु तत्तत्परीक्षासभासु परीक्षितोहं तत्तच्छास्त्रेषु विद्वान् इति प्रशस्तिं प्राप्य तैरेव महानुभावैस्तस्यामेव पाठशालायामध्यापकपदवीञ्चारो-पितः चत्वारिंशद्वत्सरान्यावत् साहित्यवेदान्तादिप्रवचनमकार्षम्॥

॥ मर्मप्रकाशमर्मोद्धाटनम् ॥

तत्र रसगङ्गाधरप्रवचनसमये नागेशभट्टकृते मर्मप्रकाशाख्ये रसगङ्गाधरव्याख्याने त्रिचतुराणां विषयाणां खण्डनरूपमेकं लेखं 'मर्मप्रकाशमर्मोद्धाटन' नामानं विलिख्य अस्मत्पाठशालापण्डितानाम् महीशूरराजधानीस्थपण्डितानाञ्च संनिधाववाचयम्। ततः केषाञ्चिद-मत्सराणां सहृदयानां पण्डितानां श्लाघावचनमाकर्ण्य तुष्टोपि इतरेषां

समत्सराणां क्षुल्लकवाक्यान्यपि तानितानि श्रावंश्रावमनुतप्तचित्तः तल्लेखान्ते पद्यमेतन्न्यक्षिपम्,

जीयान्महीशूरदेशाधिपः कृष्णभूपः
जीयासुरेतेन पुष्टाः कवीशाः स्वधर्मे ।
जीयासुरेभिः प्रक्लृप्ताः प्रबन्धाः विदेशे
जीयात्सदेवो जगद्येन सृष्टं विचित्रम् ॥

इति ॥ ततस्तंमुद्य प्रकट्यकरवम् । अनीनयंश्च भरतखण्डगतानि सर्वाणि विद्यास्थानानि । ततः कदाचित् मद्रास् हिन्दूपत्रिकायां कालेज् प्रोफेसर् सुगृहीतनाम्ना नागराजशर्मणा लिखितं तत्प्रशस्तिरूपं लेखमपश्यम् । अन्यदा 'बङ्गाला एषियाटिक् सोसैटि' नाम्न्या सभया प्रेषितं प्रशस्तिपत्रमलभे । अथच मुंबई निर्णयसागर मुद्रणालये १९३९ तमक्रिस्ताब्दे पञ्चमसंस्करणतया मुद्रापितं मर्मप्रकाशसहितं रसगङ्गाधरपुस्तकमद्राक्षम् । तत्र रसगङ्गाधरस्य सरलानाम्नी काचन नवीना व्याख्या समदृश्यत । साच जयपुरमहाराज संस्कृतमहापाठशालायां साहित्यमहाध्यापक साहित्याचार्य मञ्जुनाथोपाह्व कविशिरोमणि भट्टश्री मधुरानाथशास्त्रिणा विरचिता । यदाचाहं महता कुतूहलेन मत्खण्डितानि नागेशस्य मर्मप्रकाशस्थानानि व्यलोकयम्, तदा मम हृदि. महच्चित्रं पदमधात् । यतो मल्लिखिताएव विषयास्सरलायामपि दृष्टाः । तथैव तल्लिखिते उपोद्घातेपि । ततस्तदुपोद्घातान्ते सरलाविरचनविषये स्वोपकारकनिरूपणसमये लेखोयं समदृश्यत, 'श्रीमन्नाल्वडि कृष्णभूपास्थानविदुषा साहित्यालङ्कारसांख्ययोगवेदान्तविदुषा जग्गुवेङ्कटाचार्येण सप्तदशपृष्ठात्मिकायां लघुतमायां पुस्तिकायाम् रसगङ्गाधरपूर्वसंस्करणगत १३५–१७४–१९१–२१२ पृष्ठेषु या नागेशस्य टीका तस्यास्सम्यक् खण्डनं कृतं । अग्रेपि यदि वेङ्कटाचार्य महोदयः प्रैक्षिष्यत तर्हि नागेशस्य रहस्यान्युपालप्स्यत । महाभागमिम

मभिनन्दन्नहं सरलामिमामेकवारं द्रष्टुमनुरुन्धे । अस्तु अस्मिन्नध्यवसाये यःकश्चन गुणलेशः सः एतदादीनामनुग्रहजन्यः । पदेपदे संभाव्यमानादोषास्तु ममैव मतिवैभवमिति सविनयं विद्वान् विज्ञापयामि ' इति । तदनु महति हर्षार्णवे न्यमज्जम् । यतो ' मत्प्रबन्धा विदेशे जीयासुः ' इति मत्सङ्कल्पमेव सत्यसङ्कल्पो भगवान् निरवर्तयत् ॥

॥ चन्द्रिकाचकोरः ॥

अस्त्येतत् । एवं कुवलयानन्दपाठप्रवचनावसरेपि यत्रयत्रानुपपत्तयो मदीयचित्तपथमायाताः तास्ताः तदातदा व्यलिखम् । अन्ततः सच लेखः ' कुवलयानन्दचन्द्रिकाचकोरा ' त्मना पर्यणमत । अस्मिन् प्रबन्धे संगृहीतानि भामह दण्डि उद्भट वामनादि झळकीकरोपाद्धयामनभट्टपर्यन्तानां त्रिंशत्संख्यानां ग्रन्थकाराणां व्याख्यातृणाञ्च वचनानि । (तेच देशकालादिभिरुपोद्घातएव निर्देक्ष्यन्ते) । तेषु कानिचित् प्रमाणतया, अन्यानि संवादकतया इतराणि व्याख्येयतया पराणि बहुशः खण्ड्यतया अपराणि पाठसंशोधकतया समुपात्तानि । अस्मिन् पाठसंशोधनकार्ये बहूपकरोतिस्म अस्मत्तातपादैः ग्रन्थाक्षरैर्लिखितं तालपत्रकुवलयानन्दपुस्तकम् । ये किल बालधन्विकुलतिलकाः शिङ्गरार्यनाम्नाऽलंकृताः चिरोपासितलक्ष्मीहयवदनप्रसादलब्धवाङ्मयाः प्रशान्तात्मानो मम नवमं वय आरभ्य द्वादशवयःपर्यन्तमात्रलभ्यं काव्यचम्पूद्वयमपाठयन्माम् । यत्प्रसादपरिपाक्त्रिमाचार्यसर्वोपि । तस्यच तालपत्रपुस्तकस्य प्रतिकृतिरपि मत्प्रतिकृतिपुरस्थितचतुष्पादपीठे परिदृश्यते ॥

॥ ग्रन्थफलम् ॥

अस्य प्रबन्धस्य फलमिदम्, यत्कुवलयानन्दस्य परिशुद्धपाठलाभः । यच्च अप्पदीक्षितजगन्नाथ वैद्यनाथ नागेशभट्टानामन्योन्यवि-

वादेषु सारासारविवेचनम् । यदपि बहुषूदाहारणपद्येषु अस्वरसार्थप-रिहारपुरस्सरं स्वरसार्थग्रहणम् । प्राचीनालङ्कारग्रन्थग्रन्थीनां सुखवि-स्रंसनम् विमर्शसरणिपरिचय इत्यादिच । यद्यपि प्रबन्धस्यास्याधिकारी सुदुर्लभएव, यतः कुवलयानन्द रसगङ्गाधरचन्द्रिकामर्मप्रकाशादि ग्रन्थेषु सम्यक् परिचयवतामेवैतदर्थग्रहणं संभवेत् । तथापि दुरवगा-हानामपि तत्तत्प्रबन्धार्थानामनायासेन बोधो यथा भवेत् तथा मया-लिखितमस्ति । अस्यैव प्रबन्धस्य द्वित्रान्विषयान् मैसूरु विद्याशाला-पण्डितमण्डलतृतीयसंमेलनेप्यवाचयम् ॥

॥ विश्वविद्यानिलयोपकारः ॥

यावदनेन प्रबन्धेन सहृदयानां विदुषां नाराध्यते चित्तम्, तावदस्य निरर्थकतां भावयता मया अशक्ततया मैसूरु विश्वविद्या-निलयाधिकारिणः प्रार्थिताः प्रकटनाय, पण्डितवरैः मुद्रणार्हतां निवेदिताश्च, मामेव तस्मिन्कार्यें न्ययूयुजन् । परमोदारेण मनसा त्रिशतंरूप्याण्यन्वगृह्णन् । तद्वचनानुसारेणैव पुनःप्रार्थिताः परिपूर्ण साह्यं करिष्यन्तीति नैर्भयान्मुद्रणकार्यं पूर्णतया निरवहम् । तद्विषये-महान्तं कृतज्ञताभारं दुर्वहं वहामि शिरसा । येयेमहान्त एतन्मुद्रणेन प्रकटीकरणे साह्यमकार्षुः तेषां सर्वेषां विषये कृतज्ञोस्मि सन्ततमतीव ॥

॥ अलङ्कारशास्त्रम् ॥

इतःपरमलङ्कारग्रन्थानां तत्प्रणेतॄणाञ्च विषये किञ्चिल्लिख्यते । अनादावनन्तेच काले अस्माभिरप्यनुभूयमाने चतुर्दशभुवनकुटुंबिनः परार्धायुपः चतुर्मुखाः कति व्यतीताः इत्येतदेव वेदितुमशक्यमिति शास्त्रतो विज्ञायते । कापुनर्वार्ता अस्मादृशां कीटप्रायाणाम् । दुःखमयं जगदितिच विवेकिनां नपरोक्षम् । अतएव खलु दृष्टसारासाराः जिहासितसंसाराः मुनयो मुमुक्षवोऽभूवन् । ‘ रसोवैसः । रसंह्येव

वायं लब्ध्वा आनन्दी भवति' इत्याम्नायवाचा अपरिच्छिन्नानन्दगुणकस्य परमात्मनोऽनुभवएव नित्यनिरतिशयसुखमिति निरणैषुः। अयंपुनरशरीरो मोक्षः। सशरीरस्यैव मोक्षस्तु तयैवश्रुत्या ब्रह्मानुभवसदृशः शृङ्गारादिरसानुभवएव ॥

सच दोषरहित गुणालङ्कारादिसहितदृश्यश्राव्यादि कविकृतिभूतकाव्यं विना ननिष्पद्यत इति तादृशकाव्यस्वरूपं तल्लक्षणं तदपेक्षितं सर्वमपि भगवान्पाराशर्यः आग्नेयपुराणे प्राचीकशत्। तदेवावगाह्य भरतमुनिर्नाट्यशास्त्रे वितस्तार। भामहएवालङ्कारग्रन्थप्रणेतृषु प्रथम इति बहवः। भामहेनापि स्वग्रन्थे समुल्लिखिताः ग्रन्थकारादृश्यन्ते। यथा। 'मन्यन्ते सुधियोऽपरे' 'रामशर्माऽच्युतोत्तरे' 'तएतउपमादोषास्सप्त मेधाविनोदिताः' इत्यादौ। भामहस्तु 'शब्दार्थौ सहितौ काव्यम्' इति शब्दार्थयुगलस्यैव काव्यत्वमुक्त्वा 'शब्दाभिधेयालङ्कारभेदादिष्टं द्वयन्तु नः' इति शब्दगतमनुप्रासयमकादिकं शब्दालङ्कार मर्थगत मुपमारूपकदीपकादिकमर्थालङ्कारञ्च शरीरावयवस्य हारकटकादिकमिव शोभाकरं मत्वा रसभावादीनामपि वाच्यार्थं प्रत्युपसर्जनत्वं विवक्षित्वा अर्थालङ्कारानेव प्राधान्येन व्यवृणोत्। अतएव 'भामहालङ्कार' नाम्ना प्रथते तत्प्रबन्धः। 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायात्। उद्भटरुद्रटादयस्तमेवान्ववर्तन्तानन्तरास्सर्वेप्यालङ्कारिकाः। दण्डीतु 'तैश्शरीरञ्च काव्यानामलङ्काराश्चदर्शिताः। शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली' इति रम्यार्थविशिष्टपदसमुदायस्यैव काव्यत्वमूचे। अस्यच मूलमाग्नेयपुराणम्। तत्रहि 'संक्षेपात्काव्यमिष्टार्थव्यवच्छिन्ना पदावली' इत्युक्तम् ॥ जयदेवेनापि पीयूषवर्षापरनाम्ना चन्द्रालोके काव्यलक्षणमुक्तम्। निर्दोषालक्षणवती सरीतिर्गुणभूषणा। सालङ्काररसानेकरीतिर्वाक् काव्यनामभाक्। इति ॥ एवमार्षवचनात् आचार्यदण्डिवचनात् जयदेव

वचनात् ' काव्यमुच्चैः पठ्यते ' ' काव्यंश्रुतम् अर्थोनज्ञातः ' इत्याद्यबाधितव्यवहारबलाच्च ' रमणीयार्थप्रतिपादकशब्दः काव्यम् ' इति शब्दस्यैव काव्यत्वमूचे रसगङ्गाधरकारः । नान्ये । काव्यप्रकाशप्रदीपदर्पणादिकारास्तु काव्यलक्षण तद्भेद शब्दार्थव्यापार रसभाव दोषगुणालङ्कारादीन् काव्यपरिकरान्प्रकटीचक्रुः । अतएव तत्प्रबन्धानाम् ' काव्यलक्षणग्रन्थाः ' इति प्राचीनानां व्यवहारः । एतेषामपि अलङ्कारशास्त्रत्वेन कथनं भामहोद्भटरुद्रटादीनां ग्रन्थव्यवहारवासनया औपचारिकम् । तत्रालङ्कारमात्रस्याकथनात् । व्यंग्यस्यैव प्राधान्यकथनाच्च ॥

॥ अप्पदीक्षितः ॥

अप्पदीक्षितस्तु कुवलयानन्दाख्ये स्वग्रन्थे चित्रमीमांसायाञ्च केवलार्थालङ्कारानेव लक्षणोदाहरणपूर्वकं प्रत्यपादयत् । चित्रमीमांसायासुपमाद्युत्प्रेक्षान्तान्कतिचिदेवालङ्कारान् । चित्रमीमांसातु बहुशोऽलङ्कारसर्वस्वग्रन्थमेवानुकरोति । कुवलयानन्देतु लक्षणोदाहरणकारिकाः जयदेवकृतचन्द्रालोकाख्यग्रन्थगताएव । स्वकल्पितालङ्कारेषु केवलं स्वनिर्मिताः । उदाहरणपद्यान्यपि अन्यदीयानि प्राचीनान्येव । क्वचित् स्वीयानि । शतमलङ्काराः, रसवदादयश्च निरूपिताः । एतयोर्ग्रन्थयोरलङ्कारग्रन्थत्वं मुख्यमेव । नत्वौपचारिकम् । अर्थालङ्काराणामेव प्रतिपादनात् ॥

॥ जगन्नाथः ॥

रसगङ्गाधरकारस्तु काव्यलक्षणतद्भेद शब्दार्थतद्वृत्तिभेद रसभावादिभेद ध्वनिभेदालङ्कारादिभेदान्प्राचीननवीनपक्षवैलक्षण्यनिरूपण पुरस्सरं न्यायरीत्यापरिष्कृत्य व्याकरणमीमांसाधर्मशास्त्रादि विचारानपि प्रतिपादयति । चिन्त्यमाने करिकलभस्य कण्ठीरवस्य वा कान्तार सञ्चार इवास्य शास्त्रसञ्चारः । प्रतिविषयमुदाहरणप्रत्युदाहरणानि स्वविरचितपद्यान्येव । एवंस्थिते दीक्षितजगन्नाथयोरैतिहासिकदृष्ट्या

विरोधात् तद्ग्रन्थयोर्दूष्यदूषकभावदृष्टिर्माभूदस्माकम् । यद्दिकश्चित् सहृदयश्शब्दार्थव्यापारादिकं याथातथ्येन भगवत्कृपया भावयेत्, यदिच कविवचसि सन्ति दोषाः, तस्यतेस्वतः स्फुरन्त्येव । प्रायोजगन्नाथोक्तादोषाः दीक्षितोक्तिषु लगन्ति । क्वचित्क्वचिदेवतु न ॥

॥ वैद्यनाथनागेशौ ॥

कुवलयानन्दचन्द्रिकाकारो वैद्यनाथस्तु दीक्षितपक्षपातात्तदुक्तीर्भूषयितुं जगन्नाथोक्तान्दूषयति । तच्च केवलाभिनिवेशकृतमिति तल्लेखनप्रकारादेव ज्ञायते । तदुक्तिंनिराकरणयुक्तिमप्रयुक्त्वैव 'निरस्तम्' 'तदनादरणीयम्' 'अत्यन्तासारत्वान्नानुवादमर्हति' इत्यादिरीत्या लिखति । क्वचिदुक्ता युक्तयोपि नयुक्ताः । क्वचिद्विप्रलंभकाअपि । नागेशभट्टस्तु रसगङ्गाधरव्याख्याने मर्मप्रकाशे चन्द्रिकोक्तान्येव दूषणान्यनुवदति । नतु स्वबुद्ध्या किमपि । तदप्यतिसंक्षिप्तमस्फुटार्थञ्च । तदेतत्सर्वमस्मिंश्चकोरे स्पष्टम् ॥

॥ आलङ्कारिकाणां देशकालादिः ॥

अथ ग्रन्थकाराणां देशकालादिविषये किञ्चिल्लिख्यते । बहुशः कवयः स्वग्रन्थारंभे स्वेष्टदेवतां गुरुं मातापितरौ स्वाश्रयं राजानंवा यथामनीषितं स्तुवन्ति निर्दिशन्तिवा । स्वकालञ्च । यदिन तच्छिष्याः व्याख्यातारोवा । तदपि नोचेत्तद्ग्रन्थपाठयितारः संप्रदायागतं तद्बोधयन्ति । कविचरित्रलेखकानां जीवातुरिदम् । यदिलभ्येत, तर्हि शासनञ्च । तस्मात् इदंपरतया तत्तत्प्रबन्धाध्येतॄणां नातिदुर्लभमेतत् । यद्यपि तत्तत्प्रबन्धप्रतिपाद्यविषयग्रहणपराणां मेधाविनां कविकालचरित्रादिषु नधावतिधीः । तपनकिरणतप्तः पिपासया शुष्ककण्ठनालः नारिकेलफलसलिलं पिबन्पुरुषः 'कथमिदं सलिलं फलान्तरायातम्?' 'एतस्य वृक्षः कतिवत्सरजः? इति नहि चिन्तयति ।

यदि चिन्तयति, तर्हि न तावती तस्य पिपासेति ज्ञायते । यदि प्रबन्धेविषयाः रसवत्तराः तर्हि सर्वे तमेवाद्रियन्ते ॥

तथापि रसानुभवानन्तरं तृप्ताः कृतज्ञताप्रेरिताः प्रीत्या कविसंबन्धि देशकालादिकं सर्वमपि जिज्ञासन्तएव । इति तत्सर्वमद्य दिङ्मात्रेण प्रदर्श्यते ॥

चन्द्रिकाचकोरनिर्दिष्टानामालङ्कारिकाणां व्याख्यातृणाञ्च देशकालादिर्निरूप्यते । कालश्च क्रिस्ताब्दमात्रेण निर्दिश्यते । अद्यतन प्रसिद्धेः ॥

॥ १ ॥ 'भामहः' काश्मीरः । प्रायः ७. शतकस्यादिपादः । पिता रक्रिलगोमी । भामहालंकारः । प्राकृतप्रकाशः । इति ग्रन्थौ ॥

॥ २ ॥ 'दण्डी' द्राविडदेशः काञ्चीपुरी । ७. शतकस्योत्तरार्धम् । पिता वीरदत्तः । माता गौरी । पितामहः मनोरथः । प्रपितामहः भारविः । आश्रयः पल्लवराजनरसिह्मः ॥ ग्रन्थाः काव्यादर्शः । दशकुमारचरितम् । अवन्तिसुन्दरीकथा । छन्दोविचितिरपीति केचित् ॥

॥ ३ ॥ 'उद्भटः' काश्मीरः । जयापीडस्यास्थाने बभूव । ८. शतकस्यान्ते ९. श. आदौच । ग्रन्थाः उद्भटालङ्कारः । भामहविवरणम् । कुमारसंभवः ॥

॥ ४ ॥ 'वामनः' काश्मीरः ॥ ८. शत. अन्ते. ९. शतकस्यादौच । आश्रयोजयापीडः । ग्रन्थः । अलङ्कारसूत्रम् ॥

॥ ५ ॥ 'आनन्दवर्धनः' काश्मीरः । ९. शतकस्य तृतीयः पादः । अस्याश्रयः अवन्तिवर्मदेवः । पिता । नोणोपाध्यायः । ध्वन्यालोकः । विषमबाणलीला । देवीशतकमित्यादिग्रन्थाः ॥

॥ ६ ॥ 'धनञ्जयः' मालवः ॥ मुञ्जस्यास्थाने । १०. शत. ४. पादः । पिताविष्णुः । दशरूपकम् ॥

॥ ७ ॥ 'अभिनवगुप्तः' काश्मीरः। ११. शतकस्यादि पादः। काश्मीरश्शुक्रः पिता। माता विमला। अस्याचार्याः भट्टेन्दुराज भट्टतौतप्रभृतयः पञ्च। ग्रन्थाः ध्वन्यालोकलोचनम्। भरतनाट्यशास्त्रव्याख्या अभिनवभारतीत्यादयोबहवः॥

॥ ८ ॥ 'क्षीरस्वामी' काश्मीरः। भट्टेन्दुराजशिष्यः अभिनव गुप्तस्यैव कालः। अमरकोशव्याख्या अभिनवराघवनाटकम्। इत्यादयो ग्रन्थाः॥

॥ ९ ॥ 'क्षेमेन्द्रः' काश्मीरः॥ ११. शत. मध्यभागः। पिता प्रकाशेन्द्रः। सिन्धुपौत्रः। अनन्तराजास्थाने। अभिनवगुप्तस्यशिष्यः॥ ग्रन्थाः कविकण्ठाभरणाद्योबहवः॥

॥ १० ॥ 'मम्मटः' काश्मीरः। ११. शतकस्यान्तिमः पादः। जय्यटः पिता। उव्वटकैयटौ भ्रातरौ। काव्यप्रकाशः। शब्दव्यापारपरिचयश्च॥

॥ ११ ॥ 'रुय्यकः' काश्मीरः॥ १२. शतकस्य पूर्वार्धम्। पिता तिलकः। अलङ्कारसर्वस्वमित्यादिः॥

॥ १२ ॥ 'माणिक्यचन्द्रः' घुर्जरदेशः॥ १२. शतकस्य मध्यभागः। काव्यप्रकाशव्याख्या 'सङ्केतः' इत्यादिः॥

॥ १३ ॥ 'त्रिपुरारिः' पाटलीपुत्रप्रान्तः। १२. शतकस्यान्तिमः पादः। पिता भारद्वाजगोत्रः पर्वतनाथः। भवभूतेर्मालतीमाधवस्य, मुरारेरनर्घराघवस्यच व्याख्या इत्यादिः॥

॥ १४ ॥ 'अर्जुनवर्मदेवः' मालवदेशः भोजवंशीयः। १३. शतकस्यप्रथमःपादः। पिता सुभटवर्मा। अमरुकव्याख्या रसिकसञ्जीवनीत्यादिः॥

॥ १५ ॥ 'जयरथः' काश्मीरः। १३. शतकस्य प्रथमः पादः पिता शृङ्गाररथः। सच राजमन्त्री। अलङ्कारसर्वस्वव्याख्या 'विमर्शिनी' इत्यादिः॥

॥ १६ ॥ 'जयदेवः' पीयूषवर्षापरनामा । मिथिला । १३. शतकमध्यभागः । पिता महादेवः माता सुमित्रा । चन्द्रालोकः । प्रसन्नराघवम् । सीताविहारः ॥

॥ १७ ॥ 'विद्याचक्रवर्ती' दक्षिणेकर्णाटः । १४. श. प्रथमः पादः । पिता श्रीवल्लभः । होय्सलदेशाधिप तृतीयवीरबल्लालमाश्रितः । काव्यप्रकाशस्य अलङ्कारसर्वस्वस्यच व्याख्या इत्यादिः ॥

॥ १८ ॥ 'विद्यानाथः' आन्ध्रदेशः ॥ १४. श. प्रथमपादः । एकशिलानगराधिप काकतीयवंश्यप्रतापरुद्राश्रितः । प्रतापरुद्रीयम् ॥

॥ १९ ॥ 'विश्वनाथः' कलिङ्गः ॥ १४. शत. मध्यभागः ॥ पिताचन्द्रशेखरः ॥ चण्डिदासभ्रातुःपौत्रः ॥ तृतीयनृसिंह्मभूपास्थाने ॥ साहित्यदर्पणः । नरसिंह्मविजयः । इत्यादिः ॥

॥ २० ॥ 'मल्लिनाथः' आन्ध्रदेशः ॥ १५. श. १. पादः । पिता कपर्दी । रघुवंशादि महाकाव्यानां बहूनां व्याख्याता ॥

॥ २१ ॥ 'अप्पदीक्षितः' द्रविडदेशे काञ्ची ॥ १६. श. १७. शतकयोरन्ताद्योः ॥ पिता भारद्वाजगोत्रः रङ्गनाथाध्वरी । वेङ्कटपतिस्तद्देशाधिपः पोषकः । १०४ ग्रन्था इति प्रसिद्धिः ॥ अलङ्कारे चित्रमीमांसा । कुवलयानन्दः । वृत्तिवार्तिकम् । इत्यादिः ॥

॥ २२ ॥ 'जगन्नाथपण्डितराजः' आन्ध्रदेशीयः । १७. शत. मध्यभागः पिता पेरुभट्टः । माता लक्ष्मीः । स्वपितुरेव सर्वशास्त्राधिगमः । ढिल्लीश्वरः शहजहानिति प्रसिद्धो यवनराज आश्रयः । करुणालहरी । लक्ष्मीलहरी । गङ्गालहरी । अमृतलहरी । सुधालहरी । इति पञ्च लहर्यः विष्णु लक्ष्मी गङ्गा यमुना सूर्य स्तुतिरूपाः । इत्यादिः । एतन्निर्मितेषु रसगङ्गाधर नामाऽलङ्कारग्रन्थएव प्रबलः । मधुरायां पञ्चत्वं गतः ॥

॥ २३ ॥ 'भानुजीदीक्षितः' पिता भट्टोजीदीक्षितः । १७-शत. मध्यभागः । अमरसुधा ग्रन्थः ॥

॥ २४ ॥ 'राजचूडामणिदीक्षितः' द्रविडदेशः । १७. शत-२. पादः । पिता रत्नखेट श्रीनिवासः । माता कामाक्षी । तञ्जापुरी नरपतिः रघुनाथ आश्रयः । काव्यदर्पणादयो बहवो ग्रन्थाः ॥

॥ २५ ॥ 'वैद्यनाथः' द्रविडदेशः १७. शत. अन्तिमोभागः । पिता तत्सत् रामचन्द्रः । कुवलयानन्दव्याख्या चन्द्रिका । काव्यप्रकाशोदाहरणचन्द्रिका । काव्यप्रदीपव्याख्या प्रभा ॥

॥ २६ ॥ 'गङ्गाधराध्वरी' द्रविडदेशः । १८. शत. प्रथमः पादः । पिता वाधूलगोत्रो देवसिंहः । माता सुमतिः । अप्पदीक्षितः पुनरनेनैव 'अस्मत्पितामहसहोदरदेशिकेन्द्रः' इति निर्दिष्टः । कुवलयानन्दव्याख्या रसिकरञ्जनी ॥

॥ २७ ॥ 'नागेशभट्टः' महाराष्ट्रब्राह्मणः । १८. शत. १-पादः । पिता शिवभट्टः । माता सतीदेवी । हरिदीक्षितशिष्यः । शृङ्गिबेरपुराधीशरामभूपाश्रितः । रसगङ्गाधरव्याख्या मर्मप्रकाशाख्या । व्याकरणे प्रबला बहवो ग्रन्थाः । सकलदर्शनेष्वपि ॥

॥ २८ ॥ 'पायगुण्डोपाह्ववैद्यनाथः' बालं भट्टापरनामा नागेशशिष्यः । १८. शत. मध्यभागः । रमाख्या चन्द्रालोकव्याख्या । नागेशस्य व्याकरणग्रन्थानां व्याख्याः । इत्यादिः ॥

॥ २९ ॥ 'अनन्तार्यः' कर्णाटदेशः (मैसूरु) । ग्रामः यादवगिरिः । (मेलुकोटे) । १९. शत. मध्यभागः । पिता महाभाष्यम् शिङ्गराचार्यः । मुम्मडि कृष्णराजवोडेयर् महाराजास्थानविद्वान् । न्यायभास्करः । वेदान्तवादावली । णत्वतत्त्वविभूषणं । कृष्णराजकलोदयः । इत्यादिः ॥

॥ ३० ॥ 'वामनभट्टः' झळकीकरोपाख्यः ॥ महाराष्ट्रदेशः । १९. शत. अन्तभागः । काव्यप्रकाशव्याख्या बालबोधिनी ॥

प्राचीनेषु प्रथितविभवेष्वप्यहं पण्डितेषु
प्रायो दोषानलिखमिदमप्यन्ततो बालभावात् ।
मद्दोषोहि स्वयमिह मयादुर्ग्रहस्तेन मन्ये
यो मद्दोषं विशदयति तच्छास्यभूतोऽहमेवम् ॥ १ ॥

इहालंकारतत्त्वञ्च कृत्वैव समयोजयम् ।.
यत्रालंकृतिभेदानां दुर्ग्रहाणां सुखग्रहः ॥ २ ॥

मर्मप्रकाशमर्मोद्घाटन मप्यत्र पूर्वकृतम् ।
योजितमस्ति बुधानां कटाक्षलक्ष्यत्वसिद्धिकृते ॥ ३ ॥

मेलुकोटे.

जग्गूवेङ्कटाचार्यः,
साहित्यालङ्कार सांख्य वेदान्त विद्वान्,
सांख्यतीर्थम् अस्थानविद्वान्.



# विषयसूची



# OPINIONS ON THE WORK.

Extract of letter (29-6-1940) from

Mahamahopadhyaya Professor S. KUPPASWAMI SASTRI, M.A., I.E.S. (Rtd.) to the Registrar, University of Mysore, Mysore.

"Kuvalayananda Chandrika Chakora is a work of merit. * * * The author of this work has given sufficient evidence in it, of his intensive study of important classics in the Alamkara Sastra. He shows a high degree of critical acumen in his review of Panditaraja Jagannatha's animadversions against Appayya Dikshita's views and in his criticism of the defective parts of the Chandrika. The view point adopted by the author of the work in question is mainly that of alamkara-dialectics-similar to what one may see in the Rasagangadhara or Alamkara Kaustubha.

It is likely to be useful to those advanced students of alamkara-sastra, who wish to specialise in it."

---

Professor C. R. NARASIMHA SASTRI, M.A., Mysore University:

"It deals with a celebrated work on figures of speech studied in almost every province of India. Written in a lucid style, it contains many references to a number of advanced works in the field of Sanskrit Rhetoric. Its study is sure to stimulate the spirit of critical enquiry which is generally dormant in most sanskrit students especially of the old type."

---

The author wishes to acknowledge with gratitude the financial help given by the University of Mysore towards the publication of this work.

[*Vide* Preface page iv]

॥ श्रीः ॥

# अलङ्कारतत्त्वम्



रामानुजमुनिश्चित्ते वाजिवक्त्रश्च वाचि मे ।
वासं तनोतु वात्सल्याद्येन वाणी वशं व्रजेत् ॥ १ ॥
तनोम्यहमलङ्कारतत्त्वं गूढं विचार्य तु ।
विद्यार्थिनां सुबोधाय पण्डितानाञ्च तुष्टये ॥ २ ॥
सतां हृदयहारित्वं चमत्कारित्वमिष्यते ।
तदेवालंकृतिस्सा तु शब्दार्थान्यतराश्रिता ॥ ३ ॥
शब्देऽनुप्रासपूर्वा स्यादुपमादिरथार्थगा ।
अलंकृतिस्सा विज्ञेया रसपोषणकारिणी ॥ ४ ॥
इवादिवाच्यात्सादृश्यादुपमायां चमत्कृतिः ।
सदृशस्य द्वितीयस्य व्यवच्छित्तेरनन्वये ॥ ५ ॥
उपमेयोपमायान्तु तृतीयस्य तथात्वतः ।
उपमानात्तु वर्ण्यस्य साधर्म्यात्कविवर्णितः ॥ ६ ॥
उत्कर्षो य स्सप्रतीपे चमत्कारितया स्थितः ।
विषय्यभेदो विषये ताद्रूप्यमपि रूपके ॥ ७ ॥
विषयाभेदतोऽन्यस्मिन्परिणामे चमत्कृतिः ।
ग्रहीतृविषयादीनामनेकत्वादनेकधा ॥ ८ ॥
एकस्य ग्रहणं यत्तु तदुल्लेखे मनोहरम् ।
स्मृतिमद्भ्रान्तिमत्सन्देहान्वितेषु चमत्कृतिः ॥ ९ ॥
स्यात् स्मृतिभ्रान्तिसन्देहै स्सादृश्यादेव कल्पितैः ।
आरोपार्थस्तु यत्किञ्चिन्निषेधोऽपह्नुतौ तथा ॥ १० ॥

अन्यधर्मस्य सम्बन्धात्प्रकृते सतु संशयः ।
उत्प्रेक्षायां चमत्कारी यत्रैका कोटिरुत्कटा ॥ ११ ॥

अन्यवाचकशब्देन वर्ण्यस्य प्रतिपादनम् ।
रूपकातिशयोक्तौ स्याच्चमत्कारप्रयोजकम् ॥ १२ ॥

तदभेदेपि तद्भेदो योगायोगविपर्ययः ।
कार्यहेत्वोस्सहत्वञ्च पौर्वापर्यविपर्ययः ॥ १३ ॥

इत्यादिस्तु चमत्कारी भवेदतिशयोक्तिगः ।
वर्ण्यानामेव धर्मैक्यमन्येषामेववापि यत् ॥ १४ ॥

स्यात्तुल्ययोगितायां तच्चमत्कारप्रयोजकम् ।
वर्ण्यावर्ण्योभयगतधर्मैक्यन्दीपिके तथा ॥ १५ ॥

पदस्यार्थस्योभयस्याप्यावृत्तेस्तु चमत्कृतिः ।
आवृत्तिदीपकेत्वस्मिन्दण्डिना प्रतिपादिते ॥ १६ ॥

वर्ण्यतद्भिन्नवाक्यार्थधर्मैक्यं भिन्नशब्दतः ।
बोध्यं चमत्कृतौ हेतुः प्रतिवस्तूपमागतम् ॥ १७ ॥

भिन्नौ धर्मौ स्वतस्तौल्यादभिन्नत्वेन भावितौ ।
विभिन्नशब्दनिर्दिष्टौ दृष्टान्ते वाक्ययोस्तथा ॥ १८ ॥

वाक्यार्थयोस्सदृशयोरैक्यारोपाच्चमत्कृतिः ।
निदर्शनायामन्यस्थधर्मात्प्रकृतगाच्च सा ॥ १९ ॥

किञ्चिद्धर्मेण साम्येपि वर्ण्याधिक्ये चमत्कृतिः ।
व्यतिरेके पक्षभेदान्न्यूनत्वेपि तथा विदुः ॥ २० ॥

हृद्येन सहभावेन सहोक्तौ स्याच्चमत्कृतिः ।
साम्यदेन विनोक्तौतु विनाभावाच्चमत्कृतिः ॥ २१ ॥

सच्च हीनत्वरम्यत्वजननात् द्विविधो भवेत् ।
एकस्मिन्वर्ण्यमानेतु येनकेनप्रकारतः ॥ २२ ॥

तदन्यार्थपरिस्फूर्त्या समासोक्तौ चमत्कृतिः ।
अलङ्कारे परिकरे साभिप्रायविशेषणात् ॥ २३ ॥
तथाविधाद्विशेष्यात्तु भवेत्परिकराङ्कुरे ।
अर्थतश्शब्दतोवापि पदभङ्गादभङ्गतः ॥ २४ ॥
एकभिन्नार्थकत्वन्तु श्लेषे ह्यत्वकारणम् ।
अप्रस्तुतस्य निर्देशात्प्रस्तुतस्यावबोधनम् ॥ २५ ॥
अप्रस्तुतप्रशंसायां चमत्कारितया स्थितम् ।
प्रस्तुतस्यैव निर्देशात्प्रस्तुतान्तरबोधनम् ॥ २६ ॥
प्रस्तुताङ्कुरनाम्नि स्यादप्पदीक्षितकल्पिते ।
भंग्यन्तरेण कथनाद्भंग्याद्वाच्यस्य चारुता ॥ २७ ॥
पर्यायोक्ते चमत्कारकारिणी वहुसंमता ।
तस्यैवान्यस्यवा निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ॥ २८ ॥
स्फूर्तिर्व्याजस्तुतौ निन्दा निन्दया यदि गम्यते ।
व्याजनिन्दा तदा ज्ञेया कल्पितेयन्तु दीक्षितैः ॥ २९ ॥
स्वोक्तस्यैव विचारेण निषेधस्सतु बाधितः ।
अर्थान्तराक्षेपकश्चेत् विधौ व्यक्ते तिरोहिते ॥ ३० ॥
निषेधेच त्रिधा ज्ञेय आक्षेपः पक्षभेदतः ।
आपाततो विरोधस्य भानेप्यर्थान्तरेण तु ॥ ३१ ॥
तस्यैव परिहारस्स्याद्विरोधाभासकारणम् ।
हेत्वभावेऽसमग्रत्वे सत्यपि प्रतिबन्धके ॥ ३२ ॥
अकारणाद्विरुद्धाच्च कार्योत्पत्तौ विभावना ।
सर्वकारणसंपत्तावपि कार्याजनि र्यदि ॥ ३३ ॥
विशेषोक्तिस्तदा ज्ञेया ततश्चासम्भवो मतः ।
सतु भूतार्थसंसिद्धेरसंभाव्यत्ववर्णने ॥ ३४ ॥

असङ्गतिः कार्यहेत्वोर्विरुद्धा भिन्नदेशता ।
विषमे हेतुरेषा हि घटनाऽननुरूपयोः ॥ ३५ ॥
विरूपकार्योत्पत्तिश्च यत्नेपीष्टस्य नायतिः ।
अनिष्टस्याप्यवाप्तिश्च त्रिविधं विषमं ततः ॥ ३६ ॥
समालङ्कारहेतुस्तु घटनाचानुरूपयोः ।
सरूपकार्योत्पत्तिश्च सिद्धिरिष्टस्य यत्नतः ॥ ३७ ॥
फलंप्रति विरुद्धश्चेत्प्रयत्नस्तद्विचित्रकम् ।
आधाराधेययोरन्यतरस्याधिक्यं पृथुलादपि ॥ ३८ ॥
प्रसिद्धस्यप्यधिनस्स्वस्याधिके भजति चारुताम् ।
अल्पेतु सूक्ष्मादाधेयादाधारस्यातिसूक्ष्मता ॥ ३९ ॥
परस्परोपकारस्स्यादन्योन्ये चारुतास्पदम् ।
विना प्रसिद्धमाधारमाधेयस्य स्थितिस्तथा ॥ ४० ॥
एकस्यानेकतस्सत्ता विशेषे रस्यतामियात् ।
व्याघाते त्वन्यथाकारि तथाकारि भवेद्यदि ॥ ४१ ॥
कार्याणां कारणानांवा पूर्वपूर्वतया स्थितिः ।
चारुः कारणमालाया मेकावल्यान्तु कथ्यते ॥ ४२ ॥
विशेष्याणां प्रकाराणां पूर्वपूर्वतया स्थितिः ।
दीपकैकावलीयोगो मालादीपक उच्यते ॥ ४३ ॥
उत्तरोत्तरमुत्कर्षे स्सारे चारुतया स्थितः ।
यथासंख्ये क्रमेणैव क्रमिकाणां समन्वयः ॥ ४४ ॥
एकस्यानेकाश्रयणमनेकस्य तथैकतः ।
क्रमेण यदि पर्याये द्विधा चारुतया स्थितः ॥ ४५ ॥
समन्यूनाधिकानांवा मिथो विनिमयो यदि ।
परिवृत्तौ चमत्कारी परिसंख्या ततःपरम् ॥ ४६ ॥

प्रतिषिध्यैकमेकस्मिन्नन्यत्र परिकल्पनम् ।
विकल्पे तुल्यबलयोर्विरोधश्चारुतामियात् ॥ ४७ ॥
बहुक्रियायौगपद्यमेकस्य स्यात्समुच्चये ।
बहूनामेककार्येऽप्यहंपूर्विकया स्थितिः ॥ ४८ ॥
क्रमादेकस्य बह्वीनां क्रियाणां कर्तृता यदि ।
सा चमत्कारिणी क्लृप्ता तद्ज्ञैः कारकदीपके ॥ ४९ ॥
अन्यकारणसान्निध्यात्समाधौ कार्यशीघ्रता ।
प्रत्यनीके बलवतश्शत्रोः पक्ष्ये पराक्रमः ॥ ५० ॥
दण्डापूपिकयार्थस्य सिद्धिः काव्यार्थसम्पदि ।
समर्थनीयस्यार्थस्य काव्यलिङ्गे समर्थनम् ॥ ५१ ॥
वाक्यार्थस्य पदार्थस्य हेतुत्वात् द्विविधन्तु तत् ।
सामान्येन विशेषस्य तेन तस्यापि साधनम् ॥ ५२ ॥
द्वयमर्थान्तरन्यासे काव्यलिङ्गे तदन्यथा ।
विकस्वरे विशेषस्य सामान्येन समर्थनम् ॥ ५३ ॥
विशेषेण पुनस्तस्य जयदेवेन कल्पिते ।
उत्कर्षाहेतुभूतेपि तद्धेतुत्वप्रकल्पनम् ॥ ५४ ॥
प्रौढोक्तौ स्याच्चमत्कारि ततस्संभावने भवेत् ।
यद्येवं स्यात्तदा तत्स्यादित्यूहोऽन्यस्य सिद्धये ॥ ५५ ॥
एकमिथ्यात्वसंसिद्ध्यै मिथ्यार्थान्तरकल्पनम् ।
मिथ्याध्यवसितौ द्वयं ललितालंकृतौ पुनः ॥ ५६ ॥
निर्दिश्य धर्मिणं वर्ण्यमनुक्त्वा वस्तु तद्गतम् ।
प्रतिबिंबस्य तस्यैव कथनं चारुतां व्रजेत् ॥ ५७ ॥
प्रहर्षणे विना यत्नमुत्कण्ठाविषयस्य या ।
सिद्धिरिष्टाधिकस्यापि यत्नात्साधनसाधकात् ॥ ५८ ॥

साक्षात्साध्यस्य सिद्धिश्च त्रिधा चारुत्वमृच्छति ।
विषादने त्विष्यमाणविरुद्धार्थस्य संभवः ॥ ५९ ॥
उल्लासे गुणदोषाभ्यामेकस्यान्यस्य तौ यदि ।
चतुर्धा हृद्यतां यातोऽथावज्ञालंकृतौ पुनः ॥ ६० ॥
ताभ्यान्तौ नभवेताञ्चेत् अनुज्ञालंकृतौ पुनः ।
गुणदृष्ट्यैव दोषस्य प्रार्थना हृद्यतामियात् ॥ ६१ ॥
लेशे गुणस्य दोषत्वं दोषेपि गुणकल्पनम् ।
मुद्रायां सूचनीयार्थसूचनं प्रकृतैः पदैः ॥ ६२ ॥
प्रसिद्धसहपाठ्यानां रत्नावल्यां क्रमाभिधा ।
तद्गुणे स्वगुणं त्यक्त्वा परकीयगुणग्रहः ॥ ६३ ॥
पुनस्स्वगुणसंप्राप्तिः पूर्वरूपे निमित्ततः ।
स्वसङ्गतस्याप्यन्यस्य गुणाप्राप्ति रतद्गुणे ॥ ६४ ॥
स्वस्मिन् पूर्वस्थितगुणोत्कर्षोऽन्यस्माद्भवेद्यदि ।
तदेवानुगुणे हृद्यं मीलितालङ्कृतौ पुनः ॥ ६५ ॥
एकरूपतया व्यक्तिद्वयाग्रहणमेव तत् ।
अपि व्यक्तिद्वयज्ञाने वैलक्षण्याग्रहः पुनः ॥ ६६ ॥
सामान्येऽथ निमित्तेन केनचिन्प्रतिभासते ।
भेदो विलक्षणत्वञ्चोन्मीलितेच विशेषके ॥ ६७ ॥
किञ्चित्तात्पर्यगर्भत्वमुत्तरस्य तथोत्तरे ।
उत्तरप्रश्नयोरैक्यमुत्तरैक्यञ्च पृच्छयोः ॥ ६८ ॥
चित्रोत्तरे चमत्कारि सूक्ष्मे ज्ञात्वा पराशयम् ।
चेष्टयैवोत्तरे दत्ते तच्चमत्कारकारणम् ॥ ६९ ॥
पिहिते परवृत्तान्तं ज्ञात्वा तत्प्रकटीक्रिया ।
व्याजोक्तावन्यहेतूक्त्या स्वीयाकारस्य गोपनम् ॥ ७० ॥

गूढोक्तौ कञ्चिदुद्दिश्य तदन्यं प्रति कथ्यते ।
विवृतोक्तौतु दुर्ज्ञेयो वक्तुस्तात्पर्यगोचरः ॥ ७१ ॥

अर्थस्स्ववाक्यात्कविना प्रकटीक्रियते किल ।
स्वरहस्यार्थगुप्त्यर्थं क्रियया परवञ्चनम् ॥ ७२ ॥

युक्तौ ह्ययंहि लोकोक्तौ लोकवादानुकारिता ।
छेकोक्तौ लोकवादस्याप्यन्यार्थपरता यदि ॥ ७३ ॥

वक्रोक्तावेकवाक्यस्य काक्वा श्लेषेणवेतरः ।
अर्थान्तरं कल्पयेच्चेत्तच्चमत्कारितामियात् ॥ ७४ ॥

तत्तज्जातीयवस्तूनां स्वभावस्यानुवर्णनम् ।
स्वभावोक्तौ चमत्कारि भाविके भाविभूतयोः ॥ ७५ ॥

साक्षात्कारोऽर्थयोर्हृद्यमुदात्तेचर्धिवर्णनम् ।
स्थानादिलक्षकतया श्लाघ्यस्य चरितस्यच ॥ ७६ ॥

अत्युक्तावद्भुतातथ्यशौर्यौदार्यादिवर्णनम् ।
निरुक्तौ योगतो नाम्नामपरार्थप्रकल्पनम् ॥ ७७ ॥

प्रतिषेधे प्रसिद्धस्य निषेधस्यैव कीर्तनम् ।
सिद्धस्यैव विधानन्तु विधौ हेतौतु हृद्यता ॥ ७८ ॥

हेतुहेतुमतोस्सार्धं वर्णनादैक्यतोऽपिवा ।
अभिव्यक्तो विभावाद्यैः स्थायी रत्यादिरेवतु ॥ ७९ ॥

मनोवृत्तिर्हि रसतां याति तस्यापराङ्गता ।
अलङ्कारे रसवति चारुतां प्रतिपद्यते ॥ ८० ॥

निर्वेदादिस्त्रयस्त्रिंशद्देवगुर्वादिगोचरा ।
भक्तिश्च व्यज्यमाना चेद्भाव इत्यभिधीयते ॥ ८१ ॥

तस्यापराङ्गता प्रेयोऽलङ्कारे चारुतामियात् ।
अनौचित्यप्रवृत्तस्तु रसो भावश्च सूरिभिः ॥ ८२ ॥

भावाभासो रसाभास इति सङ्कीर्त्यते सतु ।
अन्याङ्गश्चेत्तदूर्जस्वि समाहितमतःपरम् ॥ ८३ ॥
तत्र भावशमावस्था पराङ्गश्चेचमत्कृतिः ।
भावोदयो भावसन्धि श्शबलत्वमथास्य वा ॥ ८४ ॥
पराङ्गश्चेत्तदा त्रेधा तत्तन्नाम्नात्वलंकृतिः ।
प्रत्यक्षमनुमानञ्चोपमानं शब्दएवच ॥ ८५ ॥
अर्थापत्तिश्चोपलब्धेरभावस्संभवेतिद्वा ।
अष्टौ प्रमाणालङ्कारा इति पञ्चदशोत्तरम् ॥ ८६ ॥
शतं निर्दिष्टमप्पय्यदीक्षितेनतु तत्कृतौ ।
नाम्ना कुवलयानन्दे तत्र तत्त्वं मयोदितम् ॥ ८७ ॥
अलङ्कारेषुतूक्तेषु बहूनां वा द्वयोरुत ।
मिश्रणे नातिरिक्तत्वं जयदेवस्य सम्मतम् ॥ ८८ ॥
संसृष्टिस्सङ्करश्चेति मिश्रणे द्विविधा गतिः ।
तिलतण्डुलवद्भेदे स्पष्टे संसृष्टिरुच्यते ॥ ८९ ॥
नीरक्षीरवदस्पष्टे भेदे सङ्कर उच्यते ।
चतुर्धा सङ्करोऽङ्गाङ्गिभावात्प्राधान्यतो द्वयोः ॥ ९० ॥
सन्देहादेकवाक्यानुप्रवेशाच्चेति भेदतः ।
उदाहरणपद्येषु सर्वं ज्ञेयं समन्वयात् ॥ ९१ ॥
सङ्कराणां सङ्करोपि दृश्यते केषुचिद्यथा ।
मुक्ताः केलिविसूत्रेति पद्ये संदृश्यतामिदम् ॥ ९२ ॥
बालधन्विकुलाब्धीन्दुशिङ्गरार्यात्मजन्मना ।
कृता कृतिरियं जीयाज्जग्गूवेङ्कटसूरिणा ॥ ९३ ॥

॥ इत्यलङ्कारतत्त्वम् संपूर्णम् ॥

॥ श्रीः ॥

# ॥ श्रीकुवलयानन्द चन्द्रिका चकोरः ॥

## मङ्गलानि

कालिन्दीतटसैकते विषमितन्यस्ताङ्घ्रिपद्मः कचित्
लक्ष्ये निश्चलबद्धदृष्टिरसकृन्मन्दं हसन्माधवः ।
गोप्योरंस निवेशितोभयभुजस्तत्सङ्गजं भावयन्
आनन्दं धृतवेणुराश्रितनिधिः कृष्णस्सपुष्णातु नः ॥ १ ॥

मयूरपिञ्छा भरणेन्द्रचापो राधातटित्संवलिताङ्गयष्टिः ।
कलिन्दजातीर विहारचुञ्चुः कृष्णाम्बुदो वर्षतु मङ्गलान्नः ॥ २ ॥

योगसूत्र महाभाष्य सूत्रभाष्यैर्विशोधिताः ।
येन जन्तुमनोवाणीजीवास्तं मनवै मुनिम् ॥ ३ ॥

## प्रतिज्ञा

मूलस्यार्थं स्वरसविशदं भावयित्वा पुरस्तात्
पश्चाद्व्याख्यान्तदनुगमनां तद्विरुद्धाञ्च मत्वा ।
बुद्ध्वा वृत्तिं निखिलपदगां शक्तिपूर्वां यथार्हं
वक्तुर्भावं पदरचनया सान्वयं संप्रवक्ष्ये ॥ ४ ॥

नह्यस्ति पक्षपातित्वं काव्यसूक्ष्मार्थ दर्शिनाम् ।
दीक्षितेवा तदन्यस्मि न्युक्तः पक्षः प्रदर्श्यते ॥ ५ ॥

प्रार्थना

तुलाग्रसूचीमिव तोल्यवस्तु-
गुरुत्वनम्रीकृतमूर्धभागाम् ।
विद्वत्तति साञ्जलि याचतेऽयं
मावीक्ष्यतां दूष्यधियैव सोऽयम् ॥ ६ ॥

अहङ्कार परिहारः

पौरुषेयवचोमात्रे दोषस्संभावितो बुधैः ।
किंपुनर्मन्दवाक्येऽस्मिन् क्षन्तव्योऽयं व्यतिक्रमः ॥ ७ ॥

इह खलुप्रबन्धे कुवलयानन्दचन्द्रिकागतादोषा ये यत्रयत्र मदीयचित्तपथमारूढाः ते विशदीक्रियन्ते । प्रसङ्गादितरेषा मालङ्कारिकाणां तत्तदुदाहरण श्लोकव्याख्यातृणाञ्च ॥ यथामति यथोपपत्ति यथासंभवञ्च विरोधः परिह्रियते ॥

विषयः (१) पूर्णोपमा १.

चन्द्रिकायां पूर्णोपमासामान्यलक्षणे प्रथमदलगतस्य 'विशेषत' इतिपदस्य प्रयोजनमेवं कथितम् "एवमपि 'तन्वी'त्यनेनात्रोपमेयस्य 'काव्यस्य सदृशं न दृश्यते' इत्येवंविधायां लुप्तोपमानायामुपमानस्य च सदृशपदोपात्तत्वाद्विशेषत" इति ॥

अस्मिन्वाक्ये 'तन्वीत्यनेन' इतिपदस्य कुत्रान्वयः इत्येतन्नज्ञायते । 'अत्र' इत्यस्यार्थश्च । 'उपमेयस्य' इत्यस्य 'उपमानस्यचे' त्यत्र चशब्देन समुच्चितत्वं ज्ञायते । 'उपमानस्य' इत्यस्य 'सदृशपदोपात्तत्वात्' इत्यत्रान्वयः । चकारस्य समुच्चयार्थकत्वादुपमेयस्य उपमानस्यच सदृशपदोपात्तत्वात् इत्यन्वयो ज्ञायते ॥

एवंसति उपमानस्य सदृशपदोपात्तत्वेपि उपमेयस्य सदृशपदोपात्तत्वं नास्त्येव, इत्यसङ्गतार्थत्वम् । साङ्गत्यसंपादनाय 'उपमे-

यस्य ' इत्यस्य सदृशपदोपात्तत्वादितिपदैकदेशभूते ' उपात्तत्वात् ' इत्येतावन्मात्रांशेऽन्वयो वाच्यः । तथाचैकदेशान्वयः ॥

एवं क्लिष्टं चन्द्रिकावाक्यं सौकर्याय बुभुत्सूनां विशदीक्रियतेमया । अत्र—पूर्ववाक्यघनिरादितायां ' कान्त्यास्मरवधूयन्ती ' त्युपमेयलुप्तायाम् । तन्वीत्यनेन—' कान्त्यास्मरवधूयन्तीदृष्टातन्वीरहोमया ' इति वाक्यघटकीभूततन्वीपदेन । ' उपमेयस्य ' इत्यस्य उपात्तत्वादित्येकदेशान्वयोऽगत्याऽङ्गीकरणीयः । अयञ्चास्यवाक्यदोषः । ' काव्यस्य सदृशं नदृश्यते ' इत्यत्र सदृशपदेनोपमानस्योपात्तत्वाच्चातिव्याप्तिस्स्यात् अतोविशेषत इतिपदं निवेशनीयम् । पूर्वोक्तोपमेयोपमानलुप्तयोस्तन्वीपदेनोपमेयस्य, सदृशपदेनोपमानस्य च तन्वीत्वेन सदृशत्वेन च सामान्याकारेणोपात्तत्वेपि विशेषतः—उपमेयोपमानतावच्छेदकधर्मपुरस्कारे णोपात्तत्वं नास्तीति नातिव्याप्तिरितिभावः ॥



विषयः (२) पूर्णोपमा २.

चन्द्रिकाकारेण पूर्णोपमालक्षणमुक्तम् , ' विशेषतउपात्तशब्दशक्तिप्रतिपादितोपमानोपमेयकत्वेसति, विशेषतश्शब्दोपात्तसमानधर्मकत्वेचसति, विशेषतस्स्वनिरूढशब्दगम्यत्वत् ' इति ॥

अत्र विशेष्यदले ' विशेषतः ' इतिपदस्य प्रयोजनं नसंभवति, स्वपदेनोपमागृह्यते । उपमाचसादृश्यम् । इवार्थे सादृश्ये लक्षणसमन्वयः । स्वस्मिन्—सादृश्ये, निरूढाः—शक्ताः लक्षकाश्च येशब्दाः—इव, वत् , वा, यथा, इत्यादयश्शब्दाः, सुहृदादि शब्दाश्च, तद्गम्यत्वंतद्बोध्यत्वम् । इवादीनां वाचकत्वस्यैवोत्तरत्र स्थापयिष्यमाणत्वात् । कोशश्च, ' व वा यथा तथै वैवं साम्ये ' इति । तथाच सादृश्यस्य वाचको लक्षकश्च सामान्यशब्दःकश्चन, विशेषशब्दःकश्चनेति विभागाभावाद्विशेषतइति पदस्य प्रयोजनञ्चिन्त्यम् ॥

विषयः (३) लुप्तोपमा ।

'वर्ण्योपमानधर्माणामुपमावाचकस्यच ।
एकद्वित्र्यनुपादानाद्भिन्ना लुप्तोपमाऽष्टधा' ॥

इति मूलम् । अस्यव्याख्या कुवलयानन्दे, 'उपमेयादीनाञ्चतुर्णांमध्ये एकस्य द्वयोस्त्रयाणां वा प्रतिपादकशब्दाभावे लुप्तोपमा इत्युच्यते, साचाष्टधा' इति ॥

चन्द्रिकायान्तु "चकारो वाशब्दार्थे, तदनन्तरञ्च 'लोपे' इत्यध्याहार्यम् । एवञ्चेतरेतरयोगाविवक्षया वर्ण्यस्य, उपमानस्य, धर्मस्य, उपमावाचकस्यवा लोपे—अन्यतमानुपादाने लुप्तोपमा । साच एकद्वित्र्यनुपादानादष्टधाभिन्नेति पूर्वापराभ्यामुक्तं भवति" इति ॥

पूर्वोक्तकारिकाविवरणविषये कुवलयानन्दतच्चन्द्रिकयोर्योजनाभेदोऽस्ति नवेति विचार्येत । एवं हि चान्द्रिकायां पूर्वोक्तकारिकाया अवतारिका दत्ता ॥

'लुप्तोपमायां सर्वलोपनियमाशङ्कानिरासाय लक्षणपूर्वकं तां विभजते वर्ण्येत्यादिना' इति ॥

साचावतारिका कुवलयानन्दमनुसरति । कुवलयानन्दे, 'उपमेयादीनां चतुर्णां मध्ये, एकस्य द्वयो स्त्रयाणां वा प्रतिपादकशब्दाभावे लुप्तोपमेत्युच्यते । साचाष्टधा' इत्यादिना लुप्तोमालक्षण, लुप्तोपमाविभागोभयपरतया कारिकाया व्याख्यातत्वात् ॥

'उपमावाचकस्यच' इति कारिकास्थ चकारस्य 'चकारो वा शब्दार्थे' इति चन्द्रिकाकारेण विकल्पार्थकत्वमुक्तम् ॥

कुवलयानन्दकारेणतु 'उपमेयादीनां चतुर्णां' मितिव्याख्यानादितरेतरसमुच्चयार्थकत्वमुक्तम् ॥

चन्द्रिकाकारेण 'लोपे' इत्यध्याहृत्य तस्मिन् वर्ण्योपमानधर्माणां, उपमावाचकस्य, इति षष्ठ्योरन्वय उक्तः ॥

कुवलयानन्दकारेणतु 'चतुर्णांमध्ये' इति व्याख्यानान्निर्धारणार्थकषष्ठ्योरेकद्वित्र्यनुपादानेऽन्वयउक्तः ॥

चन्द्रिकाकारेण 'साच एकद्वित्र्य नुपादानादष्टधा भिन्ने' त्ति अनुपादानमष्टधाभेदे हेतुतया प्रदर्शितम् ॥

कुवलयानन्दकारेणतु लुप्तोपमात्वप्रयोजकतया । तथाच व्याख्यानयोरुभयो र्योजनाभेदस्सिध्यति ॥

एवंस्थिते कस्मिन्पक्षे किं स्वारस्यम् ? किमस्वारस्य ? मित्येतदितो विचार्यते ॥

यत्तु—'चकारोवाशब्दार्थे' इति चन्द्रिकाकारः प्रोवाच; तत्तु शक्तिग्राहकात्कोशान्नसिद्ध्यति' 'चान्वाचयसमाहारेतरेतरसमुच्चये' इत्यनेनान्वाचयाद्यर्थत्रयस्यैव लाभात् । वा शब्दार्थत्वन्तु निपातानामनेकार्थकत्वपक्षमवलंव्याङ्गीकरणीयम् ॥

कुवलयानन्दयोजनायान्तु इतरेतरसमुच्चयार्थकत्वमुक्तकोशसिद्धं प्रसिद्धतमञ्च ॥

यश्च—चन्द्रिकाकारयोजनायां 'लोपे' इत्यध्याहारः, सोऽप्यध्याहारस्य वाक्यदोषत्वेन शास्त्रज्ञैः परिगणनादगतिकस्थलनिर्वाहायाङ्गीकरणीयः इत्यस्वारस्यम् ॥ कुवलयानन्दयोजनायान्तु अध्याहारंविनैव निर्वाहात् स्वारस्यम् ॥

अथ—अस्याः कारिकाया एकान्वयवत्वादेकवाक्यत्वं संभवति नेति विचार्यते ॥

'उपमेयादीनां चतुर्णां मध्ये एकस्य द्वयो स्त्रयाणां वा अनुपादानप्रयोज्यलोपवती उपमा अष्टधाभिन्ना' इत्येकवाक्यत्वं संभवति । एकवाक्यत्वञ्च कारिकास्थपदानामन्वयलभ्योऽर्थः ॥

चन्द्रिकाकारेणतु ‘ लोपे ’ इत्यध्याहृत्य, उपमेयस्य, उपमानस्य, धर्मस्य, उपमावाचकस्य वा लोपे लुप्तोपमा, इति पूर्वार्धमात्रं भित्वा लुप्तोपमालक्षणप्रतिपादनपरतया व्याख्यातम् । पुनः ‘ साचे ’ त्यध्याहृत्य, एकद्वित्र्यनुपादानादष्टधाभिन्नेति लुप्तोमाविभागप्रतिपादकतया व्याख्यातमुत्तरार्धम् ॥

एवं वाक्यभेदेन योजनायां, ‘ संभवत्येकवाक्यत्वेवाक्यभेदस्तुनेष्यते ’ इति वाक्यभेदस्य वाक्यदोपत्वप्रतिपादक शास्त्रकार वचनसिद्धमस्वारस्यम् ॥

ननु इयं वाक्यभेदपरतया योजना कुवलयानन्देपि तुल्या । तत्रैव मानुपूर्वी । ‘ उपमेयादीनां चतुर्णां मध्ये एकस्य द्वयो स्त्रयाणां वा प्रतिपादकशब्दाभावे लुप्तोपमेत्युच्यते ’ ‘ साचाष्टधाभिन्ना यथा वाचकलुप्ते ’ त्यादि ॥

अस्यामानुपूर्व्यां ‘ उपमेयादीना ’ मित्यादि ‘ लुप्तोपमेत्युच्यते ’ इत्यन्तेन लुप्तोपमाया लक्षणपरमेकं वाक्यं, ‘ साचाष्टधाभिन्नायथा ’ इत्यादिना लुप्तोपमाया भेदप्रतिपादकमपरं वाक्यम् इति वाक्यभेदस्य स्पष्टत्वात् इति चेत्सत्यम् ॥

तथापि सामान्यलक्षणप्रतिपादनंविना विभागोऽनुपपन्नइति मनसि निधाय सामान्यलक्षणमर्थसिद्धंमन्वानः कुवलयानन्दकारः तत्प्रकटनाय एकवाक्यतयाऽन्वितामपि कारिकां वाक्यद्वयेन व्यवृणोत् ॥

चन्द्रिकाकारस्तु लक्षणविभागयोरपि शाब्दत्वमपेक्षमाणो ‘ लोपे ’ इत्यध्याहृत्य ‘ लुप्तोपमा ’ ‘ साच ’ इत्यादिना भिन्नवाक्यतयैव कारिकां योजयामास ॥

बुधरञ्जन्याख्यायां चन्द्रालोककारिकाव्याख्यायामपि एकवाक्यत्वेनैव विवरणं दृश्यते । तत्रैवमानुपूर्वी ॥

'वर्ण्योपमानधर्माणां—उपमानोपमेयसाधारणधर्माणां, उपमा-वाचकस्य, इवशब्दस्यच, इत्येषां, चतुर्णां मध्ये एकस्य द्वयो स्त्रयाणां वा अनुपादानात्—अप्रयोगात्, भिन्नासती लुप्तोपमा अष्टधा—अष्टवि-धा भवतीत्यर्थः' इति ॥

एवमेकवाक्यतया शब्दयोजनायां लक्षणस्यार्थसिद्धत्वं विभा-गस्य शाब्दत्वञ्च तत्कारिकावतारिकायां स्पष्टमुच्यते । तत्रेयमवता-रिका, 'अथ लुप्तोपमां लक्षयंस्तद्भेदान्संख्यया परिच्छिनत्ति' इति ॥ अत्र 'लक्षणस्यार्थसिद्धत्वं' 'तद्भेदान्संख्ययापरिच्छिनत्ती' ति विभा-गस्य शाब्दत्वञ्चोच्यते ॥

किञ्च—रसिकरञ्जन्याख्यायां कुवलयानन्दटीकायामपि कारि-काया एकवाक्यपरतां सिद्धवत्कृत्य विभागमात्रप्रतिपादकतया कारि-काऽवतारिता । तत्रेयमवतारिका ॥

'इत्थं लक्षिताया उपमायाः पूर्णालुप्ताभेदेन द्विविधायाः पूर्णा-रूपभेदं सोदाहरणमभिधाय लुप्तोपमां विभजते वर्ण्येति' इति ॥

तथाच कारिकाया व्याख्यात्रयमेकवाक्यपरम् । चन्द्रिकामात्रं भिन्नवाक्यपरमिति, एकवाक्यत्वपक्षे बहुसंमत्या स्वारस्यम् । अन्य-त्रतु तदभावादस्वारस्यम् ॥

अपिच—'एवञ्चेतरेतरयोगाविवक्षया वर्ण्यस्य उपमानस्य, धर्मस्य, उपमावाचकस्य वा लोपे अन्यतमानुपादाने लुप्तोपमा' इति चन्द्रिकाग्रन्थेनायमर्थउक्तो भवति ॥

लक्षणवाक्यस्थ चकारस्येतरेतरयोगार्थकत्वं न विवक्षितम् । किन्तु विकल्पार्थकत्वम् । अध्याहृतस्य 'लोपे' इति पदस्य अनुपा-दाने, इत्यर्थः । 'वर्ण्यस्य उपमानस्य धर्मस्य उपमावाचकस्यवा लोपे' इत्यस्य 'अन्यतमानुपादाने' इति स्वेनैवार्थोविवृतः । 'अनु-

पादाने लुप्तोपमा ' इत्यनेन अन्यतमानुपादानस्य लुप्तोपमात्वप्रयोजकत्वमुक्तम् । अन्यतमत्वञ्च तद्भिन्नभिन्नत्वं ॥ तच्चप्रत्येकविश्रान्तम् । तथाचोपमेयोपमान साधारणधर्मोपमावाचकेष्वेकैकस्यानुपादाने लुप्तोपमा, इति लक्षणं फलितम् ॥

एतच्चलक्षणमेकलोपवत्यां वाचकलुप्तायां, धर्मलुप्तायां, उपमानलुप्तायाञ्च समन्वितमपि द्वित्रिलोपवतीषु धर्मवाचकलुप्तादिषु अव्याप्तं भवति ॥

ननु—द्वित्रिलोपवतीषु धर्मवाचकलुप्तादिष्वपि लक्षणसमन्वयस्संभवति, अन्यतमत्वस्य तद्भिन्नभिन्नत्वरूपत्वात् । प्रकृते तत्पदेन उपमेयोपमानसाधारणधर्मवाचकसमुदायस्यैव ग्रहणात्तद्भिन्ना घटादयस्तद्भिन्नत्वं समुदायस्य तदवयवयोरवयवानांवा यथायोगं संभवतीति तल्लोपे द्वयोस्त्रयाणां वा अनुपादाने लुप्तोपमेति लक्षणस्योपपन्नत्वादितिचेत्, मैवम् ॥

'चैत्रमैत्र देवदत्तयज्ञदत्तान्यतममानये ' त्युक्तौ चैत्रादिषु चतुर्षु कस्यचिदेकस्यानयनं प्रसिद्धम् । नतु द्वयोस्त्रयाणां समुदायस्यवा । एवमुपमेयादिषु चतुर्षु कस्यचिदेकस्यानुपादाने लुप्तोपमेत्येव सिद्धेः ॥

किञ्च—अन्यतमपदेन समुदायग्रहणे ' अन्यतमानुपादाने ' इत्यस्य ' चतुर्णामप्यनुपादाने ' इत्यर्थस्य प्राप्त्या, उपमेयादीनाञ्चतुर्णामप्यनुपादने लुप्तोपमेत्येव लक्षणं सिद्ध्यति ॥

ततश्च—' पूर्णायामुपमानादिसमग्रतानियमप्रसिद्धे स्तद्विपरीतायां लुप्तोपमायां सर्वलोपनियमाशङ्कानिरासाय लक्षणपूर्वकं तां विभजते वर्ण्येत्यादिना ' इति स्ववितीर्णकारिकावतारिकाग्रन्थाविरोधः । अस्यामवतारिकायामुपमेयादीनां सर्वेषां लोपो नास्तीत्युच्यते । ' अन्यतमानुपादाने ' इत्यनेन उपमेयादिचतुष्टयसमुदायस्य लोपउच्यते इति विरोधस्यस्फुटत्वाच्च । तस्मात् द्वित्रिलोपवतीष्वव्याप्तिर्दुर्वारैवभवति ॥

नच—द्वित्रिलोपवतीष्वपि लुप्तासु लक्षणसमन्वयार्थं 'अन्यतमानुपादाने' इत्यत्र अन्यतमपदेन यथाकथञ्चिदपि द्वयोस्त्रयाणांवा समुच्चयोऽङ्गीकरणीय इति वाच्यम् ॥

'इतरेतरयोगाविवक्षये' ति चकारस्येतरेतरयोगार्थकत्वस्य तेनैवनिराकृतत्वात् ॥

'चकारोवाशब्दार्थे' इति विकल्पार्थकत्वस्य तेनैवनिरूपितत्वात् अन्यतमपदेन द्वयोस्त्रयाणां वा ग्रहणस्य सुतरामसंभवाच्च ॥

नहि—'तण्डुलैर्यवैर्वाजुहोति' इति वाक्येन तण्डुलयवयोर्होमकरणत्वे समुच्चयः कदाचिदपि कथञ्चिदपि बोध्यते ॥

अन्यच्च—'साच एकद्वित्र्यनुपादानादष्टधाभिन्ना' इत्यनेन यदष्टधाभेदेहेतुतया एकद्वित्र्यनुपादानं प्रतिपादितं तन्नसंभवत्येव । कुतइतिचेत् ॥

एकानुपादाने चतुर्विधा, (१) उपमेयलुप्ता, (२) उपानलुप्ता, (३) धर्मलुप्ता, (४) वाचकलुप्ता । इति ॥

द्विलुप्तापोढा—(१) धर्मवाचकलुप्ता, (२) धर्मोपमेयलुप्ता, (३) धर्मोपमानलुप्ता, (४) वाचकोपमेयलुप्ता, (५) वाचकोपमानलुप्ता, (६) उपमानोपमेयलुप्ताचेति ॥

त्रिलुप्तातु चतुर्विधा—(१) धर्मोपमानवाचकलुप्ता, (२) धर्मोपमेयवाचकलुप्ता, (३) वाचकोपमानोपमेयलुप्ता, (४) धर्मोपमानोपमेयलुप्ताचेति ॥

इत्थञ्च—एकद्वित्र्यनुपादानप्रयोज्यभेदानां चतुर्दशसंख्याकत्वा दष्टधात्वं नसंभवतीत्येतत् स्पष्टमेव ॥

अपरञ्च—चन्द्रिकोक्तरीत्या लक्षणपरतया विभागपरतया च वाक्यंद्विधाभित्वा कारिकायाव्याख्याने कारिकायामविद्यमानोपि काव्यदोष आरोपितो भवति । कथमितिचेदुच्यते ॥

' उक्तव्याख्यानुसारेण कारिकास्थपदाना मेवमन्वयो निष्पद्यते ' वर्ण्योपमानधर्माणामुपमावाचकस्य वा लोपे लुप्तोपमा साच एकद्वित्र्यनुपादानादष्टधाभिन्ने'ति ॥

ईदृशान्वयद्वये प्रथमान्वयाकांक्षितस्य ' लुप्तोपमा ' इति पदस्य एकद्वित्र्यादि द्वितीयान्वयघटकीभूतपदमध्यपातित्वात् वाक्यसङ्कीर्णात्मक काव्यदोषस्यापत्तिः । उक्तं हि विद्यानाथेन प्रतापरुद्रीये दोषप्रकरणे ' वाक्यान्तरपदैः कीर्णं ... ' इति लक्षणम् ॥

' मानेन महताऽस्माभिर्वने वक्रे न तिष्ठताम् ।
विन्ध्यस्य जीवितं तस्मो ... तृणं कृतम् ॥

इत्युदाहरणञ्च ॥ अत्र ' ... ...नेन यत् तृणं वक्रे नकृतं तदद्य विन्ध्यस्य वने तिष्ठतां नो ...वितं ...म् ' इति दोषस्य लक्षणसमन्वयप्रकारश्च कथितः ॥

कुवलयानन्दवाक्येतु ...संभवन्ति । अनवकाशात् । तथाहि । ' उपमेयादीनां चतुर्णां ' इत्येतत्समुच्चयार्थकचकारार्थः । ' मध्ये ' इत्येतत् ' वर्ण्योपमानधर्माणाम् ' ' उपमावाचकस्य ' इति निर्धारणार्थकषष्ठ्यर्थः । ' एकस्य द्वयो स्त्रयाणां वा प्रतिपादकशब्दाभावे ' इत्येतत् ' एकद्वित्र्यनुपादानात् ' इत्यस्यार्थः । ' अनुपादानात् ' इति प्रयोज्यत्वार्थिका पञ्चमी ' प्रतिपादकशब्दाभावे ' इति भावलक्षणसप्तम्या विवृता । प्रयोज्यत्वस्य लुप्तोपमेत्यत्र लुप्तपदार्थभूतलोपविशिष्टैकदेशभूतलोपेऽन्वयः ॥

तथाच—एकद्वित्र्यनुपादानप्रयोज्यलोपवत्युपमा, अष्टधाभिन्ना । वक्ष्यमाणोपलभ्योदाहरणानुसारेण सामान्यतोऽष्टधाभेदवतीत्यर्थः ॥

अतो नात्रपूर्वोक्तदोषाणामवकाश इति सहृदयैराकलनीयम् ॥



विषयः (४) उपमेयोपमा ।

कुवलयानन्दे उपमेयोपमालङ्कारस्योदाहरणतया 'खमिवजलं जलमिवखं' इत्यादिपद्यं प्रदर्श्य तदनन्तरमेवं लिखितम् । 'पूर्वत्र पूर्णश्रीरिति धर्मउपात्तः इह निर्मलत्वादिधर्मो नोपात्तः इति भेदः । उदाहरणद्वयेपि प्रकृतयोरेवोपमानोपमेयत्वकल्पनम् । राज्ञि धर्मार्थसमृद्धेः शरदि गगनसलिलादिनैर्मल्यस्य च वर्णनीयत्वात् । प्रकृताप्रकृतयोरप्येषासंभवति । यथावा ॥

'गिरिरिव गजराजोऽयं गजराज इवोच्चकैर्विभाति गिरिः ।
निर्झरइव मदधारा मदधारेवास्य निर्झरस्स्रवति' इति ॥

अस्य पद्यस्य चन्द्रिका 'गिरिरिवेति । अत्र गजःप्रकृतः । अयमिति प्रकृतपरामर्शिसर्वनामनिर्दिष्टत्वात् । अत एवोपक्रमादग्रेपि अस्य मदधारेत्यन्वयोबोध्यः' इति ॥

अत्र 'प्रकृताप्रकृतयोरप्येषा संभवति' इत्युक्त्वा, यथावेत्यादिना 'गिरिरिवे' ति पद्यमुदाहरतः कुवलयानन्दकर्तुः गिरिगजराजयोर्मध्ये कस्यप्रकृतत्वेन कस्यवाऽप्रकृतत्वेन विवक्षास्तीतिविचारे 'गजराजोऽय' मितिगजराजस्यायमितिविशेषणात् इदं पदस्य प्रत्यक्षविषयवाचकत्वा द्गजराजस्य प्रकृतत्वम् । गिरौतादृशविशेषणाद्यभावादप्रकृतत्वं विवक्षितम् । इतिचेत् ॥

पद्यस्य चतुर्थपादे 'मदधारेवास्य निर्झरस्स्रवति' इत्यत्र 'अस्यनिर्झरः' इति इदंपदवाच्यस्य गिरेस्संबंन्धी निर्झरः मदधारेव स्रवतीत्युक्त्या गिरेरपीदंपदनिर्दिष्टत्वात्प्रकृतत्वमेवापततीत्यस्मिन्नपिपद्ये गिरिगजराजयो रुभयोरपि प्रकृतत्वमेवेति, 'प्रकृताप्रकृतयोरप्येषासंभवती' त्युक्ति स्स्वोदाहृतपद्यविरुद्धेति स्पष्टमेव ॥

ननु —एतादृशविरोधश्चान्द्रिकाकारेण परिहृतः, 'अत्र गजः प्रकृ-

तः, अयमिति प्रकृतपरामर्शिसर्वनामनिर्दिष्टत्वात् अत एवोपक्रमादग्रेपि अस्यमदधारा ' इत्यन्वयोबोध्यः " इति लिखता । इतिचेत् ॥

सत्यम् । यद्यपि, ' अस्यमदधारा ' इत्यन्वयकथनेन गजराजस्यैव प्रकृतत्वं गिरेरप्रकृतत्वञ्च संपाद्य ' प्रकृताप्रकृतयोरप्येषासंभवती'ति दीक्षितवचनं समीकृतम् ॥

तथापि, पद्यकर्तुःकवेरुपरिदोषोऽविद्यामानएव दीक्षितै रारोपितइति प्रतिपादितं भवति । तथाहि ॥

उक्तोदाहरणश्लोके कविना चतुर्ष्वपि पादेषु चत्वारो वाक्यार्थाः प्रत्येकं निवेशिता निराकांक्षबोधजनकाः ॥

एवं सति चतुर्थवाक्यघटकीभूतस्य अस्येतिपदस्य तृतीयवाक्यघटकमदधारापदेनान्वये कथिते ' स्वभिन्नवाक्यघटकीभूतस्वाकांक्षितपदवत्त्वरूपवाक्य सङ्कीर्णताख्यकाव्यदोषः कवेरुपर्यारोपितो भवति ॥

ननु किं कुर्मः सेयमुभयतः पाशारज्जुः । चन्द्रिकोक्तरीत्या पदान्वयाङ्गीकारे काव्यदोषः । तद्भिया यथास्थितान्वयाङ्गीकारे दीक्षितवचनविरोधः । इति चेत् ॥

यथा दीक्षितोक्तिरपि रक्षिता भवेत् ॥ काव्यदोषविसरश्च नापतेत् तथैव वर्णनीयम् ॥

तथैवेदानीं वर्ण्यते ' खमिवजल ' मित्यादिपद्ये यथोपमेयोपमात्रयंवर्तते, तथा ' गिरिरिवेति ' पद्येप्येकैकास्मिन्नर्धे एकैका उपमेयोपमा वर्तते ॥ पूर्वार्धे ' गजराजोऽय ' मितीदंपदनिर्देशाद्गजराजस्य प्रकृतत्वम् गिरेरप्रकृतत्वम् उत्तरार्धगतोपमेयोपमायां ' अस्य निर्झर ' इति इदंपदनिर्देशाद्गिरिगतनिर्झरस्य वर्णनीयतया प्रकृतत्वेन मदधाराया अप्रकृतत्वमितिविवक्षया प्रकृताप्रकृतगोचराया उपमेयोपमाया द्वे उदाहरणे एकेनैवपद्येन प्रदर्शिते इत्युक्तौ काव्यदोषंविना दीक्षितो-

क्तिस्साधिता भवति ॥ गजस्यप्रकृतत्वे गिरेरप्रकृतत्वम् । गिरेः प्रकृतत्वे गजस्य अप्रकृतत्वमिति ॥

अत एवचित्रमीमांसाया मस्यैवालङ्कारस्येदमेवपद्यमुदाहृत्य लिखित न्दीक्षितैः । 'अत्रोपमेयोपमाद्वयस्य परस्परानुगृहीतत्वेन विच्छित्तिविशेषोऽधिकः' । इति ॥

इत्थञ्च--चन्द्रिकायां 'अत एवोपक्रमादग्रेप्यस्यमदधारा, इत्यन्वयोबोध्यः' इति लेखनमनुपयुक्तम् । चित्रमीमांसोक्तदीक्षितवचनविरुद्धञ्च ॥

ननु एकेनैवकविना एकस्मिन्नेवपद्ये 'अयङ्गजराजः' 'अस्यनिर्झरः' इति गिरिगजराजयोरुभयोरपीदंपदेन प्रतिपादनादुभयोरपि प्रत्यक्षत्वमङ्गीकरणीयम् ॥

किञ्च—गजराजस्य गिरिसानुष्वेव सञ्चारः प्रसिद्धः । इत्थञ्च कविर्वाक्यसङ्कीर्णदोषासङ्कीर्णमेव गिरिगजराजयो रुभयोरपि प्रकृतयोरेवोपमेयोपमामाहेति स्वरसतया प्रतीयते नतु प्रकृताप्रकृतयोरितिचेत्? अत्र सहृदयहृदयम्परंशरणम् ॥

॥ इत्युपमेयोपमाविचारः ॥



विषयः (५) अथ प्रतीपालङ्कारविचारः ।

'प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ।
त्वल्लोचनसमंपद्मं त्वद्वक्त्रसदृशोविधुः' ॥

इति कुवलयानन्दमूलकारिका ॥

अस्याः कारिकाया व्याख्यारूपतया कुवलयानन्दे प्रतीपालङ्कारलक्षणमुक्तम् 'प्रसिद्धोपमानोपमेयभावः प्रातिलोम्यात्प्रतीपम्' इति ॥

पाठान्तरन्तु 'प्रसिद्धोपमानोपमेयभावप्रातिलोम्यात्प्रतीपम्' इति विसर्गरहितम् ॥

चन्द्रिकायां पाठद्वयमप्येवं व्याख्यातम् तत्र सविसर्गपाठएवं व्याख्यातः, 'प्रसिद्धोपमानस्य उपमेयभावः उपमेयत्वं प्रतीपं प्रतीपपदवाच्यम्। कुतः ? प्रातिलोम्यात् प्रसिद्धोपमानप्रतिकूलत्वात्'। इति ॥ अविसर्गपाठश्चैवं व्याख्यातः, 'प्रसिद्धोपमानस्य य उपमेयभावः तस्य प्रातिलोम्यात् उपमानप्रतिकूलत्वात्, उपमानस्योपमेयत्वकल्पनं प्रतीपमित्युच्यते इति व्याख्येयम्। नतु प्रसिद्धस्योपमानोपमेयभावस्य वैपरीत्यादितियथाश्रुतरीत्या। एवं विधप्रातिलोम्यस्य तृतीयपञ्चमप्रतीपभेदाव्यापित्वेन प्रतीपपदप्रवृत्तिनिमित्तत्वायोगात्' इति। 'एवञ्चोक्तप्रकारेणोपमानप्रातिकूल्यस्य प्रतीपपदप्रवृत्तिनिमित्तत्व कथनेन 'प्रसिद्धोपमानप्रतिकूलधर्मः प्रतीपमि' ति प्रतीपपञ्चकसाधारणं सामान्यलक्षण मिति सूचितम्। अत एव, पञ्चमप्रतीपव्याख्यानावसरेवक्ष्यति 'उपमानप्रातिलोम्यादि' ति। प्रतिकूलत्वञ्च तिरस्कारप्रयोजकत्वम्। एतस्य सकलप्रतीपभेदसाधारण्यं तत्रतत्र स्फुटीकरिष्यते' इति च ॥

तत्र प्रथम कुवलयानन्दोक्तलक्षणस्य चन्द्रिकोक्तव्याख्यानुसारेण पञ्चस्वपि प्रतीपभेदेषु लक्षणसमन्वय स्संभवति नवेति विचार्यते ॥

तत्रेयञ्चन्द्रिका—प्रसिद्धोपमानस्य उपमेयभावः उपमेयत्वं प्रतीपं प्रतीपपदवाच्यम् कुतः ? प्रातिलोम्यात् प्रसिद्धोपमानप्रतिकूलत्वात्' इति ॥

एतदनुसारेण प्रथमप्रतीपे 'त्वल्लोचनसमंपद्मं' इत्यत्र समन्वयः। प्रसिद्धं यदुपमानं पद्मं कविजनप्रसिद्ध्या पद्मस्योपमानत्वात्। तस्य पद्मस्य उपमेयभावः उपमेयत्वं प्रकृते प्रतिपादितम्। लोचनस्यात्रोपमानतया पद्मस्योपमेयतयाचोपमानप्रातिकूल्यकथनात् ॥

द्वितीयप्रतीपेतु 'अलङ्गर्वेण ते वक्र कान्त्या चन्द्रो भवादृशः' इत्यत्र कविजनप्रसिद्धोपमानस्य चन्द्रस्योपमेयत्व कथनात्समन्वयः ॥

तृतीयप्रतीपे 'कःक्रौर्यदर्पस्ते मृत्यो त्वत्तुल्यास्सन्तिहि स्त्रियः' इत्यत्रतु कविजनप्रसिद्धोपमानस्य मृत्योः 'त्वत्तुल्या' इत्युपमानत्वमेव, स्त्रीणामुपमेयत्वमेवच कथितमिति प्रसिद्धोपमानस्योपमेयभावोनास्तीत्यव्याप्तिः ॥

चतुर्थप्रतीपे 'मुधापवादो मुग्धाक्षित्वन्मुखाभङ्किलाम्बुजम्' इत्यत्र कविजनप्रसिद्धोपमानस्याम्बुजस्योपमेयत्वं, 'त्वन्मुखाभ' मिति मुखस्योपमानत्वञ्च कथितमिति लक्षणसमन्वयः ॥

पञ्चमप्रतीपे 'दृष्टञ्चेद्वदनन्तस्याः किं पद्मेन किमिन्दुना' इत्यत्रतु कविजनप्रसिद्धोपमानयोः पद्मेन्द्वो रुपमेयभावो नोक्तः । इत्यव्याप्तिः ॥ इति सविसर्गपाठव्याख्यायामव्याप्तिः प्रतिपादिता । अविसर्गपाठव्याख्याचेयम् ॥

'प्रसिद्धोपमानस्य य उपमेयभावः तस्य प्रातिलोम्यात् । उपमानप्रातिकूलत्वात् । उपमानस्योपमेयत्वकल्पनं प्रतीपमित्युच्यते इति व्याख्येयम्' । इति ॥

अस्यां व्याख्यायां तस्य प्रातिलोम्यादिति विग्रहवाक्य घटकीभूततच्छब्दोत्तरषष्ठ्याः वृत्तित्वमर्थः । वृत्तित्वस्य प्रातिलोम्येऽन्वयः । उपमेयभावः उपमेयत्वम् । प्रातिलोम्यं प्रतिकूलत्वम् । तथाच प्रसिद्धोपमानस्य चन्द्रादे र्यदुपमेयत्वं तद्वृत्ति प्रतिकूलत्वमितिबोधः । प्रतिकूलत्वमुपमेयत्व वृत्तिचेत्किंनिरूपितन्तदिति शङ्कायां तां परिहरन्प्रातिलोम्यादितिपदं व्याचष्टे ॥ उपमानप्रतिकूलत्वादिति । इत्थञ्च उपमानस्योपमानत्वं सहजम् । उपमेयत्वन्तु प्रतिकूलमिति फलितोऽर्थः । फलितार्थमेवाह उपमानस्योपमेयत्वकल्पनं प्रतीपमित्युच्यत इति ॥

एवञ्च—उपमानस्योपमेयत्वकल्पनरूप प्रतीपलक्षणस्य सविसर्गपाठव्याख्यानोक्तरीत्यैव तृतीयपञ्चमप्रतीपभेदयो रव्याप्तिस्स्फुटैव ॥

अथ—चन्द्रिकाकारेण प्रतीपपञ्चकसाधारणतयोक्तं सामान्यलक्षणं पञ्चस्वपि प्रभेदेषु समन्वितं भवति नवेति विचार्यते ॥

इदन्तु तेनोक्तम् । 'प्रसिद्धोपमानप्रतिकूलधर्मः प्रतीपम् । प्रतिकूलत्वञ्च तिरस्कारप्रयोजकत्वम्' इति ॥ 'एतस्य च सकलप्रतीपभेदसाधारण्यं तत्रतत्र स्फुटीकरिष्यते' इति च ॥

इत्थञ्च—'प्रसिद्धोपमानतिरस्कारप्रयोजकधर्मः प्रतीपम्' इति फलितम् ॥

अत्र—प्रसिद्धोपमानस्य तिरस्कार इति षष्ठीतत्पुरुषाङ्गीकारे प्रसिद्धोपमानकर्मक तिरस्कारलाभा 'दलङ्कर्वेणतेवक्र' इत्यादि द्वितीयप्रतीपोदाहरणे उपमेयस्य वक्रस्यैव तिरस्कारात् प्रसिद्धोपमानकर्मकतिरस्काराभावादव्याप्तिः तद्वारणाय उपमानेन तिरस्कारः (अर्थादुपमेयस्य) इति तृतीयातत्पुरुषाङ्गीकारे 'कःक्रौर्यदर्पस्तेमृत्यो' इत्यादि तृतीयप्रतीपोदाहरणे प्रसिद्धोपमानभूत मृत्युकर्मक तिरस्कारस्यैवोक्त्या प्रसिद्धोपमानेन तिरस्कारो नास्तीत्यव्याप्तिः ॥

किञ्च—पूर्वोक्तरीत्या प्रसिद्धस्योपमानस्य य उपमेयभावः उपमेयत्वं तदेव प्रतीपमिति लक्षणस्य 'प्रतीपमुपमानस्योपमेयत्व प्रकल्पनम्' इति मूलच्छायानुसारिणः 'त्वल्लोचनसमंपद्म' मित्यादि प्रथमप्रतीपोदाहरणे समन्वये संभवत्यपि प्रतीपसामान्यलक्षणोक्तरीत्या प्रसिद्धोपमानस्य पद्मादेः 'अलङ्कर्वेणते' 'कः क्रौर्यदर्पस्ते' इत्यादिरीत्या तिरस्कारानुक्तया अव्याप्तिः ॥

अपिच—चतुर्थप्रतीपोदाहरणे, 'मुधापवादोमुग्धाक्षि त्वन्मुखा-

भङ्किलाम्बुजम् ' इत्यत्र प्रसिद्धोपमानस्याम्बुजस्योपमेयत्वं, ' त्वन्मुखाभ ' मित्युपमेयस्य मुखस्योपमानत्वञ्च कल्पितमपि तयोर्मुधापवादत्वोक्त्या उपमानस्योपमेयत्वकल्पनमपिनास्ति । ' अलङ्वैणते ' ' कः कौर्यदर्पस्ते ' इत्यादिरीत्या उपमानस्य तिरस्कारोपि नास्ती त्यव्याप्तिः ॥

तथाच—चन्द्रिकाकारेण सेयमुभयतःपाशारज्जुस्स्वयमेवसमासादिता । यत्पञ्चानामपि प्रतीपभेदानां सामान्यलक्षणकथने महान्प्रयासोऽङ्गीकृतः । नहिपञ्चानामपि सामान्यलक्षणं कथनीयमिति वेदानुशासनम् ॥

कुवलयानन्देपि दीक्षितैः पञ्चानामपि प्रत्येकमेव लक्षणमुक्तम् । तथाहि । कविजनप्रसिद्धोपमानस्योपमेयत्वकथनं प्रथमम् । प्रसिद्धोपमानस्योपमेयत्वमेवोपमेयतिरस्कारविशिष्टं द्वितीयम् । प्रथमप्रतीपापेक्षयोपमेयतिरस्काररूपाधिकांशस्य चमत्कारोपस्कारकत्वात् । उपमेयतिरस्काररूपद्वितीयप्रतीपापेक्षया उपमानातिरस्काररूपतृतीयप्रतीपस्य प्रतीपत्वात्प्रतीपत्वम् ॥ चतुर्थे प्रसिद्धोपमानस्योपमेयत्वमुक्तमपि तदनिष्पत्तिश्चमत्कारोपस्कारिणीति प्रतीपत्वम् । उपमानकैमर्थ्यं पञ्चमं प्रतीपमिति ॥ नतु सामान्यलक्षणमुक्तम् ॥

प्रतापरुद्रीयसाहित्यरत्नाकरादिषु प्रथमपञ्चमप्रतीपौ द्वावेवनिरूपितौ ॥ काव्यप्रकाशकारिकायामपि पूर्वोक्तौ द्वावेवप्रभेदावुक्तौ वृत्तिग्रन्थेत्वन्यावपि द्वौ प्रभेदावुदाहृतौ ॥ आचार्यदण्डीतु—अलङ्काराणामियत्तामेवनिराचकार तथाचोक्तंकाव्यादर्शे ॥

' काव्यशोभाकरान्धर्मानलङ्कारा न्प्रचक्ष्महे ।
तेचाद्यापिविकल्प्यन्ते कस्तान्कार्त्स्न्येनवक्ष्यति ॥
किन्तुबीजं विकल्पानां पूर्वाचार्यैः प्रदर्शितम् ।
तदेव प्रतिसंस्कर्तुमयमस्मत्परिश्रमः ' । इति ॥

अत्र अद्यापि इत्यपिना उत्तरत्रापि सुधीभिः कल्पिष्यमाणतयाऽलङ्काराणामियत्ता नास्तीत्युक्तम्। चमत्कृतिप्रयोजकीभूतार्थविशेषाणां तत्तद्बुद्धिमात्रगोचरत्वेन तथातथा कल्पनात् ।

तथाच—तत्तदलङ्कारगतयावद्भेदानामनुगताकारेण केनचिद्भाव्यमिति किमियं राजाज्ञा ? यदिच—व्याख्याकर्तुरिदमपरंकौशलम् । यदनुगतलक्षणकरणमिति विभाव्यते । तदा दीक्षितोक्तप्रतीपलक्षणस्य 'प्रसिद्धोपमानोपमेयभावप्रातिलोम्यात्प्रतीपम्' इत्यस्यैव प्रतीपपदप्रवृत्तिनिमित्तबोधकत्वाच्च प्रतीपपञ्चकसाधारणसामान्यलक्षणत्वमङ्गीकरणीयम् ॥

तथैवाङ्गीकृत्य चन्द्रिकाकारेण सामान्यलक्षणमुक्तम् प्रसिद्धोपमानप्रतिकूलधर्मः प्रतीप' मिति ।

किन्तु—कुवलयानन्दोक्तसामान्यलक्षणस्य यथाश्रुतरीतिमनुसरन्तीं यां व्याख्यां तृतीयपञ्चमप्रतीपभेदाव्यापित्वेन चन्द्रिकाकारो निराचकार तामेव व्याख्यामवलम्ब्य पञ्चस्वपि प्रतीपभेदेषु लक्षणसमन्वयः कर्तव्यः । तथैवाक्रियते ॥

तथाहि प्रसिद्धःयः उपमानोपमेयभावःतस्य प्रातिलोम्यम् वैपरीत्यम् तस्मात् प्रतीपं भवति अर्थात्तादृशवैपरीत्यमेव प्रतीपसामान्यलक्षणम् । उपमानञ्चोपमेयञ्चोपमानोपमेये तयोर्भावौ तद्वृत्तिधर्मौ तौच्च उपमानवृत्त्युपमानत्वोपमेयवृत्त्युपमेयत्वरूपौ धर्मौ नविवक्षितौ, तयोरेवविवक्षयाखलु चन्द्रिकाकारेण तृतीयपञ्चमप्रतीपभेदयोरव्याप्तिः प्रदर्शिता ॥ किन्तु—'उपमानमुत्कृष्टगुणम् उपमेयमपकृष्टगुणम्' इति व्यवहारसिद्धावुत्कर्षापकर्षरूपौ धर्मौ । तद्वैपरीत्यंनाम उपमानस्यापकर्षः उपमेयस्योत्कर्षश्च ययाकयाचविधया प्रतीपमित्यर्थः ॥

लक्षणसमन्वयश्चेत्थम् । 'त्वल्लोचनसमंपद्म' मित्यत्र प्रथमप्रतीपे प्रसिद्धोपमानस्यपद्मस्योपमेयत्वकथनात्प्रसिद्धोपमेयस्यलोचनस्यो-

पमानत्वकल्पनाच्च उत्कर्षापकर्षयोर्वैपरीत्यमिति, प्रसिद्धस्योपमानोपमेयभावस्य प्रातिलोम्यमस्तीति समन्वयः॥ द्वितीयप्रतीपेच प्रथमप्रतीपवदेव प्रसिद्धोपमानस्यचन्द्रस्योपमेयत्वम्, प्रसिद्धोपमेयस्यवक्रस्य 'भवादृश' इति उपमानत्वञ्च कल्पितमित्युत्कर्षापकर्षयोर्वैपरीत्यमिति समन्वयः॥ अत्र—'अलङ्कर्वंणतेवक्र' इति वक्रस्याधिक्षेपस्तु प्रथमप्रतीपवैलक्षण्यमात्रप्रतिपादनाय, नतु प्रतीपत्वप्रयोजकतया। अतः 'अधिकन्तु प्रविष्टम् नतद्धानये' इति न्यायेन 'चन्द्रोभवादृशः' इति प्रतिपादितोपमानभूतचन्द्रापकर्षस्य न बाधकः॥ तृतीयेतु 'कः क्रौर्यदर्पस्तेमृत्यो' इत्यत्र प्रसिद्धोपमानस्य मृत्यो र्यत्किञ्चिन्निरूपितोपमानभावमप्यसहमानस्य स्त्रियःप्रत्युपमानत्वकथनमात्रादेव 'कः क्रौर्यदर्पस्ते' इत्यनेनापकर्षः कथित इति समन्वयः॥ चतुर्थे—'मुधापवादो मुग्धाक्षि त्वन्मुखाभङ्किलाम्बुजम्' इत्यत्र प्रसिद्धोपमानभूतस्याम्बुजस्य 'त्वन्मुखाभ' मिति मुखनिरूपितोपमेयत्वकथनात्प्रसिद्धोपमानोपमेयभावस्यवैपरीत्यमस्तीति तत्रापि मुधापवादत्वोक्त्या मुखनिरूपितोपमेयताया अपि अनर्हत्वप्रतिपादनेनाम्बुजस्यात्यन्तापकर्षः प्रतिपादित इति समन्वयः॥ पञ्चमे—'दृष्टश्चेद्वदनंतस्या' इत्यादौ प्रसिद्धोपमेयस्य मुखस्यैव चन्द्रादिकार्यभूताह्लादादिकारित्वेन चन्द्रादेःप्रसिद्धोपमानभूतस्यानर्थक्यकथनादत्यन्तापकर्षः कथितो भवतीति प्रसिद्धस्योपमानोपमेयभावस्य प्रातिलोम्यमस्तीति समन्वयः॥

अतएव—काव्यप्रकाशे प्रतीपपदप्रवृत्तिनिमित्तकथनावसरे 'उपमेयस्योपमानप्रतिकूलवर्तित्वा' दित्युक्तं मम्मटभट्टेन। तद्व्याख्याताचक्रवर्त्यपि 'तथाचोपमानापकर्षबोधानुकूलोव्यापारः प्रतीपम् इति सामान्यलक्षणं बोध्यम्' इति निजगाद॥

नन्वेषमेवाभिप्रायश्चन्द्रिकाकारस्य, तेनापि 'उपमानतिरस्कारप्रयोजकधर्मःप्रतीप' मिति सामान्यलक्षणकथनात् चक्रवर्त्युक्तलक्षणघ-

टकीभूतापकर्षशब्दस्थाने चन्द्रिकाकारेण तिरस्कारशब्दप्रयोगाच्चोभयोस्समानार्थकत्वात् । तथाच एतावताप्रबन्धेनापादितादोषाः ज्वलनज्वालाग्रगृहीततूलशकलायन्ते इति चेन्न ॥

द्वितीयप्रतीपलक्षणकारिकावाक्ये वर्ण्यस्योपमेयस्यानादरः प्रतीपालङ्कारतयोक्तः । कारिकोक्तानादरश्च 'गर्वपरिहारोपी' ति चन्द्रिकाकारेण व्याख्यातः, स एवोदाहरणवाक्ये 'अलङ्गवर्णतेवक्र' इत्युदाहृतः । स एवदीक्षितैः 'तावता तस्य तिरस्कारो द्वितीयं प्रतीपमिति तिरस्कारपदेन विवृतः' सएव तिरस्कारः तिरस्कारशब्देनैव चन्द्रिकाकारेण स्वोक्तसामान्यलक्षणे निवेशितः ॥

इत्थञ्च—उपमानमुत्कृष्टगुणम्, उपमेयमपकृष्टगुणमिति न्यायसिद्धापकर्षशब्दपर्यायत्वन्तिरस्कारशब्दस्य न संभवतीत्यर्थभेदात् ॥ किञ्च—'एतस्य सकलप्रतीपभेदसाधारण्यं तत्रतत्र स्फुटीकरिष्यते' इत्युक्तवता चन्द्रिकाकारेण क्वचिदप्यपकर्षशब्दो न प्रयुक्तएव । अपितु तिरस्कारशब्दः क्वचित्क्वचित्प्रयुक्तः ॥ अतः—'उपमानापकर्षबोधानुकूलव्यापारः प्रतीप' मिति चक्रवर्त्युक्तलक्षणसमानार्थकत्वमस्य कथञ्चिदपि नोन्नेतुं शक्यते ॥

तथाच—दीक्षितादिप्राचीनसूरि भावानवगाहि अव्याप्तिदोषग्रस्तञ्च चन्द्रिकाकारोक्त प्रतीपसामान्यलक्षणमिति सुधीभिर्विभावनीयम् ॥

॥ इति प्रतीपालङ्कार विचारः ॥



विषयः (६) अथ रूपकविचारः । (क)

कुवलयानन्दकारिकायामनुभयाभेदरूपकोदाहरणस्य 'अयंहि धूर्जटिस्साक्षाद्येनदग्धाः पुरः क्षणात्' इत्यस्यव्याख्या चन्द्रिकायामेवं वर्तते ॥

'अयं हीत्यादि । अयम्-वर्ण्यमानोराजा येन-हेतुना पुरः-नगर्यः—शिवस्यापि त्रिपुरदग्धृत्वात्सएवायमिति भावः' इति ॥

अस्यांव्याख्यायाङ्कारिकाघटकस्य 'येन' इतिपदस्य 'हेतुना' इतिविवरणंकृतम् ॥

अस्य वाक्यस्यान्यथापिव्याख्यासंभवतिनेतिविचारे, अन्यथापि व्याख्याकर्तुंशक्यते ॥

यथा—'अयम्-वर्ण्यमानःप्रकृतोराजा, इदंशब्दस्यप्रत्यक्ष विषये शक्तत्वात् । साक्षात् प्रत्यक्षः–धूर्जटिः–शिवः, येन–राज्ञा–उत्तर वाक्यगतत्वादयंयच्छब्दस्तच्छब्दं नापेक्षते पुरः-शत्रुनगर्यः, तिस्रः पुर्यश्च क्षणात् दग्धाः-क्षणेनभस्मीकृताः' इति ॥

अत्र—प्रत्यक्षे राज्ञि शिवतादात्म्यमस्यराज्ञःपुरदग्धृत्वेनस्थाप्यते, शिवे पूर्वमेवसिद्धंपुरदग्धृत्वमद्यास्मिन्नपिप्रतिपाद्यशिवतादात्म्यं स्थापनीयम् । अतो येनेत्यस्य 'राज्ञा' इत्यर्थस्स्वारसिकः ॥

ननु—त्वदुक्तव्याख्यानेपि राज्ञिशिवतादात्म्यस्थापनहेतुः पुरदग्धृत्वमेवेति प्रतिपादितम् । 'येनदग्धाः' इत्यस्य हेतुगर्भत्वात्, हेतुत्वस्यार्थसिद्धत्वापेक्षया शाब्दत्वे स्वारस्यमितिकृत्वा 'येने' त्यस्य 'हेतुना' इत्येव व्याख्या साध्वी इति चेत् ॥

उच्यते—पुरो दग्धा इत्युक्ते किं कर्त्राकांक्षावश्यंजायते? उतहेत्वाकांक्षा? इति विचारे, कर्त्राकांक्षाप्रबला । कर्त्राकांक्षाया एव हेत्वाकांक्षापेक्षया प्रथममुत्थानात् । अतो 'राज्ञा' इत्यर्थसाधुः । हेतुकथनेपि केनदग्धा इति कर्त्राकांक्षा जागर्त्येव ॥ किञ्च—पूर्ववाक्ये 'अयम् धूर्जटिः' इति राजधूर्जट्योरुभयोर्निर्देशादुत्तरवाक्यस्थेन यच्छब्देन धूर्जटेरपि ग्रहणसंभवात् शिवस्य पुरदग्धृत्वं सिद्धमेवेति नतदिहापेक्षितामिति प्रकृते राजन्येव साध्यमानं शिवतादात्म्यं

स्वसामानाधिकरण्येन पुरदग्धृत्वं हेतुमपेक्षते 'राजायंशिवएव पुरग्धृत्वादि'ति ॥

तस्मात्—'राज्ञा' इत्यर्थानङ्गीकारे कर्तृपदस्यैवाभावान्न्यूनतादोषः । धूर्जटिना इत्यपि वक्तुंशक्यत्वेन तदर्थकत्वे प्रयोजनाभावात्, हेतुनेत्यर्थकथनेपि केनदग्धा इत्याकांक्षायां 'राज्ञा' इति पदाध्याहारापातात्, येनेत्यस्य हेतुनेत्येवार्थस्य कारिकाकर्तुस्तात्पर्यविषयत्वे 'यस्माद्दग्धाः' 'यतोदग्धाः' इति वा पाठस्यौचित्यापाताच्च 'राज्ञा' इत्येवार्थस्साधुः ॥



विषयः (७) रूपकम् (ख)

अनुभयाभेदरूपकोदाहरणतया कुवलयानन्ददर्शितस्य 'चन्द्रज्योत्स्नाविशदपुलिनेसैकतेस्मि' न्नित्यादिपद्यस्य व्याख्याने चन्द्रिकायामेवं दृश्यते ॥ 'चन्द्रज्योत्स्नावत् विशदं श्वेतम् पुलिनं यस्य तथाभूते अस्मिन् सरयूसैकते' इति ॥ एतदपेक्षया 'चन्द्रज्योत्स्नया विशदम् स्पष्टम् पुलिनम् यस्य' इति विग्रहस्साधुः ॥ चन्द्रिकोक्तरीत्याविग्रहे पुलिनस्यधावल्ये ज्योत्स्नाया उपमानत्वमात्रं सिद्ध्यति । ज्योत्स्नापेक्षया कुन्देन्दुक्षीरशङ्खानां धावल्यातिशयात्तदन्यतमस्यैवोपमानत्वं वक्तुमुचितम् ॥ ज्योत्स्नया विशदमिति विग्रहेतु 'वादद्यूत च्चिरतर सिद्ध युवन् शब्दानां स्वारस्यं संभवति ॥

सिद्धानामह्नि नदीतीरे सर्वजनसंमर्दे आह्निकाद्यनुष्ठानकाले चिरतरं वादद्यूतस्य सर्वथा अवकाशाभावात् । रात्रौ शरत्पार्वणचन्द्रचन्द्रिकया स्पष्टदृष्टपुलिने मनसोऽत्यन्ताह्लादजनके सरयूसैकते विविक्ते द्वयोरेव सिद्धतरुणयोर्द्यूतवदविश्रान्तोवादस्सर्वां रात्रिं प्रवृत्त इत्यार्थस्फोरणाद्देशकालकार्याधिकारिणां सर्वेषामानुरूप्यं सिद्ध्यति ॥

ज्योत्स्नावद्विशदेति व्याख्यानेतु पुलिनस्य धावल्यमात्रमुक्तं भवति नतूक्तस्वारस्यम् । विशदपदस्य धवलमित्यर्थंविहाय स्पष्टमिति विवरणात्केवलभूतलापेक्षया पुलिनस्य रम्यत्वाद्रात्रावपि सिकताशिथिलावयवास्स्पष्टंप्रतीयन्त इति सैकतस्यरम्यत्वं ज्योत्स्नाया आह्लादकत्वञ्च प्रतिपादितं भवति ॥



## विषयः (८) रूपकम् (ग)

कुवलयानन्दे अनुभयताद्रूप्यरूपकालङ्कारोदाहरणतया पद्यमिदं विलिखितम् ॥

‘ किं पद्मस्य रुचिं नहन्ति नयनानन्दं विधत्ते न किं
　　वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरश्शीतांशुरुज्जृंभते
　　दर्पस्स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ’ । इति ॥

चन्द्रिकादोषोद्भावनाय मयेदं व्याख्यायते प्रथमम् । चन्द्रोदयकाले सौधाग्रस्थितयोः कान्तयोः कान्तांप्रति कान्तस्योक्तिरियम् । अयि दयिते ! तववक्त्रेन्दुः आलोकमात्रेण स्वस्यप्रकाशमात्रेण स्वकर्मैकदर्शनेनैवच ‘ अलोकौ दर्शनोद्योतौ ’ इति कोशात् । पद्मस्य कमलस्य सम्बन्धिनीं रुचिं विकासरूपांकान्तिं कमलविषयिणीं प्रीतिञ्च ननिहन्तिकिम् न परिहरति किं ? परिहरत्येवेत्यर्थः आलोकमात्रेण पूर्ववदर्थः नयनानन्दं नविधत्ते किम् ? विधत्तएवेत्यर्थः द्रष्टृणामित्यर्थसिद्धम् । आलोकमात्रेण पूर्ववदेवार्थः झषकेतनस्यझषाणां मत्स्यानां उपलक्षणतया तिमितिमिङ्गिलादियादसात् केतनस्य निवासभूतस्य समुद्रस्य । झषः मीनः केतनम् ध्वजः ध्वजेवा यस्य तस्य मन्मथस्य च ‘ केतनन्तु ध्वजे कार्ये निमन्त्रणनिवासयोः ’ इत्यजयकोशात् ।

वृद्धिम् अभिवृद्धिम् । नकुरुते किम्? करोत्येवेत्यर्थः । चन्द्रोदये समुद्रस्य दयितामुखदर्शने कामस्यचाभिवृद्धिः प्रसिद्धा । एवं प्रसिद्धेन्दुकार्यकारित्वं वक्त्रेन्दौ प्रतिपाद्य, प्रसिद्धेन्दोरमृतकिरणत्वेनामृताश्रयत्वाद्दर्पश्चेत् वक्त्रेन्दोरप्यधरामृताश्रयत्वमस्त्येवेत्याह वक्त्रेन्दाविति । एतादृशे प्रसिद्धचन्द्रकार्यकारिणितववक्त्रेन्दौ सत्यपि अयमपरश्शीतांशुः यत् यस्मात्कारणात् उज्जृम्भते उदेति तदित्यध्याहार्यम् यत्तदोर्नित्यसम्बन्धात् तस्मात्कारणादित्यर्थः अमृतेन दर्पस्स्यात् भवेत् संभावनायां लिङ् स्वस्मिन्विद्यमानेनामृतेन हेतुना दर्पस्संभाव्यतइत्यर्थः । चेत् एवंयदि दर्पस्संभाव्यतेयदीत्यर्थः इह वक्त्रेन्दौ बिम्बाधरे बिम्बफलाकारे अधरे तदपि अमृतमपि अस्त्येव तस्मादेकस्मिन्नप्यंशेवक्त्रेन्द्वपेक्षयास्वस्मिन्विशेषाभावाद्दर्पोऽनुपपन्नइतिभावः । तथाचोक्तांशे सर्वत्र वक्त्रेन्दोः प्रसिद्धचन्द्रकार्यकारित्वेन न्यूनाधिकभावाभावादनुभयरूपत्वम् । वक्त्रेन्दुं निर्दिश्य अयमपरश्शीतांशुरित्युक्त्या भेदस्य स्फुटत्वात्प्रसिद्धचन्द्रकार्यकारित्वकथनाच्च ताद्रूप्यरूपकत्वम् इति ॥

एवमक्लिष्टान्वयेन अनेकपदाध्याहारादिकंविना स्वारसिकार्थे सिद्ध्यत्यपि चन्द्रिकाकार एवं पद्यं व्याचख्यौ । किंपद्मस्येति । दयितांप्रति नायकस्योक्तिः तव वक्त्ररूपे इन्दुकार्यकारिणि सति अयमपरः प्रसिद्धः शीतांशुः चन्द्रः यदुज्जृंभते उदितोभवति तस्मात्तववक्त्रेन्दुः पद्मस्य रुचिं कान्तिं किंनहन्ति 'प्रयोजनमनुद्दिश्यनमन्दोपिप्रवर्तते' इतिन्यायात् प्रयोजनस्यान्यतस्संभवे तदुज्जृंभणस्यासङ्गतेः इति । किंनहन्तीतिकाका अपितु हन्त्येवेति पर्यवसाने तदुज्जृंभणं वृथेति प्रतीतिपर्यवसानम् । एवमग्रिमवाक्ययोरपि, झषोमत्स्यः केतनं चिह्नमस्य तथाभूतस्य समुद्रस्य कामस्यच । आलोकनमालोकः प्रकाशश्च तन्मात्रेण अमृतेन दर्पः अभिमानः उज्जृंभणहेतुस्स्याच्चेत् अयुक्तमेतत् यतः इहैव वक्त्रेन्दौ बिम्बाधरे तदप्यस्त्येव इतिसमुचितपदाध्याहारेणयोजनीयम्

यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दाक्षेपक्षमत्वान्नतदनुपादानेपि न्यूनपदत्वदोषः इति ॥

अस्यां व्याख्यायां 'अयमपरः प्रसिद्धःशीतांशुः चन्द्रः यदुज्जृंभते उदितोभवति तस्मात्तववक्त्रेन्दुः पद्मस्यरुचिं कान्तिम् किं नहन्ति ? किं नहन्तीतिकाका अपितुहन्त्येवेति' इति वर्तते ॥

अनयाचानुपूर्व्या 'प्रसिद्धश्चन्द्रोयस्मात्कारणादुदेति तस्मात्कारणात्तववक्त्रेन्दुः पद्मस्य कान्ति हन्त्येव' इत्यर्थोलभ्यते, तेनच प्रसिद्धचन्द्रोदयः कारणम् वक्त्रेन्दुकर्तृकपद्मकान्तिकर्मकहननंकार्यमिति फलति 'यत्सत्वे यत्सत्वं यदभावे यदभावः' इत्यन्वयव्यतिरेकसहचारौ कार्यकारणभावग्राहकौ, इत्येतत्सर्वशास्त्रज्ञसंमतम् । प्रकृतेऽपि तथाऽन्वयव्यतिरेकसहचारप्रचारेकृते, प्रसिद्धचन्द्रोदयसत्वे वक्त्रेन्दुकर्तृकपद्मकान्तिहननम् प्रसिद्धचन्द्रोदयाभावे वक्त्रेन्दुकर्तृकपद्मकान्तिहननाभावः इति पर्यवस्यति ॥

इत्थञ्च—किं नहन्तीत्यनन्तरं 'प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते इति न्यायात्प्रयोजनस्यान्यतरसंभवे तदुज्जृंभणस्यासङ्गतेः' इति तस्यैव लेखनं 'एषवन्ध्यासुतो याति खपुष्पकृतशेखरः' इत्यादिवदापद्यते, कुतइतिचेत् ? प्रसिद्धचन्द्रोदयात्पूर्वं तदुदयाभावेवा वक्त्रेन्दोः पद्मरुचिहनननयनानन्दविधानझषकेतनवृद्धिकरणानांतदुक्तरीत्या अभावेन प्रसिद्धचन्द्रकार्यकारित्वस्यैवाभावात्ताद्रूप्यरूपकत्वस्यैवहान्या मूलच्छेदापत्तेः ॥

यदिच—मूलसंरक्षणाय वक्त्रेन्दोः प्रसिद्धचन्द्रकार्यकारित्वमङ्गीक्रियते तदा प्रसिद्धचन्द्रोदयस्यैवावश्यकत्वापत्तिः तथासति 'प्रयोजनस्यान्यतरसंभवे तदुज्जृंभणस्यासङ्गतेः' इति स्ववाक्यविरोधः ॥

एवं विरुद्धव्याख्याकरणे किञ्चिद्बीजमापातितं चन्द्रिकाकारस्य । किन्तद्बीजमितिचेत् ? तदेवोत्तरत्र प्रकटीकृतन्तेन ' यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दाक्षेपक्षमत्वान्नतदनुपादानेपि न्यूनपदत्वदोषः ' इति कथयता । तथाच ' किं पद्मस्ये ' त्यादिपद्यकर्तुः कवे र्दुष्टकाव्यकरणजन्यामकीर्तिं परिहर्तुं प्रवृत्तस्तदकीर्तिं स्वयमेवोवाह । तथाहि ॥ यच्छब्दस्योत्तरवाक्यगतत्वे तच्छब्दाक्षेपक्षमत्वं काव्यप्रकाशादावुदाहृतम् । ' साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ' इत्यादौ ॥ तथा अत्रापि ' यदपरश्शीतांशुरुज्जृंते ' इति वाक्यस्योत्तरार्धगतत्वेन तद्वाक्यगतयच्छब्दस्योत्तरवाक्यस्थत्वेन पूर्वार्धान्वययोग्यतत्पदाक्षेपकत्व मुक्तमनेन ॥ काव्यप्रकाशोदाहरणसाम्य मस्योदाहरणस्य न संभवति । तत्रार्थस्वारस्यं विरुद्धार्थाभावश्च । अत्रतु तथायोजनायां न केवलं स्वारस्यभङ्गः किन्तु पूर्वोक्तरीत्या विरुद्धार्थाभिधानञ्च ॥

अस्मदुक्तव्याख्यारीत्या ' यदुज्जृंभते ' इत्यनन्तरं ' तदि ' त्यध्याहारे अक्लिष्टोऽन्वयः अन्वयस्वारस्यमर्थस्वारस्यञ्च ॥ न्यूनपदत्वदोषस्यतु कविकृतस्य न व्याख्यातारस्सहृदयावा प्रतिभुवो भवन्ति, यदिवस्तुतो दोषास्संभवन्ति नतेकथञ्चिदपिसमाधातुंशक्यन्तएव ॥ यथा— अनेनैव चन्द्रिकाकारेण कैतवापह्नुत्युदाहरणे ' रिक्तेषुवारिकथया विपिनोदरेषु ' इत्यादिपद्ये ' कथया विपिनोदरेषु ' इति पाठमेवावलम्ब्य पद्यं व्याख्याय, अन्ते ' अत्र अनभिहितवाच्यतादोषनिरासाय ' कथयापि वनोदरेषु ' इति पठनीयम् ' इति कवेर्दोषमुद्भाव्य तत्परिहाराय पाठभेदः कल्पितः, तथात्रापि न्यूनपदत्वदोषमुद्भाव्य तत्परिहाराय ' तत् ' इत्यध्याहार्यम्, इति लेखनीय मासीत् ॥ अस्मद्व्याख्यानरीत्या पूर्वार्धेन वाक्यार्थत्रयस्यापि निराकांक्षबोधजननात् उत्तरार्धे यच्छब्दस्य प्रथमवाक्यगतत्वात्तदुत्तरवाक्ये अपेक्षितस्य तच्छब्दस्याप्रयोगान्न्यूनपदत्वमेव ॥

यच्चोक्तम्—'झषो-मकरः केतनं चिह्नमस्य तथाभूतस्य समुद्रस्य कामस्यचे' ति—तत्र झषस्समुद्रचिह्नमिति प्रतिपादितम् । मत्स्यानां समुद्रचिह्नत्वं सरोनदीतटाकादिसाधारण्याद्व्यभिचारीति अस्मदुक्तरीत्या यादसां निवास इत्यर्थस्स्वरसः ॥ 'आलोकमात्रेणे' तिपदं, 'किं पद्मस्ये' त्यादिवाक्यत्रयेप्यावश्यकान्वयमपि एकत्रैवान्वयं प्रदर्श्य व्याख्यातम् ॥ किञ्च—उत्तरार्धे 'उज्जृंभणहेतुः' 'अयुक्तमेतत्' 'यतः' इत्यनपेक्षितपदत्रयाध्याहारदोषः । अस्मद्रीत्यातु नकश्चिद्दोषइति सुधीभिर्विभावनीयम् ॥

॥ इति रूपकविचारः ॥



विषयः (९) अथोल्लेखविचारः ।

कुवलयानन्दकारेणोल्लेखालङ्कारो द्विविध एव कारिकाभ्यां लक्षयित्वोदाहृत्यच व्याख्यातः, कारिकाद्वयश्चैतत् ॥

'बहुभिर्बहुधोल्लेखादेकस्योल्लेखइष्यते ।
स्त्रीभिःकामोऽर्थिभिस्स्वर्द्रुः कालश्शत्रुभिरैक्षिसः ॥
एकेनबहुधोल्लेखेऽप्यसौविषयभेदतः ।
गुरुर्वचस्यर्जुनोऽयं कीर्तौभीष्मश्शरासने' । इति ॥

अनयोः कारिकयोराद्या, जयदेवकृता अपरा तदालम्बनेन दीक्षितकल्पिता, प्रकारान्तरन्तु न लक्षितमुदाहृतञ्च ॥

कारिकाद्वयेन द्विविधोल्लेखस्याप्येवं लक्षणद्वयं निष्पद्यते । 'ग्रहीत्रनेकत्व प्रयुक्तमेकस्योल्लिख्यमानानेकप्रकारत्व' रूप उल्लेख एकः । 'ग्रहीतुरेकत्वेपि विषयानेकत्वप्रयुक्त मेकस्योल्लिख्यमानानेकप्रकारत्व' मपरउल्लेख इति ॥

एवं जयदेवकृतचन्द्रालोककारिकानुसारिव्याख्यारूपेण कुवलयानन्देन गृहीतकण्ठः कुवलयानन्दकर्ता स्वाभिलषितभेदान्तराभिधित्सया स्वतन्त्रं चित्रमीमांसानामकमलङ्कारग्रन्थं विरचय्य तत्रैवमुल्लेखालङ्कारमलक्षयत्स्वकृतकारिकाद्वयेन

'निमित्तभेदादेकस्य वस्तुनो यदनेकधा ।
उल्लेखनमनेकेन तमुल्लेखं प्रचक्षते ॥
गृहीतृभेदाभावेपि विषयाश्रयभेदतः ।
एकस्यानेकधोल्लेखमप्युल्लेखं प्रचक्षते' । इति ॥

कुवलयानन्दे चित्रमीमांसायाञ्च प्रथमभेद स्समानः । द्वितीयभेदस्तु कुवलयानन्दे 'विषयानेकत्वप्रयुक्तैकविशेष्यकोल्लिख्यमानानेकप्रकारत्वरूप एकएव । चित्रमीमांसायान्तु विषयानेकत्वेन सहाश्रयानेकत्वमपि सञ्जग्राह ॥

रसगङ्गाधरकारस्तु प्रथमभेदं ग्रन्थद्वयोक्तरीत्यैवोक्त्वा द्वितीयप्रभेदे स्वप्रतिभानुरूपं विषयाश्रयाभ्यांसह समानाधिकरणसम्बन्धिनौ द्वावपि संगृह्य चतुर्धा भेदं परिकल्प्य चत्वारि पद्यान्युदाजहार । द्वितीयलक्षणप्रभेदञ्चैवमूचे । 'यत्रासत्यपि ग्रहीतृनेकत्वे विषयाश्रयसमानाधिकरणसम्बन्ध्यन्यतमानेकत्वप्रयुक्तं एकस्यवस्तुनोऽनेकप्रकारत्व' मिति ॥

चन्द्रिकाकारस्तु रसगङ्गाधरोक्तद्वितीयप्रभेदसामान्यलक्षणे चन्द्रालोकोक्तप्रथमप्रभेदापेक्षितग्रहीत्रनेकत्वमपि सङ्गृह्योल्लेखसामान्यलक्षणमेवमूचे 'ग्रहीतृविषयाद्यन्यतमानेकत्वप्रयुक्तमेकस्योल्लिख्यमानानेकप्रकारत्वमुल्लेख' इति ॥ अस्मिन्लक्षणे विषयादीत्यादिपदेन रसगङ्गाधरोक्ताश्रयसमानाधिकरणसम्बन्धिनां ग्रहणं कर्तव्यम् ॥ इदञ्च सामान्यलक्षणं कुवलयानन्दकारिकाद्वयानुगुणंवा उतकुवलयानन्दानु-

गुण मितिविचारयामः ॥ कुवलयानन्दप्रदर्शितप्रथमकारिकायां 'ग्रही-त्रनेकत्वप्रयुक्तैकविशेष्यकोल्लिख्यमानानेकप्रकारत्वमुक्तम्भवति ॥ द्विती-यकारिकायां 'विषयानेकत्वप्रयुक्तैकविशेष्यकोल्लिख्यमानानेकप्रकारत्व-मुक्तंभवति ॥

तथाच—'ग्रहीतृविषयान्यतरानेकत्वप्रयुक्तैकविशेष्यकोल्लिख्य-मानानेकप्रकारत्व' मेवनिर्दुष्टंलक्षणम् ॥ अतः 'आदि' पदस्य 'अन्य-तम' पदस्यचप्रयोजनं नास्त्येव ॥ कुवलयानन्देपि कारिकावदेव लक्ष-णोदाहरणयोः प्रतिपादनात्तदनुरोधेनापि पूर्वोक्तयोः पदयोः प्रयोजनं नसिद्ध्यत्येव ॥

ननु—कारिकाकुवलयानन्दयो राश्रयसमानाधिकरणसम्बन्धि-नां ग्रहणाभावेपि रसगङ्गाधरोक्तरीत्या ग्रहणेऽधिकांशग्रहणान्नकापिहा-निरितिचेत् ? किमियम् कुवलयानन्दचन्द्रिका ? उतचित्रमीमांसाच-न्द्रिका ? आहोस्विद्रसगङ्गाधरमीमांसा ? नहीयम् चित्रमीमांसारसग-ङ्गाधरादिवत् स्वतन्त्रग्रन्थः येन यत्किञ्चिदपि स्वातन्त्र्येण ब्रूयात् । स्वमू-लग्रन्थानुपयुक्तेन स्वविरोधिनस्सकाशात् गृहीतेन किमनेन सामान्य-लक्षणेन ?

किञ्च—उपमाप्रकरणे कारिकाकुवलयानन्दयोः पूर्णालुप्ताभेदेन द्विविधत्वमेवप्रतिपादितम् नतुप्राचीनवदार्थी शाब्दीत्यादिभेदः प्रतिपादितः । चन्द्रिकायामपि तत्र प्राचीनरीत्या आर्थी शाब्दीत्यादि-भेदा नप्रदर्शिताः ॥ रूपकालङ्कारेऽपि कारिकाकुवलयानन्दयोः न्यूना-धिकानुभयाभेदताद्रूप्यरूपेण षड्विधत्वमेव प्रदर्शितम् । रूपकान्ते कुवलयानन्दे 'रूपकालङ्कारस्य सावयवत्वनिरवयवत्वादिभेदप्रपञ्चन-न्तुचित्रमीमांसायांद्रष्टव्य' मित्युक्तम् । तत्रतु चन्द्रिकाकारेण चित्रमी-मांसोक्ताः भेदाः प्रपञ्चिताः ॥

. तथाच—सार्वत्रिकं व्याख्यानस्य मूलानुरोधित्वं अस्यापि सांप्रदायिक मिति ज्ञायते ॥ तथाप्युल्लेखसामान्यलक्षणकरणेपरं स्वातन्त्र्यमवलम्बितंक्लेशयतिकुवलयानन्दाध्येतॄन् इत्यनुभवरसिका विजानन्तु ॥

॥ इत्युल्लेखविचारः ॥



## विषयः (१०) अथापह्नुतिविचारः (क)

' अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः ' । इति पर्यस्तापह्नुतिलक्षणम् । एतद्व्यस्य वाक्यस्यार्थः कुवलयानन्दे दृश्यते । ' यत्र-क्वचिद्वस्तुनि तदीयधर्मनिह्नवः अन्यत्र वर्णनीयेवस्तुनि तस्यधर्मस्यारोपार्थः पर्यस्तापह्नुतिः यथा चन्द्रे चन्द्रत्वनिह्नवः वर्णनीये मुखे तदारोपार्थः ' इति मद्रास् चन्नपुरी सरस्वतीनिलय मुद्रालय मुद्रितान्ध्राक्षरपुस्तके ॥ मुम्बइ निर्णयसागर मुद्रालयमुद्रितसंस्कृताक्षर पुस्तकेतु ' आरोपार्थ ' इत्यनन्तरं ' सः ' इतिपदं वर्तते ॥

आन्ध्राक्षरपुस्तकरीत्या न्यूनपदत्वदोषः । ' यत्रे ' तियच्छब्दस्य पूर्ववाक्यगतत्वादुत्तरवाक्ये तच्छब्दाभावात् । अतस्तत्रेत्यध्याहर्तव्यं-स्यात् ॥ संस्कृताक्षरपुस्तकरीत्या ' सः ' इति पदसत्वेपि वाक्यमसङ्गतार्थकंस्यात् । कथमितिचेत् । ' यत्र ' इत्यस्य ' काव्ये ' इत्यर्थस्य वक्तव्यत्वात्, सइत्युक्ते सप्रबन्धः पर्यस्तापह्नुतिरित्यसङ्गताभिधानं स्यात् । काव्यस्यालङ्कारत्वाभावात् । तस्मात् ' यत्र ' ' सः ' इति पदद्वयमपि प्रामादिकम् ॥

एतादृशंवाक्यदोष मसङ्गतार्थत्वञ्च भावयतामया लेखकस्खलनादिकमाशङ्कमानेन अस्मत्तातपादलिखित ग्रन्थाक्षरतालपत्रपुस्तकं

व्यलोकि । तत्रैवमदृश्यत ‘ क्वचिद्वस्तुनि तदीयधर्मनिह्नवः अन्यत्र वर्णनीयेवस्तुनि तस्य धर्मस्यारोपार्थः पर्यस्तापह्नुतिः ’ इति ॥

चन्द्रिकाकारस्तु नैतादृशानुपपत्तिस्फूर्तिपरिहारौ दर्शयति ॥ रसिकरञ्जनीकारस्तु ‘ पर्यस्तापह्नुतिं लक्षयति । अन्यत्रेति । श्लोकं व्याचक्षाणोलक्षणमुपपादयति । ‘ स ’ इति । मूलगततच्छब्द इत्यर्थः । इतःप्रभृति द्रष्टव्यमित्यन्तं निगदेनैव विशदम् ’ इति व्याचख्यौ । एतद्व्याख्यानुरोधेन कुवलयानन्दवाक्ये प्रथमतएव ‘ सः ’ इत्यनेन भाव्यम् । रसिकरञ्जनीसहित कुवलयानन्दपुस्तकेपि ‘ सः ’ इतिपदं नास्ति ‘ स ’ इति पाठाङ्गीकारेतु ‘ स ’ इत्यनेन ‘ अन्यत्र तस्यारोपार्थ ’ इत्यादिकारिकावाक्यान्त्यपदस्य ‘ सः ’ इत्यस्य व्याख्यानाय प्रतीकग्रहणम् । तस्यव्याख्यानं ‘ क्वचिद्वस्तुनि तदीयधर्मनिह्नवः ’ इति । तथाच—सः—तदीयधर्मनिह्नवः अन्यत्रतस्यारोपार्थश्चेत्पर्यस्तापह्नुतिर्भवतीति वाक्यार्थस्समञ्जसो भवति ॥ ‘ सएवयुक्तिपूर्वश्चेत् ’ ‘ पर्यस्तापह्नुतिस्तुसः ’ इति हेत्वपह्नुतिपर्यस्तापह्नुतिलक्षणवाक्यगताभ्यां ‘ स ’ इति तच्छब्दाभ्यां ‘ शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः ’ इति वाक्यस्थः धर्मनिह्नवः परामृश्यते । इतितु रहस्यम् ॥

यत्तु—रसिकरञ्जनीकारेण ‘ स ’ इति मूलगततच्छब्द इत्यर्थः ’ इति लिखितम् । तत्प्रामादिकम् ॥

कुतइतिचेत् ? ‘ स ’ इति प्रतीकं कुवलयानन्दगतं गृहीत्वा, ‘ मूलगततच्छब्द इत्यर्थः ’ इति व्याख्यानेन, शब्दस्य शब्द एवार्थ इत्युक्तंभवति । ततश्च मूलगतस्स इति शब्दएवपर्यस्तापह्नुतिरित्युक्तंस्यादित्यसङ्गताभिधानं भवेत् ॥ एतद्वाक्यतात्पर्यन्तु पूर्वमेवोक्तमस्माभिः ॥ (कुवलयानन्दगतेन तच्छब्देन मूलगततच्छब्दस्य प्रतीकग्रहणमिति) ॥

तथाच—तालपत्रपुस्तकदृष्टः पाठस्साधीयान् । स एवपाठोरसिकरञ्ज्युक्तरीत्या 'स' इति पदपूर्वकोपि साधीयानेव ॥



विषयः (११) अपह्नुतिः (ख)

किञ्च—अत्रैव कुवलयानन्दवाक्ये 'अन्यत्र' इति कारिकास्थं पदमादय 'वर्णनीये वस्तुनि' इति व्याख्यातम् । तदपेक्षया 'निषेध्यधर्माधिकरणभिन्ने' इत्यर्थस्समीचीनः ॥

तथाहि—एतावत्पर्यन्तमुक्तासु कारिकासु 'अन्योपमेयलाभेन वर्ण्यस्यानादरः' 'वर्ण्योपमेयलाभेन तथान्यस्यापि' 'वर्ण्येनान्यस्योपमायाः' 'शुद्धापह्नुतिरन्यस्य' इत्यादिषु तत्तद्व्याख्यानावसरे कुवलयानन्देच वर्ण्यपदेनोपमेयमुक्त्वा, उपमानमन्यपदेनैवोक्तम् ॥ वक्ष्यतेचोत्प्रेक्षाप्रकरणे दीक्षितैः 'अन्यधर्मसम्बन्धनिमित्तेन' 'अन्यतादात्म्यसम्भावन' मित्यादिषु 'अन्यपदेन वर्णनीयव्यतिरिक्तमुत्प्रेक्षाविषयिभूतं चन्द्रादि' इति ॥

अत्रपरम्—'अन्यत्र' त्यस्य 'वर्णनीयेवस्तुनि' इत्युपमेयपरतया व्याख्यानमालङ्कारिकपरिभाषाविरुद्धम् ॥

किञ्च—अपह्नुतिशब्दार्थोनिषेधः । सएव चमत्कारित्वादलङ्कारः । तत्र शुद्धापह्नुतिर्नाम स्वास्मिन् स्वाभिन्नवस्तुवृत्ति धर्मारोपप्रयोजकीभूतस्स्वधर्मनिषेधः । पर्यस्तापह्नुतिर्नाम शुद्धापह्नुतेर्विपरीता अपह्नुतिः । वैपरीत्यञ्च 'स्वाभिन्नवस्तुनि स्ववृत्तिधर्मारोपप्रयोजकीभूत स्स्वधर्मनिषेधः' ॥

तथाच—शुद्धापह्नुतावारोपनिषेधयो स्सामानाधिकरण्यम् । पर्यस्तापह्नुतावारोपनिषेधयोर्वैयधिकरण्यम् इति पर्यस्तत्वम् ॥

एतादृशार्थस्यैवात्रविवक्षितत्वा ' दन्यत्रे ' त्यस्य ' निषेधाधिकरणभिन्ने ' इत्यर्थस्यैव साधुत्वम् । प्रतीपालङ्कारवदत्रोपमानोपमेयभावस्याविवक्षितत्वा ' द्वर्णनीयेवस्तुनी ' तिव्याख्या नतादृशीमुपजनयातिचमत्कृतिमिति आलङ्कारिकपरिभाषाविदो विदन्तु ॥

अतएव—अतिशयोक्तिप्रकरणेवक्ष्यतेदीक्षितैरयमेवार्थः । ' ततस्त्वियानत्रभेदः । यत्तत्रशुद्धापह्नुतिगर्भत्वम् । यत्रकेनततित्वमुत्प्रेक्षितम् तत्रैवाट्टहासत्वोत्प्रेक्षणात् । इहतु पर्यस्तापह्नुतिगर्भत्वम् । इन्दुमण्डलादावपह्नुतस्यामृतादेस्सूक्त्यादिषु निवेशनात् ' इति ॥

॥ पर्यस्तापह्नुतिविचारः ॥



विषयः (१२) पर्यस्तापह्नुतिः (ग)

पर्यस्तापह्नुतिविचारे रसगङ्गाधरकारः कुवलयानन्दे दोषमेवं प्रकटयति । ' प्रकृतं यन्निषिध्यान्यत्साध्यते सात्वपह्नुतिः ' इति काव्यप्रकाशे । ' विषयापह्नवेवस्त्वन्तरप्रतीतावपह्नुतिः ' इत्यलङ्कारसर्वस्वे ।

' प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम् ॥
साम्यादपह्नुतिर्वाक्यभेदाभेदवती द्विधा ' ॥

इति दीक्षितकृत चित्रमीमांसायाञ्च, उपमेये मुखादौ मुखत्वं निषिध्य उपमानभूतचन्द्रवृत्तिचन्द्रत्वमारोप्यतेचेदपह्नुतिरित्युक्तम् ॥ कुवलयानन्दोक्तपर्यस्तापह्नुतौतु अप्रस्तुते सुधांशौ सुधांशुत्वं निषिध्य निषिद्धं सुधांशुत्वं प्रस्तुते प्रेयसीमुखे आरोप्यते ' नायं सुधांशुः किन्तर्हि सुधांशुः प्रेयसीमुख ' मिति ॥ तस्मात्प्राचीनोक्तापह्नुतिलक्षणानाक्रान्तत्वान्नात्रापह्नुतिर्युक्ता । किन्तुदृढारोपरूपकमेव ' मुखं चन्द्र ' इतिव

त्प्रेयसीमुखंसुधांशु ' रिति मुखे सुधांशुत्वारोपात् । अप्रकृते सुधांशौ सुधांशुत्वनिषेधस्तु प्रेयसीमुखे सुधांशुत्वदृढीकरणाय ॥

तदुक्तं विमर्शिनीकारेण । ' नविषं विषमित्याहु र्ब्रह्मस्वं विषमुच्यते ' अत्र विषस्य निषेधपूर्वं ब्रह्मस्वविषये आरोप्यमाणत्वादारोप रूपकमेव, नापह्नुतिः ' इति । यद्यपि प्राचीनानामियंसरणिः । तथापि अलङ्काररत्नाकरसरणिमनुरुध्यापह्नुतिमध्येऽस्यभेदस्यपरिगणनंकृतमितिचेत् । आहार्यताद्रूप्यस्यात्रापितुल्यत्वाद्रूपकालङ्कारएवान्तर्भाव उच्यताम् । प्राचीनलक्षणन्तुपरित्यक्तम् । अपह्नुतिरेव त्यज्यताम् । कुतोवा प्राचीनमुखदाक्षिण्यमवलम्ब्यते । किञ्च—चित्रमीमांसोक्तापह्नुतिलक्षणस्य ' नायं सुधांशुःकिन्तर्हिसुधांशुःप्रेयसीमुखम् ' इति पर्यस्तापह्नुतावव्याप्तिः । प्रकृतस्य प्रेयसीमुखस्य निषेधाभावात् । अपिच—' बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते ' इति चित्रमीमांसोक्तरूपकलक्षणस्यात्रातिव्याप्तिः ' नायं सुधांशुः ' इति विषयिण उपमानभूतस्य सुधांशोरपह्नवेपि विषयस्योपमेयस्य प्रेयसीमुखस्यानिह्नवात् । इति ॥ अन्तेचैवं सएव समाधत्ते । प्राचीनपक्षमवलम्ब्य चित्रमीमांसायां अपह्नुतेर्लक्षणमुक्तम् । रत्नाकरपक्षमवलम्ब्य कुवलयानन्दे पर्यस्तापह्नुतिरुक्तेति कथञ्चित्समाधेयमिति । चन्द्रिकाकारेणतु रसगङ्गाधरोपदर्शितानुपपत्तिसमाधाने एव स्वेनाप्यनूदिते । नतु किञ्चिदपिस्वतस्समाधानमुक्तम् ॥



विषयः (१३) अथभ्रान्तापह्नुतिविचारः (घ)

भ्रान्तापह्नुतेरुदाहरणस्य,

' नागरिकसमधिकोन्नतिरिहमहिषः कोय मुभयतःपुच्छः ।
नहिनहि करिकलभोसौ शुण्डादण्डोयमस्य नतु पुच्छः ' ॥

इति पद्यस्यव्याख्यायां चन्द्रिकायां ‘पूर्वोदाहरणे सन्देहरूपभ्रान्तिविषयज्वरत्वापह्नवः ज्वरःकिमितिप्रश्नेन तद्विषयसन्देहावगमात् इहतु महिषत्वनिश्चयरूपभ्रान्तिविषयस्य महिषत्वस्येति ततोभेदः’ इत्यानुपूर्वी दृश्यते ॥

अत्र—चन्द्रिकायां ‘सन्देहरूपभ्रान्तिविषयज्वरत्वापह्नवः’ इत्यनेन भ्रान्तौसन्देहरूपत्वमुक्तम् । भ्रान्तेः कथं सन्देहरूपत्वम् ? भ्रान्तिर्नाम ‘तदभाववद्विशेष्यकतत्प्रकारकज्ञानम् । सन्देहस्तु एकविशेष्यकविरुद्धानेकप्रकारकज्ञानम् । भ्रान्तिसन्देहयो रयथार्थानुभवत्वव्याप्यपरस्परासमानाधिकरणजातिविशिष्टत्वान्नैकत्वं संभवति । किञ्च—सर्वोपि भ्रमो जायमानो निश्चयरूपएवजायते । नतु संशयरूपः । शुक्तिं दृष्ट्वा इदं रजतं नवा, रज्जुंदृष्ट्वा अयंसर्पो नवा, मरीचिकां दृष्ट्वा इदंजलं नवेतिवा भ्रमः कस्यापि नजायत इति पांसुलपादो हालिकोपि जानाति । यत्तु—‘ज्वरःकिमितिप्रश्नेन तद्विषयसन्देहावगमात्’ इत्युक्तम् तच्च ‘नागरिके’ त्यत्रापिसमानम् तत्रापि ‘इहमहिषः कोय’ मितिप्रश्नार्थककिंशब्दस्य सत्त्वात् । ततश्च—सन्देहापह्नुतिरेवस्यात् नतुभ्रान्तापह्नुतिः । इति ॥

॥ इति भ्रान्तापह्नुतिविचारः ॥



विषयः (१४) अथ छेकापह्नुतिविचारः (ङ)

छेकापह्नुतेरुदाहरणतया ‘सीत्कारंशिक्षयती’ त्यादि पद्यं प्रदर्श्य ‘इदमर्थयोजनया तथ्यनिह्नवे उदाहरणम् शब्दयोजनया यथा

‘पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले
नीले मुह्यति किङ्करोमि महितैः क्रीतोस्मि ते विभ्रमैः ।
इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया
कृष्णस्तत्परमेव तद्व्यपदिशन्क्रीडाविटः पातुवः

इति कुवलयानन्दकृता लिखितम् ॥

इदञ्च —श्रीमद्विशिष्टाद्वैतसिद्धान्तनिर्धारकाणां श्रीवात्स्यवरदाचार्याणां प्रप्रपौत्रैर्वरदाचार्यैःकृते यतिराजविजयनाम्नि नाटके नान्दीपद्यम् ॥

सन्तिकिल भगवतो नारायणस्य सहस्रं महिष्यस्तास्त्रात् । तासु तिस्रः प्रधानभूतामहिष्यश्श्रीभूर्नीलाचेति । तास्संबोध्य प्रत्येकं नाम्नाभगवानुत्स्वप्नायते, पद्मे ! नीले ! महि ! इति । राधातु स्वपार्श्वे शयितस्य दयितस्य कृष्णस्य तदुत्स्वप्नवचोनिशम्य रुषा निरभर्त्सयत्कृष्णम् । सतु क्रीडाविटः क्रीडयाविटः क्रीडयाअनायासेन स्वेच्छयेतियावत् । विटः भुजङ्गव्यापारः स्वयमकर्मवश्यत्वात्स्वेच्छया कृतावतार स्तत्तत्कर्मानुरूपभोगदानाय विटचेष्टितः । साभिप्रायहेतुगर्भविशेषणमिदम् । प्रणयकुपितकामिनीप्रसादनकुशलत्वात्स्वोक्तं वचो राधापरमेव व्यपदिशन्पातुवः । राधापरत्वेनार्थश्चन्द्रिकाकारेणैव कथितः । अत्र श्रीभूमिनीलारूपनायिकात्रयसंबोधने कविविवक्षितेऽपि, 'पद्मे' इति लक्ष्मीमात्रसंबोधनेन चन्द्रिकाकारेणार्थो विवृतः । नतु भूनीलासंबोधनेन ॥

ननु—स्फुटार्थत्वा न्नव्याख्यातमितिचेन्न । भूनीलासंबोधनरूपार्थस्तच्चित्तपथंनारूढइति तद्वचनमेव स्फुटीकरिष्यति । अत्र 'रमासंबोध्यकः' इति 'रमाराधासाधारणत्व' मितिच ॥

॥ इति छेकापह्नुतिविचारः ॥



## विषयः (१५) अथोत्प्रेक्षाविचारः (क)

'रक्तौ तवांघ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवम्' । इति कारिकार्धमेवंव्याख्यातंचन्द्रिकाकारेण 'रक्तावित्यादि' । दयितांप्रति नायक-

स्योक्तिः । तव मृदुलौसुकुमारौ अंघ्री चरणौ ध्रुवं भुविविक्षेपणात् हेतोः रक्तवर्णाविति ' । इति ॥

अत्र ध्रुवमिति पदस्यैवोत्प्रेक्षावाचकत्वं सर्वैविदितम् । हेतूत्प्रेक्षेयमित्यपि । तस्मात् ' ध्रुव ' मित्यस्य, विक्षेपणादित्यनन्तरमन्वयो वाच्यः । तथाच तवसुकुमारावंघ्री भुविविक्षेपणादिव रक्तावित्यर्थः । कारिकायामपि भुविविक्षेपणाद्ध्रुव ' मिति हेत्वर्थकपञ्चम्यन्तविक्षेपणपदोत्तरमेव ध्रुवपदं वर्तते । एवं सत्यपि ' ध्रुवं भुवि विक्षेपणाद्धेतो रक्तवर्णौ ' इत्यन्वयभेदकरणे किं वीजमिति नजानीमः ॥

कुवलयानन्देच ' अहेतोर्हेतुभावेन अफलस्य फलत्वेनोत्प्रेक्षा हेतूत्प्रेक्षाफलोत्प्रेक्षेत्युच्यते ' ' चरणयोस्स्वतस्सिद्धे रक्तिमनिवस्तुतो विक्षेपणं नहेतुरित्यहेतोस्तस्य हेतुत्वेन संभावना हेतूत्प्रेक्षा ' ' चन्द्रप्रभविरोधे स्वाभाविके नायिकावदनकान्तिप्रेप्सा नहेतुरिति तत्र तद्धेतुत्वसंभावना हेतूत्प्रेक्षा ' इत्यादावनेकत्र तृतीयापञ्चम्यर्थहेतुत्वस्य ध्रुवादिपदवाच्यसंभावनायां प्रकारतयाऽन्वयकथनात्, चतुर्थीतुमुनर्थफलत्वस्य प्रकारतया ' प्राय ' आदिपदार्थसंभावनायामन्वयकथनाच्च विक्षेपणादित्यनन्तरमेव ध्रुवपदस्यान्वयोवाच्यः । एवंस्थिते ' ध्रुवं भुविविक्षेपणा ' दित्यन्वयकथनं कुतइति चिन्त्यम् ॥

किञ्च—ध्रुवमित्यस्य संभावनार्थकत्वं विस्मृत्य निश्चयार्थकत्वमेव विवक्षितमित्यपि स्फोरयत्ययं विपरीतोन्वयः । अतएव, ' प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति ' इति कारिकामपि ' अब्जं कर्तृ प्रायः बहुधा त्वच्चरणेन सहैक्यं प्राप्तुं तोये जले तपस्यतितपश्चरतीत्यर्थः ' । इति व्याचख्यौ ॥

अत्रापि ' प्रायः ' इत्युत्प्रेक्षावाचकस्य ' बहुधा ' इति व्याख्यानादुत्प्रेक्षावाचकत्वं त्यक्तमितिविज्ञायते । ' त्वत्पदेनैक्यंप्राप्तुंप्रायः ' इत्य-

न्वये, 'प्राप्तुमिवे' त्यर्थेच विवक्षितेप्यन्यथाऽन्वयार्थौ कथितौ चन्द्रिकाकृता ॥

स्वरूपोत्प्रेक्षाद्वयेपि संभावनार्थकयोः 'शङ्के' 'इव' इति पदयोस्संभावनाप्रकारीभूत 'धूमस्तोम' 'लिम्पति' पदयो रन्वयो यथोच्यते, तथा हेतूत्प्रेक्षाफलोत्प्रेक्षयोरपि 'विक्षेपणाद्ध्रुवम्' 'त्वन्मुखाभेच्छयानूनम्' 'कुचयोर्धृत्यै किम्' 'ऐक्यंप्राप्तुंप्रायः' इत्येवान्वयो वक्तव्यः ॥

एवमेव रसिकरञ्जन्यामुक्तम् 'विक्षेपणादिति पञ्चम्या हेतुत्वप्रतिपादनेन ध्रुवशब्दार्थे संभावनेऽन्वयादित्यर्थः । 'त्वन्मुखाभेच्छये' ति हेतुतृतीयोक्तस्य हेतुत्वस्य नूनंशब्दद्योतिते संभावनेऽन्वयादिति भावः । 'धृत्यै' इति चतुर्थ्यातादर्थ्यप्रतिपादिकया फलत्वोक्त्या तस्य किं शब्दोक्तवितर्केऽन्वयादेषा फलोत्प्रेक्षे त्यभिप्रायः' इति । तस्मादस्मदुक्तरीत्याऽन्वयार्थौवाच्यौ ॥



विषयः (१६) उत्प्रेक्षाविचारः (ख)

'त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी' इत्यसिद्धविषयहेतूत्प्रेक्षोदाहरणवाक्यस्यैवं चन्द्रिकायां व्याख्या कृता ॥

'पद्मगतायास्त्वन्मुखकान्तेरिच्छया हेतुनेत्यर्थः वैरायतइति वैरङ्करोतीत्यर्थे 'शब्दवैरकलहाभ्रकण्वमेघेभ्यःकरणे' 'इति क्यङ्' इति ॥

अस्यैवोदाहरणवाक्यस्यैवं कुवलयानन्दे व्याख्या । 'चन्द्रपद्मविरोधेस्वाभाविके नायिकावदनकान्तिप्रेप्सा नहेतुरिति तत्र तद्धेतुत्वसंभावना हेतूत्प्रेक्षा' इति ॥

सौकर्याय बुभुत्सूनामिदं व्याख्यायतेमया । शशी पद्मैस्सह वैरङ्करोति तत्र हेतुमुत्प्रेक्षते त्वन्मुखाभेच्छयानूनम् त्वदीयमुखकान्तिविषयकेच्छारूपहेतुनेवेत्यर्थः ॥

इदन्तु तात्पर्यम् । कामिनीवदनस्य चन्द्रपद्मसादृश्यं कविजनप्रसिद्धम् । उपमानभूतयो श्चन्द्रकमलयोर्वैरश्चन्द्रोदये कमलानामविकासरूपं स्वाभाविकम् । तच्च चन्द्रसमवेतकामिनीवदनकान्तिविषयकेच्छाप्रयोज्यमित्युत्प्रेक्ष्यते । पद्मवैरस्य चन्द्रकर्तृकस्य मुखकान्तीच्छाप्रयोज्यत्वं कयाविधयेतिचेदेवम् । वैरिशब्देनोपमानमुच्यते । मुखकमलयोरुपमानोपमेयभावाद्वैरित्वम् । चन्द्रस्य मुखापेक्षया प्रतीपालङ्कारविधयावा अपकृष्टत्वं विवक्षितम् । ततश्चन्द्रो मुखकान्तिमिच्छ न्मुखं प्रार्थयते ' त्वदीयां कान्तिं मेदेहि ' इति । मुखन्तु कमलवच्चन्द्रस्यापि स्ववैरित्वात्स्वकान्तिन्दातुं नेच्छति । तदाचन्द्रः ' हेमुख ! तववैरिणा पद्मेन सह मम वैरं सर्वलोकसाक्षिकम् तस्मान्नाहन्तववैरी, किन्तु तववैरिणः कमलस्याहंवैरीति तवानुकूलः तस्मात्कृपयातवकान्तिं मह्यमपिदेहि ' इति प्रार्थयते । इत्थञ्च मुखकान्तीच्छया पद्मवैरं शशिनः इति ॥

चन्द्रिकाकारेणतु ' पद्मगतायास्त्वन्मुखकान्तेरिच्छया हेतुनेत्यर्थः वैरायते वैरङ्करोति ' इति व्याख्यातम् ।

अत्र त्वन्मुखकान्तेरित्यस्य पद्मगताया इति विशेषणं दत्तम् । तच्च कुतोलब्धमिति विचार्यते । कारिकायां ' त्वन्मुखाभेच्छया ' इत्येतावन्मात्रमस्ति मुखाभायाः पद्मगतत्वं शब्दतोऽर्थतोवा नलभ्यते ॥

कुवलयानन्देपि ' चन्द्रपद्मविरोधे स्वाभाविके नायिकावदनकान्तिप्रेप्सा नहेतुः ' इति तत्कारिकाविवरणे वदनकान्तेः पद्मगतत्वंकथञ्चिदपि नलभ्यते । मुखकान्तिर्मुखएववर्तते, नपद्मे । अतोमुखकान्तेः पद्मगतत्वमेवानुपपन्नम् ।

किञ्च—चन्द्रस्य किंसाक्षान्मुखकान्तिरिष्टा ? उत साद्दश्यादारोपिता ऽध्यवसितावा पद्मगता मुखकान्तिरिष्टा ? साक्षान्मुखकान्तेरेवेष्टत्वस्वारस्याद्बाधकाभावाच्चारोपाध्यवसायविषयतया पद्मगतमुखकान्तेर्नेष्टत्वं संभवति । तदिच्छयावा नकोपि लाभः ॥

नच—मुखगतकान्तीच्छायां सत्यां शशिनः पद्मैर्वैरं नसंभवति किन्तु मुखकान्तौ पद्मगतायांसत्यामेव तत्कान्तीच्छयापद्मैर्वैरमुपपन्नं भवति यथा सामन्तनरपत्यधीने राज्येराज्येच्छया तेनसह वैरमुपपद्यते तथेति वाच्यम् ॥

वैरकरणंनाम विरोधाचरणम् प्रातिकूल्यमितियावत् । तन्मात्राद्राज्याशानह्यवलोक्यतेलोके । अशक्तस्य विरोधाचरणेपि नैवराज्यलाभः किन्तु स्वीयस्यापिपरिमोषएव । अपितुजयेसत्येव राज्याशा । नतुविरोधाचरणमात्रात् ।

तस्मादस्मदुक्तव्याख्यानरीत्या अशक्तायेव दैन्येन शरणागताय प्रबलेनापि शत्रुणा राज्यदानमुपपद्यत इति साक्षान्मुखकान्तीच्छया चन्द्रस्य पद्मैर्वैरमेव साधीयः ॥



## विषयः (१७) उत्प्रेक्षा (ग)

कुवलयानन्दे उत्प्रेक्षालक्षणमुक्तम् ' अन्यधर्मसंबन्धनिमित्तेनान्यस्यान्यतादात्म्यसंभावनमुत्प्रेक्षा ' इति ॥ अत्रविचार्यते ॥

' अन्यस्य ' इत्यत्र, अन्यशब्देनकिमुच्यते ? वर्णनीयंवस्तूच्यतेचेत् तदालङ्कारिकसमयविरुद्धम् । अन्यपदेन अवर्ण्यस्य अप्रकृतस्यैवोपमानादेः कथनस्यैवतत्संप्रदायात् । तथाहि ' शुद्धापह्नुतिरन्यस्य ' ' अन्यत्रतस्यारोपार्थः ' ' अन्योपमेयलाभेन ' ' वर्ण्योपमेयलाभेनत-

थान्यस्यापि ' ' वर्ण्येनान्यस्योपमायाः ' ' वर्ण्यानामितरेषांवा ' इत्यादावन्यशब्देन अवर्णनीयस्यैवोपमानादेःकथनात् ॥

अस्मिन्नेववाक्ये ' अन्यधर्मसंबंधनिमित्तेन ' इत्यत्र, ' अन्यतादात्म्ये ' त्यत्रापि अन्यपदेनवर्णनीयादन्यस्यैवस्त्रेनैवोक्तत्वाच्च ॥

वर्णनीयार्थकत्वन्तु अत्यन्तासङ्गतमित्येतत्सर्वविदितमेव । प्रकृतलक्षणवाक्यगतस्य ' अन्यस्य ' इत्यस्यवर्णनीयपरत्वेनैवविवक्षितत्वात् ॥

यदि यत्किञ्चित्प्रतियोगिकभेदानुयोगित्वमन्यत्वमुच्यते, तदा ' अन्यतादात्म्येत्यत्र अन्यपदेनकिमुच्यत इति विचारणीयम् । तत्रापि यत्किञ्चित्प्रतियोगिकभेदानुयोगित्वामित्युक्तौ अन्योन्याश्रयः । अन्यस्येत्यत्रान्यशब्देनोत्प्रेक्षाविषयउच्यते ।

अन्यतादात्म्येत्यत्रान्यपदेनोत्प्रेक्षाविषय्युच्यते तथाच विषयिज्ञानंविनातदन्यविषयज्ञानंनसंभवति एवंविषयज्ञानंविनातदन्यविषयिज्ञानंनसंभवतीति अन्योन्यज्ञानाधीनान्योन्यकत्वरूपान्योन्याश्रयः ॥ अतः ' अन्यधर्मसंबन्धनिमित्तेन कस्यचित्तदन्यतादात्म्यसंभावनमुत्प्रेक्षेत्येवोचितम् ॥ एतेन ' अन्यत्वेनोत्कीर्तनञ्च संभावनायामाहार्यतासूचनाय ' इतिचन्द्रिकावाक्यमपि व्याख्यातप्रायम् । ' कस्यचित्तदन्यतादात्म्यसंभावनमुत्प्रेक्षा ' इत्युक्तेपि संभावनाया आहार्यत्वसिद्धेः ॥

अतएवाहार्यपदप्रयोजनकथनावसरे ' बाधाद्यभावदशायान्तुजायमाना मुखादौचन्द्रादिसंभावना नोत्प्रेक्षेति तद्वारणायाहार्येति ' इत्युक्तम् । अतः आहार्यत्वमलंकारताप्रयोजकतया स्वतएवप्राप्तम् । नत्वन्यस्येतिपदमहिम्ना । अतएव काव्यप्रकाशे ' संभावनमथोत्प्रेक्षाप्रकृतस्यसमेनयत् । ' इतिलक्षणे प्रकृतपदेनैवोच्यतेविषयः नत्वन्यपदेन ॥



विषयः (१८) उत्प्रेक्षा (घ)

कुवलयानन्दे ‘ लिम्पतीवतमोङ्गानि वर्षतीवाञ्जनंनभः ’ इत्यनुक्तविषयस्वरूपोत्प्रेक्षोदाहरणे तमोव्यापनंविषयः तमःकर्तृकलेपनं नभःकर्तृकाञ्जनकर्मकवर्षणञ्चविषयि. नभःप्रभृतिभूपर्यन्तसकलवस्तुसान्द्रमलिनीकरणं निमित्तम् विषयस्यतमोव्यापनस्य पदोपात्तत्वाभावादनुक्तविषयत्व’मित्युक्तम् ॥ तत्रैवायंशङ्काग्रन्थः, ‘ नन्वत्रतमसोव्यापनेन ’ इत्यादि उक्तविषयत्वमेवास्यास्स्यादि’ति ॥ शङ्काग्रन्थस्येदंतात्पर्यम् । तमःविषयः लेपनकर्ताविषयी व्यापनंनिमित्तम् ।नभःविषयः वर्षणकर्ताविषयी भूपर्यन्तंगाढनीलिमव्याप्तत्वंनिमित्तम् । अत्रतमसोनभसश्चविषयस्य शब्दोपात्तत्वादुक्तविषयत्वमेवास्तु इति ॥ अस्मिन्शङ्काग्रन्थेव्यापनं भूपर्यन्तंगाढनीलिमव्याप्तत्वञ्च निमित्तमित्युक्तम् अनयोर्निमित्तत्वंनसंभवतीतिकृत्वा, शङ्काग्रन्थएवासङ्गतइत्युच्यतेमयेदानीम् ॥ तथाहि ॥

विषयिविषयोरन्यतिष्ठधर्मस्यैवनिमित्तत्वम् । व्यापनंनाम अनेकदेशसंयोगः सचसंभावनाविषयभूतेतमस्ययद्यपिवर्तते तथापि विषयिणिलेपनकर्तरि नास्ति । लेपनकर्तुःपुरुषस्यैकदेशवृत्तित्वात् । एवंविषयभूतेनभसि गाढनीलिमव्याप्तत्वसत्वेपि अञ्जनवर्षणकर्तरिपुरुषे नीलिमव्याप्तत्वंनास्ति । नहिसुधालेपकःपुरुषः स्वदेहमपिप्रासादमिवसुधयालिम्पति वृक्षसेचकोवा वृक्षमिवस्वदेहंजलेनसिञ्चति ॥ अतश्च—अन्यधर्मसंबन्धरूपनिमित्तस्य विषयिणिलेपनकर्तरि वर्षणकर्तरिचाभावेन लक्षणस्यैवाभावात् उक्तशङ्काग्रन्थएवासङ्गत इति ॥



विषयः (१९) उत्प्रेक्षा (ङ)

अत्रैवकुवलयानन्दे ‘ अतएव आख्यातार्थस्यकर्तुः क्रियोपसर्ज-

नत्वेनान्यत्रान्वयासंभवादेव अस्योपमायामुपमानतयान्वयोपि दण्डिना-निराकृतः

' कर्तायद्युपमानंस्यान्न्यग्भूतोसौक्रियापदे ।
स्वक्रियासाधनव्यग्रोनालमन्यद् व्यपेक्षितुम् इति ' ॥

इतिपङ्क्तिर्दृश्यते ॥ एतद्व्याख्यानावसरे चन्द्रिकायां ' अतएव ' इति-पदंकुवलयानन्दगतंप्रतीकतयागृहीत्वा ' आख्यातार्थस्यकर्तुःक्रियोपस-र्जनत्वेनान्यत्रान्वयासंभवादेव ' इतिवाक्येन अतएवेतिपदं व्याख्याय अनन्तरं ' क्वचिदतएवेत्युत्तरं अयमेवव्याख्यानग्रन्थः प्रमादलिखितो-दृश्यते ' इति चन्द्रिकाकारोव्यलिखत् ॥

अत्रेदंविचार्यते । प्रमादलिखितत्वेनचन्द्रिकाकारोक्तोग्रन्थः स्वव्याख्यानात्प्रागेवलिखिते कुवलयानन्दग्रन्थे आनुपूर्वीमध्यघटकतया-दृष्टश्चेत्तस्यप्रमादलिखितत्वंकथम् ? अतएवंवक्तव्यम् चन्द्रिकाकरणा-नन्तरं कश्चित्कुवलयानन्दमात्रलेखकश्चन्द्रिकांदृष्ट्वा तत्रत्यमिदमेकंवा-क्यं कुवलयानन्देसंकलय्य लिलेख पुनस्तत्पुस्तकंदृष्ट्वा चन्द्रिकाकारस्स्व-ग्रन्थे इदंप्रामादिकमिति पुनर्लिलेखेति ॥ अतईदृशंलेखनंकीदृशयुक्ति-युक्तमितिसहृदयाविमृशन्तु ॥

रसिकरञ्जनीकारस्तु चन्द्रिकाकारेण प्रमादलिखितत्वेनोक्तामा-नुपूर्वीमेव प्रतीकग्रहणपूर्वकं व्याचख्यौ । तस्माच्चेयमानुपूर्वी दीक्षितकृ-तैवेतिज्ञायते ततश्चाध्येतृजनसुबोधाय अतएवेतिपदंदीक्षितैस्स्वयमेव-विवृतमिति समाधानंसाधीयः । इयञ्चव्याख्यातृणांशैली यत्स्वपदानि-स्वयं वर्ण्यन्ते इति ॥ अतएवेत्यस्यास्पष्टार्थकत्वात्स्वेनएवविवरणंकृतमिति युक्ततममिति ॥

विषयः (२०) उत्प्रेक्षा (च)

असिद्धविषयहेतूत्प्रेक्षोदाहरणतया प्रदर्शितमिदंपद्यं कुवलयानन्दे ।

‘ विवस्वताऽनायिषतेवमिश्राः
स्वगोसहस्रेणसमंजनानाम् ।
गावोपिनेत्रापरनामधेयाः
तेनेदमान्ध्यंखलुनान्धकारैः ’ इति ॥

अस्येदंतात्पर्यम् । जनानांरात्रौ अन्धकारेणजनित मतएवालोकसंयोगरूपसहकारिकारणाभावप्रयुक्तं विषयग्रहणाभावं चक्षुरिन्द्रियाभावप्रयुक्तंसन्तमुत्प्रेक्षते । चक्षुरिन्द्रियंकुतोनास्तीतिचेत्सूर्येणापहृतत्वादिति श्लेषकृतचमत्कारेणाह । स्वकिरणरूपगोसहस्रेणसमंमिश्राः जनानांनेत्ररूपागावोपि सूर्येणान्यत्रनीता इति । यथा अन्यगवापहारकःपुरुषः स्वगोभिस्समंपरेषांगाअपिमिश्रीकृत्य स्वस्थानंनयति । अन्यथा गावः अपरिचितंस्थानंनगच्छन्ति । यूथमिलितास्त्वपरिचितमपिस्थानं पुरुषस्यविशेषप्रयत्नंविनैव गच्छन्तीत्यनुभवः । ‘ गौस्स्वर्गेचबलीवर्देरश्मौ ’ इतिकोशात्किरणवाचकत्वंगोशब्दस्य । ‘ स्त्रीसौरभेयीदृग्बाण ’ इति धेनुवाचकत्वं नयनवाचकत्वञ्च ॥ एवंस्थिते चन्द्रिकाकारः प्रथममनेनैवप्रकारेणव्याख्याय भाववर्णनसमये वैपरीत्यमाह । सेयन्तदानुपूर्वी । ‘ यथा गोपालेन परकीयाभिर्गोभिर्मिश्रास्स्वीयागावोनीयन्ते तथा गोपदवाच्यत्वसाजात्येन मिश्रिताविवस्वतापि नीताइवेत्यर्थः ’ इति ॥

अत्रवैपरीत्यंकथमितिचेत् धेनूनामपहर्तुःपुरुषस्य परकीयधेनूनां स्वस्थानप्रापणमुद्देश्यतयाप्रधानम् । स्वधेनूनां स्वस्थानप्रापणन्तुस्वप्रयत्नाभावेपि सुकरमेवेति नतत्रप्राधान्यम् सहशब्दयोगे अप्रधानवाचकात्तृतीया शब्दानुशासनसिद्धा ॥

अत्रतु ' परकीयाभिर्गोभिर्मिश्रिताः ' इतिपरकीयगवामप्राधान्यं तृतीययाकथितम् । ' स्वीयागावोनीयन्ते ' इतिस्वगवां प्रापणकर्मत्वे-प्राधान्यमुक्तम् । दार्ष्टान्तिकेपि सूर्येणस्वकिरणसहस्रस्यस्वेनसहप्रापण-मविनाभावात्स्वतस्सिद्धम् । जननेत्रप्रापणन्तु असिद्धविषयतयाहेतु-त्वेनप्राधान्येनस्थापनीयम् ॥

तथैवोक्तमुदाहरणपद्येकुवलयानन्दे स्वव्याख्यायाञ्च । ' स्वगो-सहस्रेणेति तृतीयया स्वगोसहस्रस्याप्राधान्यम् । ' नेत्रापरनाम-धेया जनानांगावोप्यनायिषते ' तिपरकीयगवांकर्मत्वेनप्राधान्यञ्च । भाववर्णनसमयेपरमस्खलत् ॥

ननु—अत्रगवापहारकोनविवक्षितः तस्यप्रतिपाद्यत्वाभावात् । किन्तुगोपालः । सतुतृणचारायवनंनयति स्वगाःपरकीयाभिर्गोभिर्मिश्री-कृत्येति । तत्र स्वकीयगवां परकीयगवांवा प्राधान्याप्राधान्ययोरविव-क्षितत्वाद्वैपरीत्येनापिप्रयोगउपपन्नएवेतिचेन्न ॥

अत्र गवापहारकस्येव गोपालस्यापि पदप्रतिपाद्यत्वाभावान्न-विवक्षेति न्यायतौल्यात् ॥

किञ्च—गोपालपदस्य पाचकगायकादिपदवद्यौगिकत्वाद्गोरक्ष-णकर्तैवार्थः । सचभृत्यश्चेत्तस्य स्वीयागावएवनसन्ति । स्वगोरक्षकश्चे-त्परकीयाभिर्गोभिर्मिश्रीकरणं नावश्यकम् तदभावेपिस्वगोरक्षणसंभ-वात् दार्ष्टान्तिके सूर्येणापिजनगोहरणस्यैवप्रधानप्रतिपाद्यत्वंस्पष्टम् । स्वगवामप्राधान्यञ्च यथा ' विवस्वतास्वगोसहस्रेणसमं जनानांगावो-प्यनायिषते ' ति ।

तस्मादस्मदुक्तरीत्यागवापहारकस्यैवात्रविवक्षणंयुक्तमिति सहृद-यमात्रहृदयवेदनीयमिदम् ॥



## विषयः (२१) उत्प्रेक्षा (छ)

उत्प्रेक्षालङ्कारान्तेदृश्यतएवं कुवलयानन्दे ' एताएवोत्प्रेक्षाः

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षाव्यज्यतेशब्दैरिवशब्दोपितादृशः ॥

इत्युत्प्रेक्षाव्यञ्जकत्वेनपरिगणितानां शब्दानां प्रयोगेवाच्याः । तेषामप्रयोगेगम्योत्प्रेक्षाः यथा त्वत्कीर्तिर्भ्रमणश्रान्ताविवेशस्वर्गनिम्नगाम्-इति ' इति ॥

अत्रचन्द्रिका ' नन्वलङ्कारसर्वस्वकारादिभिरन्येषामपि जात्यादिभेदानामुक्तत्वात्कुतस्ते नप्रदर्शिताइत्याशङ्क्याह एताएवेति । उक्तभेदाएवेत्यर्थः । उत्प्रेक्षाःइत्यनन्तरं चमत्कारप्रयोजिकाइतिशेषः तथाच जात्यादिभेदानां चमत्कारविशेषानाधायकत्वादप्रदर्शनमितिभावः' इति॥ दर्शितकुवलयानन्दपङ्क्तेरयमर्थः ' एताएवोत्प्रेक्षाः पूर्वोक्ताष्षड्विधाअप्युत्प्रेक्षाः ' मन्ये ' इत्यादिकारिकोक्तोत्प्रेक्षावाचकेवादिशब्दप्रयोगे वाच्योत्प्रेक्षा इत्युच्यन्ते । तदप्रयोगे गम्योत्प्रेक्षा इत्युच्यन्ते, ' त्वत्कीर्तिरित्यादाविवादिपदाप्रयोगाद्गम्याः ' इति ॥

चन्द्रिकाकारस्यतु तात्पर्यमिदम् । ' एताएवोत्प्रेक्षाः ' इतिवाक्यंभित्वा ' चमत्कारप्रयोजिकाः ' इति शेषंपूरयित्वैकोवाक्यार्थः । ' मन्ये इत्यादिकारिकोक्तेवादिप्रयोगे वाच्याः अप्रयोगे गम्याः ' इत्यपरोवाक्यार्थः द्वितीयवाक्यार्थे ' वाच्याः ' ' गम्याः ' इत्यनयोर्विशेष्यवाचकपदाभावात्पुनरपि, ' एताएवोत्प्रेक्षाः ' इत्यस्यानुषङ्गःकार्यः इति ॥

इत्थञ्च—वाक्यभेदकरणम् । शेषपूरणम् । पुनरप्युक्तपदानुषङ्गः । इतिवाक्यदोषत्रयं संभवति । दोषाभ्युपगमेपि प्रयोजनंनास्ति । कुतइतिचेत् ' अलंकारसर्वस्वकारादिभिरुत्प्रेक्षायां येजात्यादिभेदाःप्र-

दर्शिताः नतेचमत्काराधायकाः इतितेषामत्रकथनाभावः इतिज्ञापनमे-वप्रयोजनम् ' इतिकिल चन्द्रिकाकाराभिप्रायः । तच्चप्रयोजनं तद्भेदा-नामत्राकथनादेवलभ्यत इति मन्दम् ॥

कुवलयानन्दटीकायां रसिकरञ्जन्यामप्येकवाक्यतयैव व्याख्या-तमेतद्वाक्यम् ।

' एवंवाच्योत्प्रेक्षावर्गंप्रदर्श्य गम्योत्प्रेक्षांदर्शयति । एताएवेति । वाच्याएवोत्प्रेक्षाः व्यञ्जकशब्दापोद्धारे गम्योत्प्रेक्षाइत्यर्थः । तामेवोदा-हरणमुखेन दर्शयति । त्वत्कीर्तिरिति । ' इत्यादि ॥

' एताएवोत्प्रेक्षाः ' इति भिन्नवाक्यतया व्याख्यायोक्तभावव-र्णने चन्द्रिकाकारस्यमूलं रसगंगाधरवाक्यमेव । ' इहजात्यादयोहिभेदाः प्राचामनुरोधादुदाहृताः । वस्तुतस्तुनैषांचमत्कारेवैलक्षण्यमस्तीत्यनु-दाहार्यतैव । चमत्कारवैलक्षण्यं पुनर्हेतुफलस्वरूपात्मकानां त्रयाणा-मेवे ' ति ॥ एतद्वाक्यतात्पर्यंहृदिनिधाय चन्द्रिकाकारोदोषत्रयद्योति-कां व्याख्यामचीकरत् । नैतदत्रयुक्तम् ॥

अस्मदुक्तरीत्यैकवाक्यतयायोजनामपि रसगङ्गाधरवाक्यमेव प्रक-टयति । ' प्रागुदाहृतेष्वेवपद्येषु वाचकानामिवादीनांत्यागे प्रतीयमाना ' इति ॥ इयन्तुयोजनाप्रकृतोपयुक्ता । वाक्यदोषाभावात् ॥

ननु—अत्र ' मन्येशङ्के ' इत्यादिकारिकायां ' उत्प्रेक्षाव्यज्यते ' इत्यत्र, तद्व्याख्यानतयोक्ते कुवलयानन्दे ' इत्युत्प्रेक्षाव्यञ्जकत्वेनपरिग-णितानांशब्दानां ' इत्यत्रच, इवादीनामुत्प्रेक्षाव्यञ्जकत्वमुच्यते । व्यञ्ज-कत्वञ्चव्यञ्जनावृत्त्याबोधकत्वम् । ' शब्दानांप्रयोगेवाच्याः ' इत्यनेनतु उत्प्रेक्षायाश्शब्दवाच्यत्वमुच्यते । वाच्यत्वञ्चाभिधावृत्त्याबोध्यत्वम् । ' तेषामप्रयोगेगम्याः ' इत्यनेनोत्प्रेक्षायागम्यत्वमुच्यते । गम्यत्वञ्चव्य-

ङ्ग्यत्वम् । इत्थञ्चेदमत्यन्तविरुद्धम् । यदुत्प्रेक्षायावाच्यत्वंव्यङ्ग्यत्वं-चेति ॥

तथाहि । शब्दस्त्रिविधः वाचकोलक्षकोव्यञ्जकश्चेति । अर्थोपि-त्रिविधःवाच्योलक्ष्योव्यङ्ग्यश्चेति । अर्थबोधकश्शब्दनिष्ठोव्यापारश्चत्रि-विधः अभिधालक्षणाव्यञ्जनाचेति । तत्रवाचकेनशब्देनाभिधयावृत्त्या वाच्योर्थःप्रतिपाद्यते । लक्षकेण लक्षणया लक्ष्योर्थः । व्यञ्जकेन व्यञ्ज-नया व्यङ्ग्योर्थः ।

इत्थञ्चसति उत्प्रेक्षाव्यञ्जकपदप्रयोगे उत्प्रेक्षाया व्यङ्ग्यत्वेवक्तव्ये वाच्यत्वमुक्तंविरुद्धम् । व्यञ्जकपदाप्रयोगे व्यङ्ग्यत्वाभावे वक्तव्ये व्य-ङ्ग्यत्व (गम्यत्व) मुच्यते । इति विरोधस्स्फुटएव इतिचेत् ॥

मैवम् । ‘ उत्प्रेक्षाव्यज्यते ’ इत्यत्र, ‘ व्यञ्जकाप्रयोगा ’ दित्यत्रच व्यञ्जकशब्दस्य बोधकत्वरूपसामान्याकारपुरस्कारेण वाचकत्वमेवार्थः । ‘ इवादिशब्दानांप्रयोगेवाच्याः ’ इतिवाक्याविरोधाय तथाङ्गीकरणीय-त्वात् । ‘ तेषामप्रयोगे गम्याः ’ इत्यत्रापि गम्यत्वंनव्यङ्ग्यत्वम् । अपि-त्वर्थलभ्यत्वम् । व्यङ्ग्यत्वार्थकत्वेव्यङ्ग्योत्प्रेक्षायाः ध्वनिरूपत्वेनोत्तमका-व्यत्वापत्त्या अधमकाव्येष्वर्थालङ्कारेषु निरूपणस्यैवासाङ्गत्यापातात् । वाच्यत्वेसत्येवोत्प्रेक्षाया अलंकारत्वात् इति ॥

॥ इत्युत्प्रेक्षाविचारः ॥



विषयः (२२) अतिशयोक्तिः (क)

कुवलयानन्दे सापह्नवातिशयोक्त्युदाहरणतया पद्यमिदमुपा-त्तम् ॥

‘ मुक्ताविद्रुममन्तरा मधुरसः पुष्पंपरंधूर्वहं
प्रालेयद्युतिमण्डलेखलु तयोरेकासिका नार्णवे ।

तच्चोदञ्चतिशङ्खमूर्ध्नि नपुनःपूर्वाचलाभ्यन्तरे
तानीमानिविकल्पयन्ति तइमे येषांनसादृक्पथे ' ॥

इति ॥ अस्यव्याख्याचन्द्रिकायाम् । ' तानि—अनुभवैकवेद्यानि इमानि वस्तूनि तइमे जनाः विकल्पयन्ति सदसद्वेतिविकल्पाविषयाणिकुर्वन्ति । येषां जनानां सा प्रक्रान्तासुन्दरीदृक्पथे लोचनमार्गे नास्तीत्यन्वयः ' इत्यादि ॥

अत्र—' विकल्पयन्ति ' इत्यस्य ' सदसद्वेतिविकल्पविषयाणि कुर्वन्ति ' इति व्याख्यानमत्यन्तानुपपन्नम् ॥

कुतइतिचेदुच्यते । इदन्तुतात्पर्यंपद्यस्य । प्रकृतांसुन्दरीं ये नापश्यन् ते इमानि मुक्ता प्रवाल मधुरस विधुमण्डलरूपाणि वस्तूनि विकल्पयन्ति विरुद्धं यथातथाकल्पयन्ति जानन्ति प्रतिपादयन्तिवा मुक्ताप्रवालमध्यवर्तिनंमधुरसं पुष्पेविद्यमानंजानन्ति विधुमण्डलेस्थितौ मुक्ताविद्रुमावर्णवेजानन्ति शङ्खस्थितंविधुमण्डलं उदयगिरिशिखरेजानन्ति येतुतांव्यलोकयन् तेतु मधुरसं मुक्ताविद्रुमयोर्मध्येस्थितञ्जानन्ति । मुक्ताविद्रुमाविन्दुमण्डलस्थौ विधुमण्डलं शङ्खमूर्ध्निस्थितं इति भावः ॥

अत्र—मुक्तादिशब्दैर्दन्तादयोनिगीर्याध्यवसिताः इत्यतिशयोक्तिः । मधुरसादीनां ' पुष्पपरंधूर्वेहं ' ' नार्णवे ' नोदयगिरिशिखरे ' इति निषेधादपह्नुतिगर्भत्वमिति लक्षणसङ्गतिः ॥

एवंस्थिते चन्द्रिकाकारः ' विकल्पयन्ति ' इत्यस्य, ' विविधः कल्पोविकल्पः ' इति व्युत्पत्याविरूद्धोभयकोटिकज्ञानपरतांमत्वा ' सदसद्वे ' तितादृशसन्देहात्मकज्ञानाकारञ्चप्रकटीचकार ॥ एवंसति ये तां नापश्यन्, ते मौक्तिक विद्रुम मधुरस विधुबिम्बरूपाणि लोकेप्रत्यक्षसिद्धानि वस्तूनि ' इमानिसन्तिवा नवे ' तिसन्दिहते इत्युक्तं

भवति ॥ इदन्तु अत्यन्तानुपपन्नम् । तथाहि । एकस्याप्रत्यक्षत्वे तदन्यस्य प्रत्यक्षविषयस्यापिसन्देहविषयत्वं भवतिवा ? नह्यदृष्टेघटे प्रत्यक्षेचघटे अयंपटोनवेति संशयोभवति । तथात्रापिसुन्दर्यामदृष्टायां मुक्ताप्रवालादीनांदृष्टानां सन्देहविषयत्वं नसंभवति । इति ॥

किञ्च—सुन्दरीमदृष्टवतां मौक्तिकादौ सत्वासत्वादिसन्देहात्तत्त्वेनाध्यवसानं दन्तादौ कथंवासंभवेत् ? नहि चन्द्रोस्तिनवेतिसंदेहे चन्द्रत्वेनमुखस्याध्यवसानंयुज्यते ॥ किन्तु प्रत्यक्षेणनिश्चितेसतिचन्द्रे चन्द्रत्वेनमुखस्याध्यवसानं भवति अध्यवसानाभावे अतिशयोक्तिरेवनास्तीति मूलच्छेदापत्तिः ।

तथा मुक्ताविद्रुमादीनामस्तित्वनिश्चयेसत्येव अर्णवाद्यधिकरणावच्छेदेन निषेध्यत्वं संभवति । निषेधंप्रतिप्रतियोगिनःकारणत्वात् । प्रतियोगिनस्सत्तासन्देहे निषेधासंभवादपह्नुतेरप्यभावाच्चसापह्नवातिशयोक्तेस्सम्यगुदाहरणमुपपादितं भवतीति सन्तःपरिहसन्ति इति ॥

अपिच—‘ वस्तूनिविकल्पविषयाणिकुर्वन्ती ’ तिलेखनन्त्वत्यन्तखेदावहम् । नित्यपुंलिङ्गस्यविषयशब्दस्यबहुव्रीहिप्रसक्त्यभावेपि नपुंसकान्ततयाप्रयोगादिति ॥



## विषयः (२३) अतिशयोक्तिः (ख)

कुवलयानन्दे सापह्नवातिशयोक्तेर्लक्षणोदाहरणानिप्रदर्श्य अलङ्कारसर्वस्वकृता उत्प्रेक्षायां सापह्नवत्वमुक्तमिति ‘ गताखुतीर ’ मित्यादिपद्यमुदाहृत्योक्तयोर्वैलक्षण्यमुच्यते । ‘ ततस्त्वियानत्रभेदः यत्तत्रशुद्धापह्नुतिगर्भत्वं, यत्रफेनतातित्वमपह्नुतम् तत्रैवाट्टहासत्वोत्प्रेक्षणात् । इहतुपर्यस्तापह्नुतिगर्भत्वम् । इन्दुमण्डलादावपह्नुतस्यामृतादे स्सूक्त्यादिषुनिवेशनात् ’ इति ॥ अत्र—‘ इन्दुमण्डलादा ’ वित्याद्यन्तिमवाक्यस्यैवं चन्द्रिकादृश्यते ।

'इन्दुमण्डलादावित्यादिपदात्पुष्परसादिपरिग्रहः । मूक्तयादिष्विति । सूक्तिमाधुर्यादिष्वित्यर्थः । आदिना अधरमाधुर्यपरिग्रहः । निवेशनात् अभेदाध्यवसानात्' इति ॥ 'इन्दुमण्डलादा' विन्यादिकुवलयानन्दपङ्क्तेरयमर्थः ।

इन्दुमण्डलम्–'त्वत्सूक्तिषुसुधाराजन्भ्रान्ताःपश्यन्तितांविधौ' इत्युदाहरणे निषेधाधिकरणतयोक्तोविधुः इन्दुमण्डलशब्देनोच्यते । आदिपदात् 'मुक्ताविद्रुमे' त्यादिपद्ये निषेधाधिकरणतयोक्तानांपुष्पार्णवपूर्वाचलाभ्यन्तराणां परिग्रहः । 'अमृतादेः' इन्यत्रामृतपदेन, 'त्वत्सूक्तिषुसुधा' इति सुधापदोक्तं निषेध्यमारोप्यश्चामृतमुच्यते । आदिपदात्ताद्दशानां मधुरस मुक्ताविद्रुम चन्द्रमण्डलानां परिग्रहः । सूक्तयादिष्वित्यत्रसूक्तिपदेन निवेशनाधिकरणीभूतराजवचनानिविवक्षितानि, आदिपदात्ताद्दशानां मुक्ताविद्रुमान्तर इन्दुमण्डल शङ्खमूर्ध्नां परिग्रहः । निवेशनात् तत्रतत्रविद्यमानत्वेनज्ञानात् इत्यर्थः आरोपादितियावत् । विधौविद्यमानायास्सुधायास्सूक्तिषुनिवेशनं तत्रविद्यमानत्वेनज्ञानं कयाविधयेतिचेत् सुधात्वेनाध्यवसितस्यमाधुर्यस्यसूक्तिषुसत्त्वादितिभावः ॥

एवंस्थिते चन्द्रिकाकारः 'इन्दुमण्डलादौ' इत्यत्र 'आदि' पदा 'त्पुष्परसादिपरिग्रहः' इति यदवोचत्तदसङ्गतम् । पद्योक्तनिषेधाधिकरणपरम्परायां पुष्परसस्याकथनात् । किन्तु 'पुष्पादीनांपरिग्रह' इति भाव्यम् ॥

किञ्च—'सूक्तयादिषु' इत्यस्य 'सूक्तिमाधुर्यादिषु' इति यदर्थवर्णनम् तदप्यसङ्गतम् । सूक्तिपदस्यसूक्तिगतमाधुर्यार्थकत्वं लक्षणयाङ्गीकरणीयम् । लक्षणैवनिर्मूला । वाच्यार्थबाधःखलुलक्षणामूलम् । तदेवतुन । सूक्तयांविधौचसुधाया अबाधितत्वात् । गङ्गापदलक्षणयाशैत्यपावनत्वादिवत्फलस्याप्यभावात् । नापिफलाभावमात्रम् ।

किन्तुमहान्विरोधः । नहिमाधुर्येसुधा । अपितुसुधायांमाधुर्यम् । 'सतिधर्मिणिधर्माश्चिन्त्यन्ते'। इतिहिन्यायः । अतोत्रलक्षणाबाधितैव । अपितुसूक्तिशब्दार्थः राजवचोरूपोवाच्यएव ॥

अपिच—एकस्मिन्वाक्ये एकःपदार्थः, समानविभक्तिकपदवाच्ययोर्द्वयोर्यदाऽन्वेति तदेकरूपेणान्वयस्स्वरससिद्धः । यथा 'गामानय गांवधान' 'अश्वमानय अश्वंबधान' इति वृद्धव्यवहारे गोर्बन्धनकर्मत्वमुक्त्वा अश्वपदस्यलक्षणया अश्ववालंबधानेत्यर्थकत्वमस्वरसमितिकृत्वा गोरश्वस्यचबन्धनकर्मत्वमेकरूपंस्वीक्रियते तथाप्रकृतेपि अधिकरणार्थकसप्तम्यन्तपदवाच्ययोस्सूक्तिविध्वोस्सुधाया आधेयतया एकरूपेणान्वयेस्वारस्यम् ॥

यदपि 'आदिना अधरमाधुर्यपरिग्रहः' इत्युक्तम्, तदप्यसङ्गतम् । अत्रसूक्तीनांविधौनिषिद्धायास्सुधाया आरोपाधिकरणत्वेनविवक्षितत्वात्तादृशसूक्तिपदोत्तरं विद्यमानेनादिपदेनाप्यारोपाधिकरणान्येव वाच्यानि तानिच 'मुक्ताविद्रुमे' त्यादिपद्ये अधिकरणवाचकसप्तम्यन्तपदनिर्दिष्टानिवस्तूनि मुक्ताविद्रुममध्य प्रालेयद्युतिमण्डल शङ्खशिरांस्येव । नत्वधरमाधुर्यम् । तस्मिन्पद्ये अधरमाधुर्यस्याधिकरणतया निर्देशाभावात् ॥

यच्च —'निगरणात्' इत्यस्य, 'अभेदाध्यवसानात्' इति व्याख्यानम् । तदपिकुवलयानन्द विरुद्धम् । तथाहि । एवमेवहि 'त्वत्सूक्तिष्वि' त्यादेर्व्याख्या कुवलयानन्दे 'अत्रत्वत्सूक्तिमाधुर्यमेवामृतमित्यतिशयोक्तिः चन्द्रमण्डलस्थममृतं नभवतीत्यपह्नुतिगर्भा' इति ॥ अनेनचैतदुक्तं भवति । सूक्तिषुविद्यमानंमाधुर्यं माधुर्यपदेनानुक्त्वा सुधापदेननिगीर्याध्यवसितमिति तदंशेऽतिशयोक्तिः । आरोपार्थोधर्मनिषेधोऽपह्नुतिरित्यपह्नवलक्षणात् विधौविद्यमानं सुधारूपं धर्मं विधौनिषिध्य सूक्तिष्वारोपात्सापह्नवत्वम् । तथाच सापह्नवातिशयो-

क्तित्वमुपपन्नमिति ॥ इत्थञ्च—' इन्दुमण्डलादावपह्नुतस्यामृतादेस्सू-क्त्यादिपुनिवेशनात् ' इत्यत्र निवेशनमारोप इति दीक्षितकण्ठोल्लग्राह्य-मिति ' अभेदाध्यवसानात् ' इत्यर्थो विरुद्धएव ॥

॥ इति सापह्नवातिशयोक्तिः ॥



विषयः (२४) अथ भेदकातिशयोक्तिः

कारिकायां भेदकातिशयोक्तिरेवं लक्षितोदाहृताच ॥

' भेदकातिशयोक्तिस्तुतस्यैवान्यत्ववर्णनम् ।
अन्यदेवास्यगांभीर्यमन्यद्धैर्यं महीपतेः ' ॥

इति ॥ अत्र लक्ष्येलक्षणसमन्वयप्रकार एवं कुवलयानन्दे प्रतिपादितः ॥ ' अत्र लोकप्रसिद्धगांभीर्याद्यभेदेपि भेदोवर्णितः ' इति । अत्र चन्द्रिका ' तस्यैव-तज्जातीयस्यैव । अन्यत्ववर्णनम् । तच्चाहार्यबोध्यम् एवमग्रेपि । तेनभ्रान्तौनातिव्याप्तिः इदञ्च लोकोत्तरत्वप्रतिपत्त्यर्थम् । अन्यदेवेति । प्रसिद्धगांभीर्यभिन्नमेवेत्यर्थः ' इति ॥

प्रथमं मूलकारिकार्थो विचार्यते ' तस्यैवान्यत्ववर्णनं भेदकातिशयोक्ति ' रितिलक्षणम् । तस्यैव वर्णनीयत्वेनविवक्षितस्यैव अन्यत्व-वर्णनंकस्मादन्यत्ववर्णनमितिचेत् । अर्थाद्वर्णनीयत्वेनविवक्षितंयत् त-द्भिन्नादन्यत्ववर्णनं क्रियतेचेत् ' घटःपटोनभवती ' त्युक्ते भेदस्य चम-त्कारित्वाभावाद्यथानालङ्कारत्वं तथैवस्यात् । तस्मिंस्तद्भिन्नान्यत्वस्य सिद्धत्वात् ॥

इतःपरं कुवलयानन्दप्रतिपादिता समन्वयरीतिस्संभवतिनेति-विचार्यते ॥ अत्र वर्णनीयमहीपतिगांभीर्ये लोकप्रसिद्धगांभीर्याद्यभेदेपि लोकप्रसिद्धंयद्गांभीर्यं समुद्रादिनिष्ठम् तदभेदः प्रकृतमहीपतिगांभीर्ये-नास्त्येव । तत्तद्गांभीर्यस्यतत्तन्मात्रवृत्तित्वात् । तथाचासम्भवः ॥ ततश्च-न्द्रिकोक्तरीत्यालक्षणं सम्भवति नेतिविचार्यते । कारिकास्थस्य ' त-

स्यैवे' तिपदस्य चन्द्रिकायां 'तज्जातीयस्यैव' इत्यर्थकथनात्, तज्जातीयस्यैव–गांभीर्यत्वरूपजातिविशिष्टस्य प्रकृतमहीपतिनिष्ठगांभीर्यस्यैव अन्यत्ववर्णनम् तज्जातीयान्यत्ववर्णनम् ' गांभीर्यत्वजातिविशिष्टान्यत्ववर्णनमितियावत्। तच्च नरपतिगांभीर्ये, औदार्यत्वादिजातिविशिष्टत्वेन वर्णनमित्यसंबद्धभाषणम् ॥

अतः । प्रकृतमहीपतिगांभीर्ये लोकप्रसिद्धगांभीर्याभेदसंपादनाय गांभीर्यत्वजात्यवच्छिन्नत्वेनरूपेणो भयोर्गांभीर्ययोरभेदाङ्गीकारे भेदःकेनरूपेणवर्णनीय इति विचारणीयम् । गांभीर्यत्वजात्यवच्छिन्नत्वेन भेदोनास्त्येव । किन्त्वभेदएव । भेदस्तुतत्तद्व्यक्तित्वेनैव । सचभेदः आहार्योनभवत्येव । अनाहार्यस्यालंकारत्वमेवनास्ति । अतएवचन्द्रिकायां 'अन्यत्ववर्णनं तच्चाहार्यं तेनभ्रान्तौनातिव्याप्तिः' इत्युक्तम् । 'भेदस्तुतत्तद्व्यक्तित्वेनैव । सचानाहार्यः' इत्यपिसूचितं चन्द्रिकायाम् 'अस्यमहीपतेर्गांभीर्यमन्यदेव प्रसिद्धगांभीर्यभिन्नमेवेत्यर्थः' इत्युक्तेः ॥ तथाच—कुवलयानन्दरीत्या चन्द्रिकारीत्याच लक्षणसमन्वयोनसंभवत्येव ॥ अतः किङ्करणीयमितिचेदुच्यते ॥ तस्यैव वर्णनीयस्यैव अन्यत्ववर्णनम् । कस्मादन्यत्वमिति देत् तस्यैवेत्यनेनयदुक्तम् तस्मादन्यत्ववर्णनम् । तस्मिंस्तदभेदस्यप्रसिद्धत्वात् तस्मिंस्तद्भेदस्याहार्यत्वाच्चमत्कारित्वाच्चालङ्कारोभवति । तस्मिंस्तदन्यत्वकथनस्यच लोकविलक्षणत्वद्योतनंफलम् । एवमर्थकथने नकाचिदप्यनुपपत्तिः । स्वरसताच । तस्यैवेतिकारिकागतैवकारस्यात्यन्तस्वारस्यञ्च ॥

अत्रचार्थेसंमतिरस्ति । 'प्रस्तुतस्ययदन्यत्वं' इतिकाव्यप्रकाशकारिकांशमादाय काव्यप्रदीपे व्याख्यातम् । 'यच्चतदेववस्तु अन्यत्वेनविविक्ताकारवस्त्वन्तरत्वेनाध्यवसीयते साद्वितीया इति ॥

॥ इति भेदकातिशयोक्तिविचारः ॥



विषयः (२५) सम्बन्धातिशयोक्तिविचारः (घ)

अत्र रसगङ्गाधरकारोजगन्नाथः कुवलयानन्दकारेदीक्षिते दोषमेवमुद्घाटयति ॥

" ' सम्बन्धातिशयोक्तिस्स्यादयोगेयोगकल्पनम् ' इति कुवलयानन्दकारिकायां सम्बन्धातिशयोक्तेर्लक्षणमुक्त्वा, ' सौधाग्राणिपुरस्यास्यस्पृशन्तिविधुमण्डलम् ' इति यदुदाहृतम्, तन्नसम्भवति । उक्तोदाहरणवाक्ये ' स्पृशन्तीवेन्दुमण्डलम् ' इति पाठेकृतेऽलङ्कारउत्प्रेक्षेत्येतत्सर्वसम्मतम् । इवाद्युत्प्रेक्षावाचकशब्दप्रयोगे यावाच्योत्प्रेक्षा, सैववाचकाप्रयोगे गम्योत्प्रेक्षेत्यपिनिर्विवादम् ॥ इत्थञ्च—' सौधाग्राणि ' इत्याद्युक्तोदाहरणे गम्योत्प्रेक्षैवोचिता । नत्वतिशयोक्तिः । तथैवोत्प्रेक्षाप्रकरणान्ते कुवलयानन्दे प्रतिपादितम्, ' उत्प्रेक्षाव्यञ्जकत्वेनपरिगणितानां शब्दानां प्रयोगेवाच्याः । तेषामप्रयोगे गम्योत्प्रेक्षाः यथा, ' त्वत्कीर्तिर्भ्रमणश्रान्ता विवेशस्वर्गनिम्नगाम् ' इति " इति ॥

तथाच—' सौधाग्राणि ' इत्यस्य, ' त्वत्कीर्ति ' रित्यस्यचवैलक्षण्याभावात् ' सौधाग्राणी ' त्यत्रगम्योत्प्रेक्षैव । नत्वतिशयोक्तिः । तस्मादुत्प्रेक्षासामग्रीयत्रनास्ति, तादृशमुदाहरणन्देयम् यथा ॥

' धीरध्वनिभिरलन्ते नीरदमेमासिकोगर्भः ।
उन्मदवारणबुद्ध्या मध्येजठरंसमुल्लुठति ' इति " इति ॥

चान्द्रिकाकारस्तु ' व्यञ्जकप्रयोगेयत्रोत्प्रेक्षा तत्र तदप्रयोगे गम्योत्प्रेक्षा ' इति नियमस्य कुत्रप्रसक्तिरिति चेत् यत्रव्यञ्जकपदाभावे अलङ्कारान्तरंनास्ति, तत्रैव । अन्यथा ' नूनंमुखंचन्द्रः ' इत्यत्र उत्प्रेक्षायांस्फुटायां नूनंपदाभावेगम्योत्प्रेक्षास्यात् । नतुरूपकम् । तस्मात्प्रकृते ' सौधाग्राणी ' त्युदाहरणे सौधाग्राणामिन्दुमण्डलस्पर्शसंबन्धाभावेपि तत्संबन्धरूपातिशयोक्तेस्सत्वात् ' मुखञ्चन्द्र ' इत्यत्रेव गम्योत्प्रेक्षाप्रसक्तिर्नास्ति । दीक्षितप्रदर्शितगम्योत्प्रेक्षोदाहरणे ' त्वत्कीर्तिर्भ्र-

मणश्रान्ता विवेशस्वर्गनिम्नगाम्' इत्यत्रतु 'भ्रमणश्रान्ते' तिहेतुगर्भविशेषणात्तादृशहेत्वंशेगम्योत्प्रेक्षा नतुस्वर्गङ्गाप्रवेशांशे इति सर्वमवदातम्' इति ब्रूते ॥

अत्र वयमित्थमुत्पश्यामः । यद्यपि 'त्वत्कीर्ति' रित्युदाहरणे 'भ्रमणश्रान्तेतिकीर्तिविशेषणात्तस्यत्रहेतुगर्भत्वा त्कीर्तिर्भ्रमणश्रान्तत्वादिव स्वर्गङ्गांविवेश' इति हेतूत्प्रेक्षागम्याभवति । 'सौधाग्राणी' त्युदाहरणेतु सौधाग्राणांविशेषणाभावाद्विधुमण्डलस्पर्शासंबंधेपितत्संबंधरूपातिशयोक्तिरेवलब्धावकाशागम्योत्प्रेक्षां निवारयतीत्युक्तश्चन्द्रिकाकारेण नागेशभट्टेनच ॥ तथापि—'लिम्पतीवतमोङ्गानि' इत्यत्रेव 'सौधाग्राणिपुरस्यास्यस्पृशन्तीवेन्दुमण्डलम्' इत्यत्रापि वाच्योत्प्रेक्षासर्वसंमता । इवादिपदप्रयोगेवाच्या तदप्रयोगेगम्योत्प्रेक्षेत्यपि सर्वसंमतम् । इवादिरहितवाक्ये अलङ्कारान्तरानाक्रान्तत्वमपीप्यताम् । 'लिम्पतीवे' त्यत्र इवपदत्यागे 'तमोङ्गानिलिम्पति' इत्यत्रकोऽलङ्कारः? गम्योत्प्रेक्षेतिचेत् 'सौधाग्राणी' त्यत्रापिगम्योत्प्रेक्षैवस्यात् । उभयोर्वाक्ययोस्तुल्यत्वात् । तथाहि । 'तमः' 'सौधाग्राणि' इति कर्तृवाचकयोः, 'अङ्गानि' 'विधुमण्डलम्' इति कर्मवाचकयोः, 'लिम्पति' 'स्पृशन्ति' इति क्रियावाचकयोश्चपदयोस्तुल्यत्वमेव । पदान्तरन्तूभयोरपिवाक्ययोर्नास्त्येव । एवमपि 'सौधाग्राणी' त्यत्रातिशयोक्तिः, 'तमोङ्गानिलिम्पति' इत्यत्रगम्योत्प्रेक्षा इतिवक्तुं न किञ्चिन्नियामकं पश्यामः । यदि 'तमोङ्गानिलिम्पती' त्यत्रापि संबन्धातिशयोक्तिरिष्यते । तदा 'वर्षतीवाञ्जनंनभः' इत्यादि स्वरूपोत्प्रेक्षासामान्ये इवाद्यभावे संबन्धातिशयोक्तेरेववक्तव्यत्वापातात्स्वरूपोत्प्रेक्षासामान्यस्य गम्यत्वं नस्यात् ॥

यदप्युक्तं चन्द्रिकाकारेण 'त्वत्कीर्तिरित्युदाहरणेतु भ्रमणश्रान्तत्वरूपहेत्वंशे गम्योत्प्रेक्षाभिप्रेता नतुस्वर्गङ्गाप्रवेशांशे' इति । तदपि

नयुक्तियुक्तम् ॥ ' त्वत्कीर्ति ' रित्यत्र इवादिपरिग्रहे, इवस्यच भ्रमण-श्रान्तेव ' इति योजनेहेतूत्प्रेक्षावत् ' विव्रेशेवे ' तियोजने ' लिम्पतीवे ' त्यादिवत् स्वर्गङ्गाप्रवेशस्वरूपोत्प्रेक्षायानिषेधे नियामकाभावात् ॥

किञ्च—चन्द्रिकाकारेण अतिशयोक्तिसामान्यलक्षणप्रस्तावे रूपकस्वभावोक्तिभिन्नेषुप्रायस्सर्वेष्वप्यलङ्कारेषु अतिशयोक्तिसामान्यलक्षणस्यातिप्रसङ्गमाशङ्क्य, काव्यप्रकाशसंगृहीतात्

' सैषासर्वत्रवक्रोक्तिरनयाऽर्थोविभाव्यते ।
यत्नोस्यांकविभिःकार्यः कोऽलङ्कारोऽनयाविना ' ॥

इति भामह वचनात् ।

' अलङ्कारान्तराणामप्येकमाहुः परायणम् ।
वागीशसहितामुक्ति मिमामतिशयाह्वयाम् ॥

इति दण्डिवचनाच्च, वहुष्वलङ्कारेष्वतिशयोक्तेरङ्गतयाघटकत्वेपि ' प्राधान्येनव्यपदेशाभवन्ति ' इति न्यायेन तत्तदलङ्काराणामेवप्राधान्येन व्यवहारार्हत्वम् । नत्वतिशयोक्तेरितिवक्ष्यमाणत्वेन ' सौधाग्राणी ' त्यत्रापिगम्योत्प्रेक्षैवक्तपदा अतिशयोक्तिमेवाकिञ्चित्कराङ्करोतीति स्वोक्तिविरोधोऽपीति ॥ जगन्नाथोदाहृते ' धीरध्वनिभि ' रित्यादिपद्येतु सिह्मवध्वामासिकगर्भस्य जठरमध्ये समुल्लुठनासम्बन्धेपि तत्सम्बन्धरूपातिशयोक्तिरेवक्तपदागम्योत्प्रेक्षां वारयति ॥

ननु—' धीरध्वनिभि ' रित्यादिपद्येपि ' मध्ये जठरंसमुल्लुठतिनूनम् ' इति पाठेकृते उत्प्रेक्षाभवत्येव । इदानीं नूनंपदाभावाद्गम्योत्प्रेक्षैवेतिवाच्यम् । अन्यधर्मसम्बन्धनिमित्तेनान्यस्यान्यतादात्म्यसंभावनंकिलोत्प्रेक्षा । ' धीरे ' त्यादिपद्ये नूनं पदप्रयोगेप्युत्प्रेक्षायानावकाशः । नूनंपदेन संभावनायावोधनेपि अन्यधर्मसंवन्धरूपनिमित्तमपिनास्ति । अन्यतादात्म्यमपिनास्ति । अन्यस्यैवाभावात् । अन्यधर्मस्याप्यभावाच्च ॥

नच मासिकगर्भधर्मिणि समुल्लुठनाभाववति समुल्लुठनरूप-धर्मोत्प्रेक्षास्यादितिवाच्यम् । तत्पक्षस्योत्प्रेक्षाप्रकरणे कुवलयानन्दकृ-तैवास्वारस्येनपरित्यक्तत्वात् । एवं हि तत्रवाक्यम् ॥ 'केचित्तु तमो नभसोर्विपययो स्तत्कर्तृकलेपनवर्षणस्वरूपधर्मोत्प्रेक्षेत्याहुः तन्मते स्व-रूपोत्प्रेक्षायां धर्म्युत्प्रेक्षा, धर्मोत्प्रेक्षाचेत्येवं द्वैविध्यं द्रष्टव्यम्' इति ॥ अस्यचन्द्रिका । 'केचिदिति मते इति चास्वरसोद्भावनम् । तद्बीजन्तु तमोनभसोः कर्तृत्वेन विषयत्वेनच वारद्वयमन्वयक्लेशः । तथा धर्म्यु-त्प्रेक्षा साधर्म्यप्रयुक्ता, धर्मोत्प्रेक्षातु तत्सहचरित धर्मसम्बन्धप्रयुक्तेति लक्षणाननुगमः' इति ॥

तथाच—जगन्नाथोदाहृतपद्येसर्वेथोत्प्रेक्षायानैवावकाशः । कि-न्त्वतिशयोक्तिरेवेति ॥

॥ इति सम्बन्धातिशयोक्तिविचारः ॥



विषयः (२६) चपलातिशयोक्तिः (ङ)

'चपलातिशयोक्तिस्तु कार्येहेतुप्रसक्तिजे ।
यास्यामीत्युदितेतन्व्यावलयोऽभवदूर्मिका' ॥

इति कुवलयानन्दकारिका, उदाहरणश्चेदं पद्यम् ।

'आदातुंसकृदीक्षितेपिकुसुमेहस्ताग्रमालोहितं
लाक्षारञ्जनवार्तयापिसहसारक्तं तलंपादयोः ।
अङ्गानामनुलेपनस्मरणमप्यत्यन्तखेदावहं
हन्ताधीरदृशः किमन्यदलकामोदोपि भारायते' इति ॥

अत्र चन्द्रिका । 'सहजसौकुमार्यवत्याः विरहदशायां तदति-शयवर्णनमिदम् । हन्तेतिखेदे आदातुं ग्रहीतुं सकृत् एकवारमपि

कुसुमे ईक्षितेसति अधीरदृशः हस्ताग्रमालोहितं भवतीतिशेषः अपिना किमुतगृहीते इति गम्यते । लाक्षयायद्रञ्जनं तद्वार्तयापि सहसा अकस्मात् पादयोस्तलंरक्तं भवति किमुतरञ्जनेनेति भावः ' इति ॥ अस्यपद्यस्य यस्मिन्ग्रन्थे यच्च प्रकरणं, तत्तु न निरूपितमनेन । पद्येपितादृशं विरहप्रकरणंनदृश्यते । विरहप्रकरणन्तु स्वोत्प्रेक्षितम् । स्वोत्प्रेक्षायाअपि प्रकृतानुकूल्ये उपादेयत्वम् । प्रकृतविरोधेतु त्याज्यतैव ॥ पद्यस्यावतारिकायां सहजसौकुमार्यवत्यास्तदतिशयवर्णनमिदमित्युक्तम् । तथाचसौकुमार्यातिशयवर्णनं प्रकृतम् । एतद्विरुद्धं विरहदशायामितिकथनम् । कथमितिचेत् ॥

हस्ताग्रालोहितत्व पादतलरक्तत्वादीनां विरहकार्यत्वंवर्ततेनवा । वर्ततेचेत्तेनकार्येण तत्कारणीभूतोविरहातिशयएव ज्ञातोभवति नतुसौकुमार्यातिशयः । तेनान्यथासिद्धत्वात् ॥

वस्तुतोविरहकार्यत्वमपिनास्तितेषाम् विरहेहिचिन्तादिना रक्तशोषणात्कार्श्यपाण्डुतादीनां जननात्पाणिपादादीनांरक्तत्वं न सम्भवतीति ॥ किञ्च–सौकुमार्यंनाम संमर्दासहत्वमङ्गानाम् संमर्देह्यङ्गानां जनसामान्यस्य रक्तत्वंभवति, तत्रापि सुकुमाराणाम् ॥

हस्तपादलौहित्यादीनां विरहकार्यत्वं यदानास्ति, तदा लौहित्यादिकार्यबलात्सौकुमार्यमेवज्ञायते नतुविरहः । इति ' विरहदशाया ' मित्युक्तमसङ्गतमेव ॥

अपिच–एतत्पद्यप्रतिपाद्या नायिका किं स्वैरिणी ? उतसाध्वी ? स्वैरिणीत्वे विरहएवासम्भावितः । साध्वीत्वे तस्याविरहदशायां कुसुमापचयालक्तकरसरञ्जनाङ्गानुलेपनादि वर्णनमपि किमौचितीमवलम्बते ? तस्मादत्यन्तासङ्गतमेवैतत् ॥ किन्तुकामिन्यास्सौकुमार्यातिशयवर्णनपरमेवेदं पद्यम् ॥

अन्यच्च । 'हन्तेतिखेदे' इति व्याख्यातम् । तदपेक्षयापि अनुकम्पार्थकत्वंसाधीयः, 'हन्ते' त्यस्य वक्तुर्वचनरूपत्वान्नायिकायाः खेदेपिवक्तुस्तां दृष्ट्वाऽनुकम्पाया एवजायमानत्वाच्चेति ॥

अपरञ्च–'सहसा' इति पदं, 'अकस्मात्' इति व्याख्यातम् । तदपेक्षया 'अतर्कितंयथातथा' इति व्याख्यातुमुचितम् । 'अतर्किते-तुसहसा' इंति कोशात् । अकस्मादित्युक्ते, हेतुं विनेत्यर्थः । आक-स्मिकत्वं निर्हेतुकत्वञ्चनार्थान्तरम् । पादतलरक्तत्वंप्रति लाक्षारञ्जनवा-र्तायाएव तृतीययाहेतुत्वकथनादाकस्मिकत्वं निर्हेतुकत्वं न संभवति । किन्त्वतर्कितमेवपादतलं रक्तमभूदितितुयुक्तम् ॥

॥ इत्यतिशयोक्तिविचारः ॥



## विषयः (२७) तुल्ययोगितालङ्कारः (क)

तुल्ययोगितालङ्कारे कुवलयानन्द रसगङ्गाधरकृतोरयं विवाद-विषयः । प्रकृतानामेवैकधर्मान्वये, अप्रकृतानामेववातदन्वये तुल्ययोगि-तेतिसर्वसंमतम् । एकधर्मान्वय इत्यत्र सचधर्मःकीदृश इति जिज्ञा-सायाम् 'गुणक्रियासंबद्धत्वे तुल्ययोगिता' इत्यलङ्कारसर्वस्वकारेण, 'गुणक्रियारूपैकधर्मान्वयस्तुल्ययोगिता' इति कुवलयानन्दकृताचो-क्तम् ॥

जगन्नाथस्तु—सचैकोधर्मः गुणक्रियामात्ररूपोनभवति । किन्त्व-भावादिरूपोपिभवति । इत्यभिप्रायेणलक्षणे आदिपदंन्यवेशयत् । सर्व-स्वकुवलयानन्दकृतोर्लक्षणे गुणक्रियानिर्देशो धर्ममात्रस्योपलक्षकः इत्य-पिसमादधे ॥ चन्द्रिकाकारस्तु प्रतिवक्त्येवम् । यद्रसगङ्गाधरकारेण अभावरूपैकधर्मान्वयोदाहरणं प्रदर्शितम् ॥

' शासतित्वयि हेराजन्नखण्डावनिमण्डलम् ।
नमनागपिनिश्चिन्ते मण्डलेशत्रुमित्रयोः ' ॥

इति तत्र शत्रुमित्रयोर्मण्डले निश्चिन्तेन, इति निश्चिन्तशब्देन चिन्ताभाववानुच्यते । न, इत्यनेन चिन्ताभाववद्भेदउच्यते । सचाभावः शत्रुमित्रमण्डलयोः प्रकृतयोरेकधर्मतयान्वेतीतिचोक्तम् । तत्र धर्मः अभावरूपोनभवति। किन्तु अभावाभावस्यभावरूपत्वात्प्रकृते चिन्ताभाववद्भेदस्य चिन्तारूपत्वाच्चिन्तायाश्च गुणत्वाद्गुणरूपएवधर्मः। अभावाभावस्यातिरिक्तत्वेनभावरूपत्वंनाङ्गीक्रियत इतिपक्षेसत्यपि अभावस्य गुणरूपत्वमेव। वैयाकरणैरालङ्कारिकैश्च जातिक्रियाद्रव्यातिरिक्तस्य पदार्थस्य गुणत्वमङ्गीक्रियते । अभावस्तु जातिःक्रियाद्रव्यं वा नभवतीति परिशेषाद्गुणएव ॥

अतएवकाव्यप्रकाशे विरोधालङ्कारप्रकरणे ' जातेर्गुणेन विरोधे-यथा ॥

गिरयोप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोप्यगंभीराः ।
विश्वंभराप्यनिलघु नरनाथतवान्तिकेनियतम् ॥

अत्र गिरित्वादिजातीनां अनुन्नतत्वादिगुणैर्विरोधः ' इत्युक्तम् । अत्र पद्येऽनुन्नतत्वादीनामुन्नतत्वाभावादिरूपाणामपि गुणरूपत्वमुक्तम्। इति। वस्तुतस्तुलक्षणे नतेनरूपेण धर्मस्यनिवेशोऽभिप्रेत इत्यावेदितमतो नकाप्यनुपपत्ति ' रितिच ॥

अत्रायमस्मदीयोऽभिसन्धिः। चन्द्रिकाकारेणप्रथमं महतासन्दर्भेणाभावस्यगुणत्वं समर्थितम् । तेनच गुणक्रियारूपैकधर्मान्वये सत्येवतुल्ययोगितेतिस्थापितं भवति ॥ ' वस्तुतस्तु ' इत्यादिवाक्येनतु लक्षणे धर्मस्यगुणक्रियारूपत्वं ननिवेश्यतइत्युक्तं भवतीति स्वोक्तिविरोधः ॥

'रसगङ्गाधरकारेणतु 'सर्वस्वकारकुवलयानन्दकारयोर्लक्षणयो र्गुणक्रियेत्युपलक्षणंवाधर्ममात्रस्य' इतिस्वेनैवविरोधः परिहृतः। तदुक्तमेवानूदितं चन्द्रिकाकारेण 'वस्तुतस्तु' इत्यादिना। नतुकिञ्चिदभिनवमभिहितम्॥

यदिच—गुणक्रियारूपधर्मस्य लक्षणेनिवेशोदीक्षितानभिमतस्स्यात् तदा 'वर्ण्यानामितरेषांवाधर्मैक्यंतुल्ययोगिता'। इतिकारिकामात्रेणविरमेत्। नतु 'गुणक्रियारूपैकधर्मान्वयस्तुल्योगिता' इति लक्षणवाक्यं विवृणुयात्। नापि 'सङ्कोचरूपैकक्रियान्वयोदर्शितः' 'कठोरतारूपैकगुणान्वयोदर्शितः' इतिलक्षणसमन्वयप्रकारञ्चकथयेत्। पुनरपि 'सञ्जातपत्रप्रकर' 'नागेन्द्रहस्ता' इत्यादिपद्यद्वयमुदाहृत्य लक्षणसमन्वयश्चैवंकृतः। 'अत्रग्रीष्मवर्णने तदीयत्वेनप्रस्तुतानां दिनानां पद्मानाञ्चैकक्रियान्वयः ऊरुवर्णनेतु अप्रस्तुतानां करिकराणां कदलीविशेषाणाञ्चैकगुणान्वयः' इति। गुणक्रियाव्यतिरिक्तैकधर्मान्वयस्तुलक्षणे उदाहरणेवानप्रदर्शितएव।

तस्माच्चन्द्रिकाकारोक्तो दीक्षिताभिप्रायो दीक्षितवाक्यान्नावगम्यते॥ किन्तुजगन्नाथोक्तिरेवानूदिता॥



## विषयः (२८) तुल्ययोगिता (ख)

तुल्ययोगितायां क्रियारूपैकधर्मान्वयस्योदाहरणतयोपात्तमिदं पद्यम्।

'सञ्जातपत्रप्रकरान्वितानि समुद्वहन्ति स्फुटपाटलत्वम्।
विकस्वराण्यर्ककराभिमर्शाद्दिनानि पद्मानिच वृद्धिमीयुः'

इति॥ अस्यचन्द्रिका—'सञ्जातेति। दिनानिपद्मानिचवृद्धिमीयुः

प्रापुः । कीदृशानि सञ्जातैःपत्राणांप्रकरैः समूहैः अन्वितानि । पूर्वपत्राणां वसन्तेविगलनात् ' इति ॥

इदन्तुव्याख्यानमस्वरसम् । तथाहि । अत्रग्रीष्मोवर्ण्यते । तत्रापि अह्नःपद्मश्च प्रकृतमेव वृद्धिप्राप्तिरूपैकधर्मान्वयितयावर्ण्यते । अस्यविशेषणस्य दिनपरतया व्याख्यानमिदम् । पद्मपक्षेव्याख्या नकृता । इदन्तुतात्पर्यम् । वृक्षसामान्यस्य पूर्वपत्राणि वसन्ते विगलन्ति । ग्रीष्मे नूतनान्याविर्भवन्ति तैरन्वितानिदिनानीति ॥ एतच्चदिनासाधारणंनभवति । रात्रावपितथात्वात् । अतः—' सञ्जातपत्रप्रकराङ्कितानि ' इति पाठाङ्गीकारेण, सज्ञानां विस्तृतानां आतपत्राणां छत्राणां प्रकरैरङ्कितानि । इत्यर्थोवक्तव्यः । ग्रीष्मदिनेषु सातपत्राएवसर्वे सञ्चरन्तीतिभावः । पद्मानितु सञ्जातानां सम्यक्जातानां पत्राणां दलानां प्रकरैराङ्कितानि । इति ॥ अयन्तुपाठःकाव्यदर्पणेदृश्यते ॥

तथा—' समुद्वहन्तिस्फुटपाटलत्वम् ' इत्यस्य, पद्मपक्षे चन्द्रिकायांव्याख्या । ' स्फुटानि विकसितानिचतानि पाटलानि पाटलवर्णानि तेषां भावस्तत्त्वत् ' इति ॥

अत्र ' भोज्योष्ण ' मितिवद्विशेषणोभयपदकर्मधारयात्पद्मानामेवविकसितत्वं पाटलत्वञ्चोक्तंभवति । विकसितत्वन्तु ' विकस्वराण्यर्ककराभिमर्शात् ' इति विशेषणादेवलभ्यमिति पुनरुक्तम् ॥

अतः—स्फुटः व्यक्तः पाटलः श्वेतरक्तवर्णः येषान्तानि तेषां भावः तत्समुद्वहन्ति इति व्याख्येयम् अथवा स्फुटं व्यक्तंचतत् पाटलत्वञ्च तत् इति ॥



विषयः (२९) तुल्ययोगिता (ग)

हिताहितेवृत्तितौल्यमपरातुल्ययोगिता ।
प्रदीयतेपराभूतिर्मित्रशात्रवयोस्त्वया ' ॥

इति कुवलयानन्दकारेण द्वितीयतुल्ययोगितायाः लक्षणमुदाहरणञ्च प्रदर्शितम् ॥ अत्र–रसगङ्गाधरकारस्यायमाशयः । तुल्ययोगितायां प्रकृतानामेवाप्रकृतानामेववा ययाकयापिविधया एकधर्मान्वयश्चमत्कारकारी । नतुगुणक्रियामात्ररूपधर्मैक्ये ॥ 'एकस्त्वं दानशीलोसि प्रत्यर्थिषु तथार्थिषु' इत्यत्रार्थिप्रत्यर्थिनोरुभयोः प्रकृतयोर्दानशब्दवाच्यवस्तुसंबन्धित्वरूपैकधर्मान्वयात्तुल्ययोगिता । अर्थिषु स्वस्वत्वध्वंसपूर्वकपरस्वत्वापादनरूपदानसंप्रदानत्वरूपसंबन्धित्वम् । प्रत्यर्थिषु 'दोअवखण्डने' इति धातोर्ल्युडन्तस्य वाच्यभूतच्छेदनस्य कर्मत्वरूपसंबन्धित्वम् । इति यथाकथञ्चिदेकधर्मान्वयात्तुल्ययोगिता ॥

नचेदमुदाहरणं 'हिताहिते' त्यादिद्वितीयतुल्ययोगिताविषयोभवति । प्रत्यर्थिनामहितत्वेऽपि अर्थिनांहितत्वाभावात् ॥ यदि–कीर्तिप्रयोजकत्वादर्थिनां हितत्वं तदाप्रत्यर्थिनामपि तथात्वंसिद्धमेवेति तेषामपिहितत्वमेवस्यात् ॥ तथाच–यथाकथञ्चिदेकधर्मान्वये तुल्ययोगितेत्यङ्गीकार्यम् । तथासति 'हिताहिते' इत्यादि द्वितीयतुल्ययोगितानिरूपणंवृथा । पूर्वोक्तलक्षणोदाहरणाभ्यामेवगतार्थत्वात् । तथाहि दीक्षितोक्तसमन्वयवाक्यमिदम् ॥

'अत्र–हिताहितयोर्मित्रशात्रवयोरुत्कृष्टभूतिदानस्य पराभवदानस्यच श्लेषेणाभेदाध्यवसायाद्वृत्तितौल्यम्' इति ॥ अनेनवाक्येन 'वर्ण्यानामितरेषांवाधर्मैक्यं तुल्ययोगिता' इति प्रथमतुल्ययोगितालक्षणेधर्मस्य गुणक्रियारूपत्वाकथनाद्यथाकथञ्चिद्धर्मैक्यस्याङ्गीकरणीयतयाच 'प्रदीयतेपराभूति' रित्यत्रापिराजस्तुतिप्रयोजकतयोपात्तयोः प्रकृतयो र्मित्रशात्रवयोः पराभूतिशब्दवाच्यपरस्पराभेदाध्यवसितमहदैश्वर्यतिरस्कारोभयकर्मक दानपात्रत्वरूपैकधर्मान्वयस्यैव प्रतिपादितत्वात् द्वितीयतुल्ययोगितालक्षणोदाहरणप्रदर्शनं नतावत्सप्रयोजनम् इति ॥

चन्द्रिकाकारस्तु—द्वितीयतुल्ययोगितायाः प्रथमतुल्ययोगितया गतार्थत्वाभावंसाधयितुं तयोर्वैलक्षण्यंप्रतिपादयति । 'यत्रानेकान्वयित्वेनज्ञातोधर्म स्तेषामौपम्यगमकत्वेन चमत्कृतिजनकस्तत्रपूर्वोक्तप्रकारः । यत्रतु हिताहितोभयविषयकशुभाशुभरूपैकव्यवहारस्य व्यवहर्तृगतस्तुतिनिन्दान्यतरद्योतकतया चमत्कृतिजनकत्वं तत्रापरइतिभेदात् ।' इति ॥

अत्रायमस्मदीयोऽभिप्रायः । एतत्प्रथमलक्षणमपि द्वितीयलक्षणोदाहरणे 'प्रदीयतेपराभूतिः' इत्यत्र समन्वितंभवति । तथाहि । यत्र—प्रदीयते इत्यादिवाक्ये अनेकान्वयित्वेनज्ञातोधर्मः मित्रशात्रवोभयान्वयित्वेन ज्ञातोधर्मः सच पराभूतिशब्दवाच्यवस्तुकर्मकदानपात्रत्वरूपोधर्मः । 'पराभूतिदान' शब्दरूपोवाधर्मः तेषामौपम्यगमकत्वेन चमत्कारी मित्रशात्रवयोरौपम्यगमकत्वेन चमत्कारीभवतीति । दीपकेतिव्याप्तिश्च । तथाच भक्षितेपिलशुनेनशान्तोव्याधिः ॥

यत्तु—'हिताहितोभये' त्यादिद्वितीयतुल्ययोगितालक्षणं तत्र 'व्यवहर्तृगत स्तुतिनिन्दान्यतरद्योतकतया चमत्कृतिजनकत्वांशोव्याजस्तुतेर्विषयः । 'उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यांस्तुतिनिन्दयोः' । इति हितल्लक्षणम्, नतुतुल्ययोगितायाः । औचित्यात् । 'एकव्यवहारस्य' इत्यत्र व्यवहारशब्दश्च धर्मरूपार्थएवपर्यवस्यति । इत्थञ्च 'एकधर्मान्वये' इत्येवोक्तंभवति । तथाच प्रथमलक्षणमेवायातम् ॥ एकव्यवहारे शुभाशुभरूपत्वनिवेशस्तु सैकतसेतुमनुकुरुते । तथाहि । यद्यत्र हिताहितयोर्विषये शुभरूपैकव्यवहारउच्यते तदा शात्रवस्यपराभूतेस्तिरस्कारस्यदानाच्छुभरूपत्वंनास्ति । यद्यशुभरूपैकव्यवहारउच्यते तदा मित्रस्य परायाभूतेरुत्कृष्टैश्वर्यस्यदानादशुभरूपत्वं नास्ति । यदिच हितेशुभरूपत्वमहितेचाशुभरूपत्वमुच्यते, तदा 'यश्चनिम्बंपरशुना' इत्यादौ छेदकसेचकपूजकेषु 'सर्वत्रकटुरेवसः' इत्यशुभरूपत्वस्यैवो-

क्तत्वात् हितेशुभरूपत्वंनास्ति। यदिचहितेऽहितेच प्रत्येकं शुभाशुभोभयरूपत्वम् तदा तत्तुशशविषाणायते। नहिमित्रस्योत्कृष्टैश्वर्यदानं तस्यैवाशुभरूपंभवति। एवं शात्रवस्यापि पराभवश्शुभरूपः। एवञ्च हिताहितोभयविषयकशुभाशुभरूपैक व्यवहारघटितलक्षणस्यासंभवः।

तथात्र लक्षणकारिकोक्तवृत्तितौल्यस्य चन्द्रिकोक्तलक्षणे परित्यागान्मूलोच्छेदापत्तिश्च॥ तस्मात् चन्द्रिकाकारोक्तप्रथमतुल्ययोगितालक्षणं द्वितीयतुल्ययोगितातो भेदसाधकं नभवतीत्युद्देश्यासिद्धिः। द्वितीयतुल्ययोगितालक्षणमप्युक्तरीत्या अतिव्याप्त्यसंभवग्रस्तम् इति जगन्नाथपक्षएव सिद्धान्ततामवलंबते॥

यदप्युक्तं 'नह्यत्रपराभूतिशब्दस्य तदर्थकर्मैकदानस्यवा परम्परया शत्रुमित्रगतत्वेनभानम्। अपितु श्लेषबलादेकत्वेनाध्यवसितस्य तादृशदानस्य राजगतत्वेनैवेति कथंपूर्वोक्तलक्षणाक्रान्तत्वम्?' इति तदपि तदुक्तानवगमेन भ्रान्त्या विप्रलिप्सयावा। कुतइतिचेत्। पराभूतिशब्दस्य परम्परया मित्रशात्रवधर्मत्वं संभवत्येव। परम्परासंबन्धश्च स्ववाच्यवस्तुकर्मैकदानोद्देश्यत्वम्। तथा पराभूतिशब्दार्थस्यापिस्वकर्मैकदानोद्देश्यतासंबंधेनशत्रुमित्रोभयवृत्तित्वंवर्ततएव॥ एवं स्थितेपि जगन्नाथोक्तंतादृशदानपात्रत्वंपरित्यज्य तादृशदानमात्रमादाय दानस्यशत्रुमित्रोभयगतत्वंनास्ति किन्तुराजगतत्वमेवेतिचन्द्रिकाकारोक्तिरनुचितैव दानस्यराजगतत्वेपि दानपात्रत्वस्यशत्रुमित्रोभयगतत्वात्॥

यदपि—'एतेन 'यश्चनिम्ब' मित्यत्र कटुत्वविशिष्टनिम्बस्यैवपरम्परया छेदकसेचकपूजकधर्मत्वमितिनिरस्तम्' इत्युक्तम्। तदपि—रसगङ्गाधरोक्त विचारपर्यालोचनशालिमानसानामतिरोहितमलग्नमेवेति। अतिविस्तरभियातुनलिख्यते॥

अत्र––चन्द्रिकागतदोषविशदीकरणेनैव नागेशभट्टविरचितरसगङ्गाधरव्याख्यानमर्मप्रकाशस्थिताअपि दोषाविशदीकृतप्रायाः । यतो नागेशभट्टवैद्यनाथावेकार्थवक्तारौशिष्याचार्यौ ॥

अयमपरोत्रविशेषः । यन्मर्मप्रकाशे हेतुनिर्देशपुरस्सरं ‘ नन्वेवमलङ्कारान्तरत्वमेववक्तुंयुक्तम् इति चेत्सत्यम् । अतएवास्वरसात्कुवलयानन्दकृता इयंसरस्वतीकण्ठाभरणोक्तातुल्ययोगिता इत्युक्तम् ’ इति नागेशेनान्तेलिखितम् । तदेव जगन्नाथोक्तदूपणंकुवलयानन्दकृतैवाभ्युपगतमित्यत्रसाक्षिभूतमिति ॥

अत्रायमन्योविषयः । यथाकथञ्चिदेकधर्मान्वयेतुल्ययोगितेत्यस्योदाहरणतयाजगन्नाथप्रदर्शितस्य ‘ एकस्त्वंदानशीलोसिप्रत्यर्थिषुतथार्थिषु ’ इत्यस्य प्रतीकंगृहीत्वा नागेशभट्टेनैवं व्याख्याकृता मर्मप्रकाशे ‘ दानेति । द्रव्यस्य पराभवस्यवेतिभावः ’ इति ।

अत्र प्रत्यर्थिषुदानशीलत्वं खण्डनशीलत्वम् । ‘ दो अवखण्डने ’ इति धातोर्ल्युटिदानशब्दनिष्पत्तेः । अर्थिषुस्वस्वत्वध्वंसपूर्वक परस्वत्वापादनशीलत्वम् । ‘ डुदाञ्दाने ’ इति धातोर्ल्युटिच दानशब्दनिष्पत्तेः । ईदृशार्थवर्णनेसत्येव ‘ दानशीलत्वरूपैकधर्मान्वयाल्लक्षणप्रवृत्तिः ’ इति रसगङ्गाधरवाक्यानुगुण्यम् । ‘ द्रव्यस्यपराभवस्यवेति भावः ’ इति नागेशवाक्येनतु परस्वत्वापादनरूपएकएवार्थो दानशब्दस्यविवक्षितः । ‘ द्रव्यस्यपराभवस्यवे ’ ति दानकर्मभूतवस्तुवाचकपदयोरध्याहृतत्वात् । इत्थञ्चपराभवदानंप्रत्यर्थिनाम् द्रव्यदानमर्थिनामितिधर्मभेदएवोभयोः प्रतिपादितः । नतुमूलोक्तधर्मैक्यमितिमूलविरोधादस्मदुक्तैव व्याख्यासाधीयसी मूलानुगुणत्वादिति ॥

अयमपरोत्रविचारः । रसगङ्गाधरे ‘ एवं एकस्त्वंदानशीलोसि-

प्रत्यर्थिषुतथार्थिषु ' इत्यादावपि दानशीलरूपैकान्वयाल्लक्षणप्रवृत्तिः ' इति ग्रन्थेनोक्तवाक्येतुल्ययोगितेत्युक्तम्

अत्रयद्यपि दानशीलत्वस्य त्वंपदवाच्यराजविशेषणत्वाच्चन्द्रिकाकारोक्तरीत्या दानशीलत्वरूपोधर्मः राजगतत्वेनैवभासते नत्वर्थिप्रत्यर्थिगतत्वेन । तथापि । तेनैव ' यथाकथञ्चिदनेकत्रैकान्वयस्यचमत्कारिणोऽपेक्षितत्वात् ' इत्युक्तत्वादर्थिप्रत्यर्थ्युद्देश्यकदानशीलोराजा इत्युक्तवाक्याद्बोधेपि, राजकर्तृकदानोद्देश्यावर्थिप्रत्यर्थिनाविति तुल्यावित्तिवेद्यतयाबोधोभवतीत्यनेकत्रैकधर्मान्वयइतिभावः ॥ इति ॥

॥ इति तुल्ययोगिताविचारः ॥



विषयः (३०) आवृत्तिदीपकम्

कुवलयानन्दे त्रिविधानामप्यावृत्तिदीपकानां लक्षणोदाहरणानिप्रदर्श्यान्तेलिखितमिदंवाक्यम् । ' एवञ्चावृत्तीनां प्रस्तुताप्रस्तुतोभयविषयत्वाभावेपि दीपकच्छायापत्तिमात्रेण दीपकव्यपदेशः ' इति ॥

अस्यायंभावः । ' वदन्तिवर्ण्यावर्ण्यानां धर्मैक्यंदीपकंबुधाः ' इति प्रस्तुतानामप्रस्तुतानाञ्चैकधर्मान्वये दीपकमिति दीपकलक्षणादावृत्तिदीपके प्रस्तुतानामेवधर्मान्वयाद्दीपकशब्दवाच्यत्वं कथमितिशङ्कायां प्रस्तुताप्रस्तुतत्वमविवक्षित्वैव उभयत्रधर्मान्वयांशमात्रमादाय दीपकशब्दव्यवहार इति ॥

चन्द्रिकाकारस्तु ' एवञ्चे ' त्यादिकुवलयानन्दवाक्यमेवंव्याख्याति । ' प्रस्तुताप्रस्तुतेति । अम्बुदमालादीनां विरहोद्दीपकतया केवलप्रस्तुतत्वात् । चन्द्रबिम्बारविन्दयोश्चकेवलाप्रस्तुतत्वादितिभावः ' इति ॥

अत्रावृत्तिदीपकानां त्रिष्वप्युदाहरणेषु वर्षर्तुकालिकवस्तूनामेव-वर्णनंस्पष्टम् । तस्मात्सर्वेषांप्रस्तुतत्वमेव । अम्बुदमालादीनां यथा विरहोद्दीपकत्वं, तथा 'मलयानिलचन्द्राद्याः' इत्यादिना चन्द्रारविन्दयोश्चोद्दीपकत्वंप्रसिद्धमेव । तेनतयोरपिप्रस्तुतत्वमेव ॥

यदि चन्द्रबिम्बारविन्दयोरम्बुधरपाथःपूराभ्यां तिरोधानादप्रस्तुतत्वं तर्ह्यप्रस्तुतत्वादेव तयोरवर्ण्यत्वंस्यात् । वस्तुनोदर्शनेहिप्रस्तुतत्वेनाप्रस्तुतत्वेनवा वर्णनम् ।

किन्तुवर्षाकाले चन्द्रबिम्बस्याम्बुधरे अरविन्दस्यचपाथःपूरे तिरोधानमपिवर्णनीयत्वेनप्रस्तुतमेव । कुत्रचिन्निलीनत्वञ्च पराजितस्यावमानात्प्रसिद्धम् । सुन्दरि इति सम्बोध्याया नायिकायावदनस्यापिवर्णनीयत्वेन 'वदनेननिर्जित' मिति हेतुगर्भविशेषणेन चन्द्रबिम्बारविन्दयोर्निलीनत्वे वदनेननिर्जितत्वंहेतुतयोत्प्रेक्ष्यते । व्यञ्जकाप्रयोगादुत्प्रेक्षागम्या । इयञ्चोत्प्रेक्षोभयावृत्तिदीपकंप्रत्यङ्गम् । निर्जितत्वाभावेनिलीनत्वस्याप्यसंभवात् ॥

इत्थञ्च चन्द्रबिम्बारविन्दयोः कथमपिनकेवलाप्रस्तुतत्वम् इति सहृदयाविभावयन्तु ॥

किञ्च—'एवञ्चावृत्तीनांप्रस्तुताप्रस्तुतोभयविषयत्वाभावेपि' इति कुवलयानन्दवाक्यस्य 'आवृत्तीनां प्रस्तुताप्रस्तुतोभयविषयत्वमेवाधोवर्णितश्चन्द्रिकाकारेण इति साक्षान्मूलविरोध इति ॥

॥ इत्यावृत्तिदीपकविचारः ॥



## विषयः (३१) अथप्रतिवस्तूपमाविचारः (क)

कुवलयानन्दे प्रतिवस्तूपमालक्षणवाक्यमिदम् । 'यत्रोपमानोपमेयपरवाक्ययोरेकस्समानोधर्मः पृथक्निर्दिश्यते साप्रतिवस्तूपमे'

ति ॥ अस्मिन्वाक्ये यत्रेतियच्छब्दस्य पूर्ववाक्यगतत्वात् ' सा ' इति तच्छब्दस्योत्तरवाक्यगतत्वाच्च तयोरेकार्थत्वमङ्गीकरणीयम् । यत्रेत्यस्य समानोधर्मःपृथक् निर्दिश्यत इति निर्देशक्रियायामधिकरणत्वेनान्वयः ॥ तथाच उपमानोपमेयवाक्ययोर्धर्मस्य पृथङ्निर्देशः भिन्नपदाभ्यांप्रतिपादनं यत्रवर्तते काव्ये सा काव्यमेवप्रतिवस्तूपमा इत्युक्तंभवति । काव्यस्यतुनालङ्कारत्वमितिस्पष्टमेव । अतस्तत्रेत्यध्याहार्यम् । तस्मान्न्यूनपदत्वंदोषः । ' सा ' इति स्त्रीलिङ्गनिर्देशः ' प्रतिवस्तूपमा ' इति विधेयप्राधान्यात् । ' एकस्समानोधर्म ' इत्युद्देश्यप्राधान्येतु ' स ' इतिभाव्यम् ॥

इत्थञ्च—' पृथङ्निर्दिश्यमानएकस्समानधर्मः प्रतिवस्तूपमा ' इति पर्यवस्यति ॥

एवञ्चसति ' यत्र ' इति प्रमादायातंपदमपोह्य ' यस्तु ' इति निवेशतीयम् । तथाच–उपमानोपमेयपरवाक्ययोर्यस्त्वेकस्समानोधर्मःपृथङ्निर्दिश्यते साप्रतिवस्तूपमेतिनिराबाधम् ॥

सन्तिचात्रप्रमाणानिबहुशः । तथाहि । काव्यप्रकाशकारिकायां

' प्रतिवस्तूपमातुसा । सामान्य
स्यद्विरेकस्ययत्रवाक्यद्वयेस्थितिः ' इति ॥

अत्र—यत्रवाक्यद्वये एकस्यसामान्यस्य द्विस्स्थितिस्साप्रतिवस्तूपमा इत्यन्वयात् एकस्यधर्मस्यद्विस्स्थितिरेव ' सा ' इति तत्पदेनोच्यते । यत्रेतियच्छब्दोवाक्यद्वये इत्यस्यविशेषणम् । ' से ' ति तच्छब्दस्तुप्रकृतां द्विस्स्थितिमेवपरामृशति प्रकृतपरामर्शित्वादेवयच्छब्दंनापेक्षत इति नकाचिदप्यनुपपत्तिः ॥

अतएवकाव्यप्रकाशवृत्तिग्रन्थे ' साधारणोधर्मः उपमेयवाक्ये उपमानवाक्येच । कथितपदस्यदुष्टतयाऽभिहितत्वाच्छब्दभेदेन यदु-

पादीयते सावस्तुनोवाक्यार्थस्योपमानत्वात्प्रतिवस्तूपमा ' इत्यत्र ' यदु-पादीयते साप्रतिवस्तूपमा ' इति यत्तच्छब्दोपादानेनकारिकाव्याख्याता ॥

ननु—काव्यप्रकाशकारिकायां ' यत्रे ' तिपदस्य ' वाक्यद्वये ' इत्यत्रविशेषणत्वाद्यथानानुपपत्तिस्तथात्रापि ' यत्रे ' ति पदस्य ' उप-मानोपमेयपरवाक्ययोः ' इत्यत्रविशेषणत्वाङ्गीकारे नकाचिद्दनुपपत्ति-रितिचेन्न ।

' यत्रे ' ति त्रलन्तयच्छब्दस्य उपस्थितिकृतलाघवादेकवचना-न्तस्य ' वाक्ययो ' रितिद्विवचनान्तविशेषणत्वायोगात् । अतएवोक्त-कारिकायां ' यत्रे ' तिपदं ' वाक्यद्वये ' इत्येकवचनान्तस्यैवविशेषणं-दृश्यते । ' यत्रे ' त्यस्य ' वाक्ययो ' रित्यत्रविशेषणत्वाङ्गीकारे प्रयो-जनमपिनास्ति । अतः तत्रेतिपदाध्याहारेणैववाक्ययोजनाकार्या । यथो-त्तरत्र दृष्टान्तालङ्कारलक्षणविवरणवाक्ये कुवलयानन्दकृतैव वक्ष्यते ' यत्रोपमानोपमेयवाक्ययोर्भिन्नावेवधर्मौ बिम्बप्रतिबिम्बभावेन निर्दिष्टौ तत्रदृष्टान्तालङ्कारः , इति ॥ तत्रचन्द्रिकाकारोपि ' यत्र-काव्ये ' इति व्याख्यास्यति ॥

तस्मात्प्रकृतवाक्ये न्यूनपदत्वदोषएव । अतः वाक्ये ' यत्रे ' ति पदं त्याज्यम् । ' यः ' इति पदंवास्थाप्यम् । इति ॥



## विषयः (३२) प्रतिवस्तूपमा (ख)

एतल्लक्षणवाक्यव्याख्यासमये चन्द्रिकायां ' वाक्ययोः ' इति प्रतीकंगृहीत्वा ' द्विवचनमनेकाभिप्रायम् । मालानुरोधात् ' इयुक्तम् । तत्तुप्रामादिकम् । द्विवचनंबहुत्वाभिप्रायम् ' इतितुभाव्यम् । बहुवा-क्यघटितत्वे सत्येवमालारूपत्वसंभवात् । तुल्ययोगितालक्षणवाक्य

विवरणसमये ' बहुवचनमनेकार्थकम् । द्वयोर्धर्मैक्यस्यापिसंग्राह्यत्वात् ' इत्युक्तम् ॥ तन्नयुक्तम् ॥

तथाच—तुल्ययोगितालक्षणे ' वर्ण्यानाम् ' ' इतरेषाम् ' इति बहुवचनं, ' वर्ण्ययोः ' ' इतरयोः ' इति द्विवचनोपलक्षकम् । प्रतिवस्तूपमायां ' वाक्ययोः ' इति द्विवचनं, ' वाक्यानां ' इति बहुत्वोपलक्षकमितिभावः ।

' द्विवचनमनेकाभिप्राय ' मित्युक्तिस्तुविरुद्धैव । ' द्व्येकयोर्द्विवचनैकवचने ' ' बहुषुबहुवचनम् ' इति सूत्राभ्यामेकद्विबहुवचनानां क्रमेणैकत्वद्वित्वबहुत्ववाचकत्वस्य नियतत्वात्प्रकृतेवाक्ययोरितिद्विवचनेन लक्षणया ' वाक्याना ' मिति बहुत्वंबोध्यत इति वक्तव्ये अनेकत्वंबोध्यत इत्युक्तौ अनेकत्वंद्वित्वसाधारणमितिबहुत्वबोधो नस्यादिति ॥



विषयः (३३) प्रतिवस्तूपमा (ग)

अत्रैवकुवलयानन्दे ' अर्थावृत्तिदीपकं प्रस्तुतानामप्रस्तुतानांवा । प्रतिवस्तूपमातु प्रस्तुताप्रस्तुतानाम् ' इतिवर्तते ॥

अस्य व्याख्याचन्द्रिकायां ' शब्दावृत्तौतु धर्मस्यैकेनैवशब्देनावृत्त्या बोधनान्नभिन्नशब्दबोध्यत्वमितिनातिव्याप्तिः । अतोऽर्थावृत्तिपर्यन्तानुधावनम् ' इति ॥

तन्न । कुत इतिचेत् । एकस्यैवधर्मस्य पृथङ्निर्देशोवस्तुप्रातिवस्तुभावः । पृथङ्निर्देशोनामभिन्नशब्दाभ्यां कथनत् । तच्च भिन्नानुपूर्वीकशब्दबोध्यत्वम् । प्रतिवस्तूपमायांहि दीप्तिरूपएकएवधर्मः ' भ्राजते ' ' राजते ' इति भिन्नानुपूर्वीकशब्दाभ्यांबोध्यते ॥ पदावृत्तिदीपकेतु ' वर्षति ' ' वर्षति ' ' उत्कण्ठयति ' ' उत्कण्ठयति ' इत्येकत्र-

वृष्टिः, अन्यत्रसंवत्सरः, एकत्रोद्धृतःकण्ठः, अन्यत्रोत्कटेच्छा, इति नैकोधर्मः । पदयोर्भिन्नानुपूर्वीकत्वमपिनास्ति । 'वर्षति' 'वर्षति' इत्यादिसमानानुपूर्वीकत्वात् नातिव्याप्तिः । उभयावृत्तिदीपकेतु 'माद्यन्ति' 'माद्यन्ति' 'निलीयते' 'निलीयते' इत्यत्र मदतिरोभाव रूपयोर्धर्मयोरैक्येऽपि भिन्नानुपूर्वीकशब्दबोध्यत्वंनास्ति । इति नातिव्यव्याप्तिप्रसङ्गः, इत्यर्थावृत्तिदीपकपर्यन्तानुधावनम् । अर्थावृत्तिदीपकेतु 'उन्मीलन्ति' 'स्फुटन्ति' 'शमयति' 'क्षपयति' इत्यत्र विकासरूपस्य नाशरूपस्यचैकैकस्य धर्मस्य भिन्नानुपूर्वीकशब्दबोध्यत्वमस्तीत्यतिव्याप्तिः प्रसक्ताभवतीति तद्व्यावृत्तिःकरणीया । साचैवम् । प्रतिवस्तूपमायां भिन्नशब्दबोध्यैकधर्मान्वयः प्रस्तुताप्रस्तुतयोः । अर्थावृत्तिदीपकेतुतादृशधर्मान्वयः प्रस्तुतयोरेवेति । इति ॥



विषयः (३४) प्रतिवस्तूपमा (ब)

अत्रैव कुवलयानन्दे उक्तेनैववाक्येन, अर्थावृत्तिदीपकः प्रस्तुतमात्रविषयकोऽप्रस्तुतमात्रविषयकश्चभवति तुल्ययोगितावत् । प्रतिवस्तूपमातुप्रस्तुताप्रस्तुतोभयविषयिणीति भेदः प्रतिपादितः । तत्र प्रतिवस्तूपमायास्तथात्वं युक्तम् । आवृत्तिदीपकानान्तुप्रस्तुतमात्रगोचरत्वमेव । नत्वप्रस्तुतमात्रगोचरत्वमपि ॥

अत्रोक्तोदाहरणेषु सर्वत्र वर्षर्तोरेववर्णनात्तत्संबन्धिनामेव कदम्बादीनां विकासादिधर्मान्वयः नत्वप्रस्तुतानाम् ॥ दण्डिनापि काव्यादर्शे अर्थावृत्तिपदावृत्त्युभयावृत्तिदीपकानामुदाहरणेषु

विकसन्ति कदम्बानि स्फुटन्ति कुटजद्रुमाः ।
उन्मीलन्तिचकन्दल्यो दलन्ति ककुभानिच ॥

उत्कण्ठयति मेघानां माला बृन्दं कलापिनाम् ।
यूनाञ्चोत्कण्ठयत्येष मानसं मकरध्वजः ॥
जित्वा विश्वं भवानत्र विहरत्यवरोधनैः ।
विहरत्यप्सरोभिस्ते रिपुवर्गोदिवङ्गतः ॥ '

इति पद्येषु‌द्धे पद्ये वर्षर्तुवर्णनात्प्रस्तुतगोचरे एव । तृतीयमपि वर्णनीयराजविषयमेव । उत्तरार्धेपि रिपुवर्गस्यस्वर्गोविहरणकथनं प्रस्तुतराजातिशयायैवक्रियतइति तस्यापिप्रस्तुतत्वमेव ॥ तस्मात् ' अर्थावृत्तिदीपकं प्रस्तुतानामप्रस्तुतानांवा ' इत्यत्र ' अप्रस्तुतानांवा ' इत्ययमंशः प्रक्षेप्तव्य एव । काव्यप्रकाशे तच्छायानुसारिषुच बहुष्वलङ्कारग्रन्थेषु आवृत्तिदीपकस्य नामापि नश्रूयते । येन आवृत्तीनामप्रस्तुतमात्रगोचरत्वमपि गृह्येत ॥ इति ॥



विषयः (३५) प्रतिवस्तूपमा (ङ)

कुवलयानन्दकृता प्रतिवस्तूपमाया वैधर्म्येणाप्युदाहरणं प्रदर्शितम्

यद्दिसन्ति गुणाः पुंसां विकसन्त्येवते स्वयम् ।
नहि कस्तूरिकामोदश्शपथेन विभाव्यते ॥ ' इति ॥

एतच्च रसगङ्गाधरकारेण दूषितम् । ' यदिसन्ती ' त्यादिपद्यं वैधर्म्येणोदाहरणं नभवति किन्तु साधर्म्येणैव । वैधर्म्येणोदाहरणंनाम ' प्रस्तुतधर्मिविशेषोपारूढार्थदार्ढ्याय स्वाक्षिप्तस्वव्यतिरेकसमानजातीयस्य धर्म्यन्तरारूढस्याप्रकृतार्थस्य कथनम् ' एतादृशवैधर्म्योदाहरणन्तु,

' वंशभवो गुणवानपि सङ्गविशेषेण पूज्यतेपुरुषः ।
नहि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ '

इतिपद्यम् । अत्र प्रस्तुतोधर्मिविशेषःपुरुषः । तदुपारूढार्थः सङ्गविशेषप्रयोज्यपूज्यत्वम् तदर्थदार्ढ्याय दृढीकर्तुं अप्रकृतार्थस्य कथनम् । अप्रकृतार्थःकीदृशइतिचेत् ? स्वाक्षिप्तः यस्स्वव्यतिरेकः तत्समानजातीयः धर्म्यन्तरारूढश्च । स्वं पुरुषस्सङ्गविशेषेणपूज्यते इत्ययमर्थः तेन आक्षिप्तः यःस्वव्यतिरेकः 'सङ्गविशेषाभावेपुरुषोनपूज्यते' इति । तत्समानजातीयः धर्म्यन्तरनिष्ठश्च यः अप्रकृतार्थः तुम्बीफलरहितो वीणादण्डः महिमानं नप्रयाति इत्येवंरूपः ईदृशार्थस्यकथनमत्रपद्येवर्ततइति ॥

'यदिसन्ती' त्यादिपद्येनूक्तवैधर्म्योदाहरणनिर्वचनं नसमन्वेति । तथाहि । पुरुषेविद्यमानागुणास्स्वयमेवप्रकाशन्ते इतिपूर्वार्धार्थः । अत्र एवकारस्यान्ययोगव्यवच्छेदार्थकतया नपरेणेत्यर्थः । एवञ्च पुरुषेपु विद्यमानागुणाः स्वयंप्रकाशन्ते नपरेण इत्यर्थोलब्धः । तथाचात्र प्रस्तुतधर्मिविशेषः पुरुषेषुविद्यमानागुणाः । तदुपारूढार्थः स्वयंप्रकाशन्ते नपरेण इत्येवंरूपोर्थः अनेनाक्षिप्तः यः स्वव्यतिरेकः पुरुषेष्वविद्यमानागुणाः परेणापि नप्रकाशन्ते इति । एतत्सजातीयो नभवत्यप्रकृतार्थः 'नहिकस्तूरिकामोद' इत्याद्युत्तरार्धार्थः । किन्तु प्रस्तुतार्थसजातीयएव अप्रस्तुतस्य प्रस्तुतसजातीयत्वे वैधर्म्येणोदाहरणं कथंभवेत् । कथंसजातीयत्वमितिचेत् । 'पुरुषेपु विद्यमाना गुणा स्स्वयंप्रकाशन्ते नपरेण,' इत्यस्य 'विद्यमानः कस्तूरिकामोद स्स्वयंविभाव्यते नशपथेन' इति समानजातीयएव । पूर्वार्धगतस्य स्वयमितिपदस्यौचित्यादनुषक्तस्य विभाव्यत इत्यत्रान्वयात् । पूर्वार्धगतैवकारार्थभूतस्य नपरेणेत्यस्य समानतया नशपथेनेतिनिर्देशात् । नपरेणेति परत्वेनरूपेणसामान्यतो निर्देशःपूर्वार्धे नशपथेनेति विशेषतोनिर्देशउत्तरार्धे तथाचोक्तंपद्यंवैधर्म्योदाहरणंनभवति ॥ उत्तरार्धे 'नहि' इति नञ्दर्शनमात्रेण भ्रान्तोदीक्षितः । यद्युत्तरार्धमेवं निर्मीयेत तदा वैधर्म्येणोदाहरणं

स्यात् ' वाचा वाचस्पतेर्व्योम्नि विलसन्ति न वल्लयः ' इति । एवंसति ' पुरुषेषुविद्यमानागुणास्स्वयंप्रकाशन्ते नपरेण ' इति पूर्वार्धस्य ' व्योम्नि अविद्यमानालताः वाचस्पतिवाक्येनापि न प्रकाशन्ते ' इत्युत्तरार्धं वैधर्म्यवद्भवति ॥ इति ॥

चन्द्रिकाकारस्त्वत्रप्रतिवक्ति ॥ ' वंशभव ' इत्यादि जगन्नाथोदाहृतं पद्यमपि वैधर्म्योदाहरणं नभवति । ' सङ्गविशेषेण पुरुषः पूज्यते ' इतिपूर्वार्धार्थः प्रकृतः । तत्सजातीयएवोत्तरार्धार्थोऽप्रकृतः । तुंबीफलविकलो वीणादण्डो महिमानं नप्रयाति । अपितु तद्युक्तइति प्रकृतार्थानुरूपतयैव पर्यवसानात् ' इति ॥

एवंवन्तुश्चन्द्रिकाकारस्येदंतात्पर्यम् । अत्रप्रस्तुतधर्मिविशेषःपुरुषः तदुपारूढार्थः सङ्गविशेषप्रयोज्यपूज्यत्वम् तद्दार्ढ्याय कथितः धर्म्यन्तरोपारूढो यः अप्रकृतार्थः धर्म्यन्तरं वीणादण्डः तदुपारूढो यः अप्रकृतार्थः तुंबीफलवैशिष्ट्यप्रयोज्यमहिमावाप्तिरूपः । अयञ्चा प्रकृतार्थः प्रकृतार्थसजातीयएव । नतु स्वाक्षिप्तस्वव्यतिरेकसजातीयः । तथाच ' सङ्गविशेषेण पुरुषःपूज्यते ' इति प्रकृतार्थस्य, ' तुंबीफलसहितः वीणादण्डो महिमानं प्राप्नोति ' इत्यप्रकृतार्थस्सजातीयएव । नतु स्वाक्षिप्तस्वव्यतिरेकसजातीयः इति जगन्नाथोक्तवैधर्म्योदाहरणनिर्वचनं तत्प्रदर्शितोदाहरणएव नास्ति ।

ननु—' तुंबीफलविकलो वीणादण्डो महिमानं नप्रयाती ' ति व्यतिरेकरूपार्थे शब्दशक्तिलभ्ये ' तुंबीफलसहितोवीणादण्डः महिमानं प्राप्नोती ' त्यन्वयरूपार्थः कथमुत्तरार्धेन लभ्यतइतिचेन्न ॥ शब्दलभ्यार्थापेक्षया तात्पर्यलभ्यार्थस्यैव ग्राह्यत्वात् । तात्पर्यार्थश्च तुंबीफलसहितो वीणादण्डो महिमानं प्रयातीति । सचप्रकृतार्थसजातीयएव । शब्दलभ्यार्थंविना तात्पर्यार्थग्रहणे किंबीजमितिचेत् ? सर्वत्र वैधर्म्योदाहरणे साधर्म्यपर्यवसानंविनोपमानिर्वाहएव नसंभवति इत्येत-

देव । यदि आपातप्रतीतयोरेवार्थयोः प्रकृताप्रकृतयो स्साधर्म्यवैधर्म्ये वक्तव्ये इति निर्बन्धः । तर्हि 'यदिसन्ती' त्यत्रापि तदस्ति । 'यदिसन्ती' ति पूर्वार्धे गुणाविकसन्तीति भावरूपार्थोवर्णितः । उत्तरार्धे 'नहिविभाव्यते' इत्यभावरूपार्थः प्रतीयते तयोर्वैधर्म्यञ्चवर्तत इति ॥

किञ्च—इदमुक्तं चन्द्रिकाकारेण । जगन्नाथोक्तं वैधर्म्योदाहरणनिर्वचनमयुक्तम् । काव्यप्रकाशे वैधर्म्येण दृष्टान्तालङ्कारोदाहरणत्वेन प्रदर्शिते 'भट्टाःपरेषां विशारारुतामगुर्दधत्यवाते स्थिरतांहिपांसवः' इत्यत्र तदुक्तनिर्वचनस्य समन्वयासंभवात् । तथाहि । 'भट्टाःपरेषां विशारारुतामगुः' इति प्रकृतवाक्यार्थः स्वव्यतिरेकं नाक्षिपति । किन्तु 'दधत्यवाते स्थिरतांहि पांसवः' इत्यप्रकृतार्थएव 'वाते पांसवः स्थिरतां नगच्छन्ति' इति स्वव्यतिरेकमाक्षिपतीति ॥

अत्रायमस्मदीयोऽभिसन्धिः । यज्जगन्नाथोक्तवैधर्म्योदाहरणनिर्वचनमयुक्तमिति चन्द्रिकोक्तम् । तन्न । तस्यैवसर्वैर्वक्तव्यत्वात् । यदि तन्निर्वचनस्यायुक्तत्वम् । तर्हिस्वेनैवतन्निर्वचनीयंभवेत् । स्वेनतु ननिरुक्तम् । परोक्तंपरंदूषितम् । नैतावन्मात्रम् । कुवलयानन्दकृतोपि संमतमिदं निर्वचनम् ।

तथाहि । एतदव्यवहितोत्तरदृष्टान्तालङ्कारान्ते वक्ष्यते कुवलयानन्दकृतैव । 'वैधर्म्येणाप्ययं दृश्यते

कृतश्चगर्वाभिमुखं मनस्त्वया
　किमन्यदेवं निहताश्चनोद्विषः ।
तमांसि तिष्ठन्तिहि तावदंशुमान्
　नयावदायात्युदयाद्रिमौलिताम् ॥

अत्र राजा यदा महोन्नतोभूत्तदैवनिखिलशत्रुसंहारं कृतवान् इत्युपमेयवाक्यार्थस्य, साधर्म्येण सूर्योदयेसति तमोनिवृत्तिः इत्युपमानवाक्यार्थे प्रतिपादनीये तथाऽनुक्त्वा सूर्योदयाभावे तमांसितिष्ठन्तीति वैधर्म्येण प्रतिपादनेपि दृष्टान्तालङ्कारः ' इति ॥ अत्र समन्वयवाक्ये ' राजा यदा महोन्नतोऽभूत्तदैव निखिलशत्रुसंहारं कृतवान् ' इति प्रकृतोऽर्थः । एतदाक्षिप्तः एतद्व्यतिरेकस्तु ' राजा यदा महोन्नतो नाभूत्तदा शत्रवःस्थिताः ' इति । तत्सजातीयोत्राप्रकृतार्थस्तु ' सूर्यो यदा उदयाद्रिं नगतस्तदा तमांसितिष्ठन्ती ' ति दीक्षितजगन्नाथयोर्निर्वचनमेकरूपमेव ॥

ननु—इदंसमन्वयवाक्यं कुवलयानन्दपुस्तकेषूपलभ्यमानेषु नोपलभ्यत इतिचेत् । सत्यम् । मद्रास्नगरमुद्रितान्ध्राक्षरपुस्तके, मुम्बइ निर्णयसागरमुद्रितसंस्कृताक्षरपुस्तके, कुम्भघोणमुद्रितरसिकरञ्जनीसहितपुस्तकेच नास्ति । परन्तु अस्मत्तातपादलिखिते ग्रन्थाक्षरतालपत्र पुस्तके स्फुटमुपलभ्यते ॥ अतएवानुमीयते चन्द्रिकावतारानन्तरमिदंवाक्यं लोपमापेति । ततोपि प्राक्तनपुस्तकमातृकापरंपरायातमस्मत्तातपादलिखितमितिच । अस्मिन्विषये साधकमपरमपि दृश्यते । यत्समप्राधान्यसङ्करोदाहरणस्य ' अङ्गुलीभिरिवकेशसञ्चयम् ' इत्यादिपद्यस्य समन्वयवाक्ये कुवलयानन्दे ' तनुदीर्घावरणत्व ' इतिपाठं मत्वा चन्द्रिकाकारेणानुचिना व्याख्या कृता । अस्मत्तातपादलिखितपुस्तकेतु ' तनुदीर्घारुणत्व ' इति दीक्षिताभिमतश्शुद्धःपाठोदृश्यते । तत्रैवस्फुटीकरिष्यतेचैतत् । अनेनचापरोऽर्थोऽनुमीयते । अभिनिवेशग्रस्तानां व्याख्याकरणं मूलग्रन्थनाशायापिप्रभवतीति ॥

एतेन—मर्मप्रकाशे नागेशभट्टोक्तंप्रत्युक्तम् । तत्रहि ' नत्वाक्षिप्तव्यतिरेकसजातीयार्थनिबन्धनएव वैधर्म्योदाहरणत्वमितिराजाज्ञास्ति ' इत्युक्तम् । दृष्टान्तालङ्कारवैधर्म्योदाहरणसमन्वयग्रन्थे दीक्षितो-

क्तनिर्वचनस्यैव जगन्नाथोक्तत्वान्नेयंराजाज्ञा, अपितुतदपेक्षयाप्रबला दीक्षिताज्ञा । इति ॥

यदपि—चन्द्रिकाकारेण 'भटाःपरेषां विशरारुतामगुर्दधत्यवातेस्थिरतांहिपांसवः' इति काव्यप्रकाशोपदर्शितवैधर्म्यदृष्टान्तोदाहरणे जगन्नाथोक्तनिर्वचनस्याव्यापनमुक्तम् । तदपि परव्यामोहकरभस्समुष्टिप्रक्षेपायते । तथाहि । काव्यप्रकाशे उक्तप्रकरणे प्रदर्शितमिदंपद्यम् ।

'तवाहवे साहसकर्मशर्मणः पाणिंकृपाणान्तिकमानिनीषतः ।
भटाःपरेषांविशरारुतामगुर्दधत्यवातेस्थिरतांहिपांसवः'

इति । अत्रपूर्वार्धंविहाय 'भटाःपरेषांविशरारुतामगुः' इति तृतीयपादमात्रंप्रदर्श्य तावन्मात्रस्य प्रकृतवाक्यार्थस्य स्वव्यतिरेकाक्षेपकत्वं नास्ति । किन्तु, 'दधत्यवाते' इत्यादिचतुर्थपादोक्ताप्रकृतार्थस्यैव स्वव्यतिरेकाक्षेपकत्वम् 'वाते पांसवः स्थिरतां नदधतीति । इत्युक्तश्चन्द्रिकाकारेण ।

अत्र यद्यपि 'भटाःपरेषांविशरारुतामगुः' इत्येतावन्मात्रस्य प्रकृतवाक्यार्थस्य स्वव्यतिरेकाक्षेपकत्वं नास्ति । तथापि कस्यशत्रवइति जिज्ञासायां तवेत्यस्य, कथंभूतस्यतवेत्याकांक्षायां 'पाणिंकृपाणान्तिकमानिनीषतः' इत्यस्य 'आहवेसाहसकर्मशर्मणः' इत्यस्यचापेक्षितत्वादादितः पादत्रयस्यैकवाक्यत्वात्तदर्थस्य स्वव्यतिरेकाक्षेपकत्वं स्फुटमेव । कथमितिचेदित्थम् । 'साहसकर्मशर्मणस्तव पाणेःकृपाणान्तिकानिनीषाभावे तवशत्रवोविशरारुतां नप्रामुयुः' इति स्वव्यतिरेकस्य स्फुटत्वात्तत्सजातियोऽप्रकृतवाक्यार्थः 'अवाते पांसवः स्थिरतांदधतीति । तस्मात् दीक्षितजगन्नाथोभयोक्तव्यतिरेकोदाहरणनिर्वचनस्य काव्यप्रकाशोदाहृतपद्ये समन्वयसंभवान्नाव्याप्तिदोषइति नकिञ्चिदवहीनम् ॥

॥ इति प्रतिवस्तूपमाविचारः ॥



विषयः (३६) दृष्टान्तविचारः (क)

'चेद्बिम्बप्रतिबिम्बत्वंदृष्टान्तस्तदलङ्कृतिः' इति कुवलयानन्दकारिका । अत्र चन्द्रिका । 'दृष्टान्तालङ्कारंलक्षयति । चेदिति । वाक्ययोरित्यनुवर्तते । धर्मयोः इत्यध्याहार्यम् । तदिति । तदेत्यर्थकम् अर्थतोव्याचष्टे यत्रेति । यत्र काव्ये । तथाचोपमानोपमेयवाक्यार्थघटकधर्मयोर्बिम्बप्रतिबिम्बभावो दृष्टान्त इतिलक्षणम्'. इति ॥

अत्र कारिकास्थंतदितिपदमादाय 'तदेत्यर्थकम्' इति व्याख्यानमस्वरसम् । तदेत्यर्थे वक्तव्ये पूर्ववाक्ये यदेतिपदेनभाव्यम् । नत्वस्ति । किन्तु उक्तव्याख्यानुसारेणैववाक्ययोरित्यनुवृत्त्या धर्मयोरित्यध्याहारेणच उपमानोपमेयवाक्ययोर्विद्यमानयोर्धर्मयोर्बिम्बप्रतिबिम्बत्वंचेत् । तत् । बिम्बप्रतिबिम्बत्वमेव दृष्टान्तालङ्कृतिरितिवाक्यार्थे समञ्जसे कालवाचकदालन्ततत्पदेन तदित्यस्य व्याख्यानमपेक्षितहानानपेक्षितकथनरूपं भवतीति ॥



विषयः (३७) दृष्टान्तः (ख)

कुवलयानन्दे दृष्टान्तालङ्कारस्य लक्ष्येलक्षणसमन्वयप्रतिपादकवाक्यं 'यत्रोपमानोपमेयवाक्ययोर्भिन्नावेवधर्मौ बिम्बप्रतिबिम्बभावेन निर्दिष्टौ, तत्रदृष्टान्तालङ्कारः । त्वमेवकीर्तिमानित्यत्रकीर्तिकान्त्योर्बिम्बप्रतिबिम्बभावः' इतिवर्तते ॥

चन्द्रिकायाञ्चैतदेवानुसृत्य लक्षणमुक्तम् । 'तथाचोपमानोपमेयवाक्यार्थघटकधर्मयोः बिम्बप्रतिबिम्बभावो दृष्टान्त इति लक्षणम्' इति ॥ अत्र कुवलयानन्दतच्चन्द्रिकयोर्दृष्टान्तालङ्कारे उपमानोपमेयवृत्तिधर्मयोरेव बिम्बप्रतिबिम्बभावउक्तः । नतूपमानोपमेयभूतयोर्धर्मिणोः । 'गुणदोषा' वित्यादिपूर्णोपमोदाहरणे समानधर्मनिरूपणावसरे बिम्ब-

प्रतिबिम्बभावनिर्वचनेपि उपमानोपमेयवृत्तिधर्मयोरेव बिम्बप्रतिबिम्बभावो दर्शितः 'वस्तुतोभिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नत्वेनाध्यवसितयोः पृथगुपादानं बिम्बप्रतिबिम्बभाव इत्यालङ्कारिकसमयः' इति । नतूपमानोपमेययोः । निदर्शनायान्तु धर्मिणोरपिबिम्बप्रतिबिम्बभावः वक्ष्यते ॥

काव्यप्रकाशे तदनुसारिषुच बहुषुग्रन्थेषु 'दृष्टान्तःपुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इति लक्षणमुक्तम् । तत्र उपमानोपमेयभूतयोर्धर्मिणोस्तद्धर्मयोश्च बिम्बप्रतिबिम्बभावउक्तः । धर्मिणोरेव बिम्बप्रतिबिम्बभावे प्रतिवस्तूपमायामतिव्याप्तिः । अतोधर्मयोरपि । प्रतिवस्तूपमायामेकस्यैवधर्मस्य भिन्नशब्दाभ्यां प्रतिपादनम् । धर्मभेदेहि बिम्बप्रतिबिम्बभावः इति नातिव्याप्तिरितिचोक्तम् ॥ तथाच कुवलयानन्दग्रन्थयोरेव परस्परविरोध इतिचेत् सत्यम् । विरोधश्चैवं परिहरणीयः बिम्बप्रतिबिम्बभावनिर्वचने धर्मयोरितिधर्मिणोरप्युपलक्षकम् तथा निवेशाभावस्तु धर्ममात्र प्रकरणादिति ॥



## विषयः (३८) दृष्टान्तः (ग)

दृष्टान्तालङ्कारोदाहरणतयोपात्तं 'देवींवाच' मित्यादिपद्यम् कुवलयानन्दे । तत्रपूर्वार्धे 'जानीते' इति । उत्तरार्धे 'जानाति' इतिच ज्ञानरूपधर्मस्यैकत्वेन बिम्बप्रतिबिम्बभावाभावान्नदृष्टान्तत्वम् किन्तु प्रतिवस्तूपमात्वं युक्तम् इत्याशङ्क्य उभयोरर्थभेदकथनाद्धर्मभेदं प्रतिपाद्य दृष्टान्तत्वं समर्थितम् । पुनश्च 'अत्रोदाहरणे पदावृत्तिदीपकाद्विशेषः पूर्ववत्प्रस्तुताप्रस्तुतविषयत्वकृतो द्रष्टव्यः' इति ग्रन्थेन पदावृत्तिदीपकत्वमाशङ्क्य, दृष्टान्तालङ्कारे एकं वाक्यं प्रस्तुतविषयकम् अपरमप्रस्तुतविषयकम् । पदावृत्तिदीपकेतूभयं प्रस्तुतविषयम् अथवा अप्रस्तुतविषयमिति भेदः प्रतिपादितो दीक्षितैरेव ॥

अत्र पदावृत्तिदीपके अऽतिव्याप्तिशंकैव नोदेतुमलम् । भिन्नार्थकसमानानुपूर्वीकपदावृत्तौहि पदावृत्तिदीपकम् । यथा 'वर्षति' 'वर्षति' 'उत्कण्ठयति' 'उत्कण्ठयति' इत्युभयत्र, वृष्टिसंवत्सरयोः, उत्कन्धरत्व उत्कटेच्छाविशिष्टत्वरूपयोश्चार्थयोर्भिन्नत्वेन भिन्नार्थकसमानानुपूर्वीक पदावृत्तेस्सत्त्वात्पदावृत्तिदीपकम्, तथा 'जानीते' 'जानाति' इत्यावृत्तौ एकत्र ज्ञानं अन्यत्र सागराधःप्रदेशसंयोग इति भिन्नार्थकत्वेपि समानानुपूर्वीकपदावृत्त्यभावात् । एकत्र ज्ञाधातूत्तरं 'तङ्' प्रत्ययस्यान्यत्र 'तिङ्' प्रत्ययस्यच सत्त्वात्, 'सुप्तिङन्तंपद' मितिसूत्रेण प्रत्ययान्तसमुदायस्यैव पदसंज्ञया धातुमात्रस्य पदत्वाभावाच्च नपदावृत्तिदीपकत्वमिति ॥ एवंस्थिते दीक्षितपक्षपातात्तत्पक्षरक्षणाय चन्द्रिकाकारेणैवमाशंक्य समाहितम् । 'यद्यप्यत्रात्मनेपदपरस्मैपदभेदेन पदभेदान्नपदावृत्तिशङ्कोचिता । तथापि पाठपरिवर्तनेन पदाभेदेपि नपदावृत्तेरयंविषय इति बोधयितुमेतदुक्तम्' इति ॥

अस्यायमर्थः । पाठपरिवर्तनंनाम 'जानीते' इत्यत्र 'जानाती' ति कल्पनम् । अथवा 'जानाती' त्यत्र 'जानीते' इति कल्पनम् । तथाकल्पते समानानुपूर्वीकपदस्यावृत्तिसंभवात्पदावृत्तिदीपकेतिव्याप्तिः प्रसज्यते । तथापि प्रस्तुताप्रस्तुतोभयविषयकस्य दृष्टान्तलक्षणस्य प्रस्तुतमात्रविषयके अप्रस्तुतमात्रविषयकेवा पदावृत्तिदीपके नातिव्याप्तिरिति बोधयितुं । एतत् 'देवींवाच' मित्याद्युदाहरणमुक्तमिति ॥

अत्र—पाठपरिवर्तनं कर्तव्यमिति नकथञ्चिदपि नकेनापि ज्ञायते । पाठपरिवर्तनेकृते छन्दोभङ्गश्च । तथाच भिन्नार्थकभिन्नानुपूर्वीकपदद्वयकस्य दृष्टान्तस्य, भिन्नार्थकसमानानुपूर्वीकपदावृत्तिरूपत्वकथनमसंभवदेव ॥ रसिकरञ्जनीकारोपि चन्द्रिकाकारवदाशङ्कामुद्भाव्य उभयत्र ज्ञाधातोरेकत्वात्तावन्मात्रेण पदावृत्तिदीपकत्वं यत्प्रो-

वाच, तद्धातुमात्रस्य पदत्वाभावादेव निरस्तम् । तस्यचेयमानुपूर्वी । प्रत्ययांशभेदेपिप्रकृत्यंशस्यैक्येन पदावृत्तिसत्त्वात् ' इति ॥

इत्थञ्च—' अत्रोदाहरणे पदावृत्तिदीपकाद्विशेषःपूर्ववत् ' इति दीक्षितलेखनं चिन्त्यम् ॥

॥ इति दृष्टान्तालङ्कारविचारः ॥



विषयः (३९) अथनिदर्शना (क)

कुवलयानन्दकृता निदर्शनालङ्कारे वाक्यार्थवृत्तिनिदर्शनापदार्थवृत्तिनिदर्शनयोः स्वाभिप्रायानुसारेण लक्षणद्वयं परिकल्प्य, प्राचीनैर्वाक्यार्थवृत्तिनिदर्शनात्वेनोदाहृतं ' वियोगेगौडनारीणाम् ' इति पद्यं पदार्थवृत्तिनिदर्शनात्वेनोदाहृतम् । दीक्षितकल्पितं लक्षणद्वयमिदम् । ' विशिष्टयोर्धर्मिणोरैक्यारोपो वाक्यार्थवृत्तिनिदर्शना । उपमानोपमेययोरन्यतरस्मिन्नन्यतरधर्मारोपः पदार्थवृत्तिनिदर्शना । इति व्यवस्था ' इति ॥

तत्र दीक्षितव्यवस्थापितं वाक्यार्थवृत्तिनिदर्शनायालक्षणं तदुदाहृतेष्वेव पञ्चसु पद्येषु एकस्मिन्पद्यखण्डेच समन्वितं भवतिनेति विचार्यते । लक्षणे ' विशिष्टयोर्धर्मिणोः ' इत्यत्र ' विशिष्टयोः ' इत्यस्य चन्द्रिकायां रसिकरञ्जन्याञ्च ' विंबप्रतिविंबभावापन्नधर्मविशिष्टयोः ' इति व्याख्यानात् ' यद्दातु ' रित्यादिप्रथमोदाहरणे विंबप्रतिविंबभावापन्नौ यौ धर्मौ सौम्यताऽकलङ्कतारूपौ तद्विशिष्टौ यौ धर्मिणौ दातृपूर्णेन्दुरूपौ तयोरैक्यारोपोनास्ति किन्तु धर्मयोः । तदुक्तं तैरेव । ' अत्रदातृपुरुषसौम्यत्वस्योपमेयवाक्यार्थस्य, पूर्णेन्दोरकलङ्कत्वस्योपमानवाक्यार्थस्यच यत्तद्धर्मैक्यारोपः ' इति ॥

एवं ‘ अरण्यरुदितम् ’ इत्यादावपि बिंबप्रतिबिंबभावापन्नौ यौ धर्मौ अरण्यरोदनादिः अबुधजनसेवाच तद्विशिष्टौ यौ धर्मिणौ अरण्यादिः अबुधजनश्च तयोरैक्यारोपोनास्ति किन्तु धर्मयोरेव तदप्युक्तैरेव ‘ अत्राबुधजनसेवाया अरण्यरोदनादीनाञ्च यत्तद्भ्यामैक्यारोपः ’ इति ॥ एवं ‘ राजसेवा मनुष्याणा मसिधारावलेहनम् ’ इत्यत्रापि धर्मयोरेवैक्यारोपः नतुधर्मिणोः । तथाचोक्तस्य लक्षणस्य त्रिषूदाहरणेष्वव्याप्तिः । उक्ताव्याप्तिपरिहाराय ‘ विम्बप्रतिबिम्बभावापन्नधर्मिविशिष्टधर्मयोरैक्यारोप ’ इति लक्षणं करणीयम् । तदपि तैरेवोक्तम् । ‘ ‘ वाक्यार्थयोस्सदृशयो ’ रिति लक्षणवाक्ये वाक्यार्थशब्देन बिंबप्रतिबिंबभावापन्नवस्तुविशिष्टस्वरूपयोः प्रस्तुताप्रस्तुतधर्मयोर्विवक्षितत्वादिति ’ इति ॥ अनेन वाक्येन बिंबप्रतिबिंबभावापन्नत्वं धर्मिणोर्विशेषणम् । तद्वैशिष्ट्यंधर्मयोः । तयोरैक्यारोप इत्युक्तंभवति ॥

इत्थञ्च—उक्तेषु त्रिषूदाहरणेषु बिंबप्रतिबिंबभावापन्नधर्मिविशिष्टधर्मयोरैक्यारोपसद्भावाल्लक्षणसमन्वयेपि ‘ त्वयिसतिशिवदातरि ’ ‘ दोर्भ्यामब्धिततितीर्षन्तः ’ इत्युदाहरणद्वये बिंबप्रतिबिंबभावापन्नौ यौ धर्मिणौ शिवसत्तासमानकालिकेतरानुसरणकर्ता, कामधेनुसत्तासमानकालिककरभानुसरणकर्ताच तयोर्धर्मिणोरेवैक्यम् ‘ इतरमनुसरन्तोवयंकरभमनुसरामः ’ इत्यनेनोभयोरैक्यस्यप्रतिपादनात् ॥ एवं तव गुणस्तोतॄणां दोःकरणकाब्धिकर्मकतरणेच्छावताञ्चैक्यारोपाच्च । नतुधर्मिविशिष्टधर्मयोरैक्यारोप इत्यव्याप्तिः तथाचाननुगमः ॥

इयञ्चानुपपत्तिश्चन्द्रिकाकारेण, रसिकरञ्जनीकारेणवा नोद्भाविता नचसमाहिता ॥

समाधीयतेचास्माभिः । बिंबप्रतिबिंबभावापन्न धर्मिधर्मान्यतरविशिष्टधर्मधर्म्यन्यतरयोरैक्यारोपो वाक्यार्थवृत्तिनिदर्शना ॥ अथवा—

'बिंबप्रतिबिंबभावापन्नवस्तुविशिष्टवस्तुनोरैक्यारोप' इति । अस्यच्च-पञ्चस्वप्युदाहरणेषु लक्षणसमन्वयो भवति । वस्तुपदेनयथासंभवं धर्मधर्मिणोरुभयोरपि ग्रहणात् । तथाचनाननुगमः । इति ॥



विषयः (४०) निदर्शना (ख)

कुवलयानन्दकृता सदर्थबोधनरूपनिदर्शनोदाहरणतया पद्यमिदमुपदर्शितम्

'चूडामणिपदेधत्ते योदेवं रविमागतम् ।
सतां कार्याऽऽतिथेयीति बोधयन्गृहमेधिनः ॥' इति ॥

अस्मिन्पद्ये 'बोधयन्' इत्यत्र 'बुध अवगमने' इति धातुः । ततो णिजन्ताच्छतृप्रत्ययः । णिजर्थश्च समर्थाचरणम् । तच्च समर्थीकरणम् । बोधयन्नित्यस्य कर्मभूता गृहमेधिनो गृहस्थाः । समर्थाचरणेणिचूप्रयोगस्योदाहरणं तेनैवदत्तम् 'कारीषोग्निरध्यापयती' ति । समन्वयश्चदर्शितः 'यथाकारीषोग्निः शीतापनयनेन वटूनध्ययनसमर्थान्करोती' ति ॥

'कारीषोग्नि' रित्यादिदृष्टान्तानुसारेणायमर्थोलभ्यते । यथा वटवः शीतबाधया अध्ययनासमर्थाः ततः कारीषाग्निसांनिध्यादध्ययनसमर्थाभवन्ति, एवं गृहस्थाः पूर्वमस्माभिरस्मद्गृहागतास्सत्पुरुषाः पूजनीया इति ज्ञानाभाववन्तस्ततस्समागतं रविं शिरसा संभावयन्तमुदयगिरिं दृष्ट्वा, यथायं पर्वतस्समागतं रविं शिरसासंभावयति तथा वयमपि गृहागतं साधुमुचितपूजया संभावयेम इति बोधवन्तो भवन्तीति ॥

ननु—दीक्षितोक्तस्य 'यथाकारीषोग्नि' रित्यादिदृष्टान्तदार्ष्टान्तिकग्रन्थस्य नभवदुक्तोर्थः किन्तु 'एवं वर्ण्यमानः पर्वतः स्वयमुप-

मानभावेन गृहमेधिनः उक्तबोधनसमर्थान्कर्तुं क्षमते ' इति तद्वाक्येन पर्वतउपमानम् । गृहस्थाउपमेयाः । उपमानोपमेययोर्बोधनं साधारणोधर्मः । पर्वतोपि बोधयति, गृहस्थाअपिबोधयन्ति । इत्यर्थस्सिध्यति । बोधनप्रकारः कइतिचेत् सच तैरेवोक्तः । ' यथायं पर्वतः समागतं रविं शिरसा संभावयति एवं गृहमेधी समागतं सन्तमुचितपूजया संभावयेत् ' इति ॥ तथाच–गृहस्था इतरान्बोधयन्ति । किमिति ? ' गृहस्थस्स्वगृहागतंसाधुंपूजयेत् ' इति । कइव ? समागतं रविं शिरसा संभावयन्पर्वतइव इतिदृष्टान्तं प्रदर्श्य बोधयन्ति । पर्वतस्तु स्वयं दृष्टान्तभूतस्सन् गृहस्थानितरबोधनसमर्थान्करोतीति ॥

मैवम् । अणिजन्तस्य (केवलस्य) धातोः योऽर्थःक्रिया तदाश्रयस्यकर्तुः तत्क्रियासामर्थ्यप्रयोजकत्वं णिजर्थः । तस्य प्रयोजककर्तरि (णिजन्तकर्तरि) स्वरूपसंबन्धेनान्वयः ।

दृष्टान्ते ' कारीषोग्नि ' रित्यत्र अणिजन्तोधातुः ' इङ् ' धातुः । तदर्थः अध्ययनम् । तदाश्रयः (कर्ता) वटुः तस्य तत्क्रियासामर्थ्यं अध्ययनसामर्थ्यं तत्प्रयोजकत्वं कारीषाग्नेः शीतापनयनद्वारा ।

एवं दार्ष्टान्तिके ' बोधयन् ' इत्यत्र अणिजन्तो ' बुध ' धातुः । तस्यार्थः, अवगमनं, ज्ञानम्, तदाश्रयः (कर्ता) गृहमेधी । तस्य तत्क्रियासामर्थ्यम्, ज्ञानसामर्थ्यम् । तत्प्रयोजकत्वं णिजर्थः । ज्ञानसामर्थ्यप्रयोजकत्वञ्च ज्ञानजनकत्वम् । तच्च पर्वतस्य दृष्टान्तविधया । पर्वतेन जनितं गृहस्थस्य ज्ञानं किमाकारम् ? ' यथायं पर्वतो रविं शिरसा संभावयति तथा अहमपि गृहागतं साधुं पूजयेयम् ' इत्याकारकम् । ननु दीक्षितोक्तरीत्या ' गृहमेधी समागतं सन्तमुचितपूजया संभावये ' दित्याकारकम् । तथासति ' गृहस्थोऽतिथिंपूजयेत् ' इत्याकारकं ज्ञानं तदुपदेशश्च यथासंभवं ब्रह्मचारिमस्कर्यादीनामपि संभवतीति

'बोधयन्गृहमेधिन' इति गृहामेधिनामेव बोधनकर्मत्वनिर्देशो निरर्थको विरुद्धश्चभवेत् ॥

ननु—दीक्षितवाक्ये 'उक्तबोधनसमर्थान्कर्तुं क्षमते' इत्यत्र बोधनपदं णिजन्ताल्ल्युडन्तं न भवति । ततश्च बोधइत्येवार्थः नतु बोधनं परोपदेशः । तादृशज्ञानञ्च गृहस्थानामेवेति तेषामेव कर्मत्वोपपत्तिरितिचेत् न ॥ 'गृहमेधी समागतं सन्त मुचितपूजया संभावयेत्' इति दीक्षितप्रदर्शितः किं गृहमेधिनो ज्ञानाकारः? उतोपदेशाकारः? उपदेशाकारत्वे पूर्वोक्तरीत्या गृहमेधिनां कर्मत्वानुपपत्तिः । ज्ञानाकारत्वे तादृशज्ञानेन गृहिणां न किमपिप्रयोजनम् । गृहागतपूजनस्य गृहस्थमात्रधर्मत्वात् ज्ञानस्यानुष्ठानैकप्रयोजनत्वाच्च 'अहं गृहागतान्पूजयेय' मित्येवगृहस्थज्ञानाकारस्योचितत्वात् । दीक्षितोक्तस्य ज्ञानाकारत्वोपदेशाकारत्वोभयरूपत्वासंभवात् ॥

॥ इति निदर्शनाविचारः ॥



## विषयः (४१) अथ व्यतिरेकः

व्यतिरेकालङ्कारे दीक्षितजगन्नाथयोर्विवादमूलमेतदेव, यद्राजानकरुय्यकमम्मटभट्टयोर्विवादमूलम् । अलङ्कारसर्वस्वे रुय्यकोब्रूते 'उपमानादुपमेयस्याधिक्ये विपर्ययेवा व्यतिरेकः' 'विपर्ययोन्यूनगुणत्वम्' इति ॥ मम्मटभट्टस्तु काव्यप्रकाशे 'उपमानाद्यदन्यस्यव्यतिरेकस्सएवसः' 'व्यतिरेकआधिक्यम्' इति ॥ एवञ्च—उपमानादुपमेयस्याधिकगुणत्वएव व्यतिरेक इति मम्मटपक्षं जग्राह जगन्नाथः । उपमानादुपमेयस्याधिकगुणत्वइव न्यूनगुणत्वेपि व्यतिरेक इति रुय्यकपक्षमवलम्ब्य द्वितीयभेदमुक्त्वा ततोपि अनुभयरूपमपरं भेदमाह दीक्षितः । रुय्यकमम्मटाभ्यामुपमेयन्यूनत्वाधिक्ययोर्व्यतिरेकत्वाङ्गीकारे

किं बीजमितिचेत् । वैलक्षण्यमात्रं व्यतिरेकशब्दार्थ इति आधिक्यमात्रं तदर्थ इतिच ॥ रुय्यको न्यूनत्वे इदमुदाजहार ॥

' क्षीणःक्षीणोपि शशी भूयोभूयो भिवर्धते सत्यम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातन्तु ' ॥

इति ॥ अस्येदंतात्पर्यम् । कुपितां नायिकां प्रति नायकस्य समाधानोक्तिरियम् । कृष्णपक्षे क्रमक्षीणश्चन्द्रश्शुक्लपक्षे क्रमाद्वृद्धिं प्राप्नोति । यौवनंतु गतं नपुनरायाति । तस्मात्सुन्दरि कोपाद्विरम । प्रसन्नाभव इति ॥ अत्रपद्ये—उपमेयं यौवनं उपमानं चन्द्रः । उपमानभूतचन्द्रापेक्षयोपमेयस्य यौवनस्याधिक्यमुच्यतेवा किंवा न्यूनता इतिविचारे रुय्यकस्यायमभिप्रायः । क्षीणस्यापि चन्द्रस्य पुनःपुनरभिवृद्ध्या आधिक्यम् । यौवनस्यतु गतस्य पुनरनुत्थानान्न्यूनगुणत्वमिति ॥ मम्मटस्यतु यौवनेऽधिकगुणत्वमेव विवक्षितम् । क्षीणस्यापि चन्द्रस्य पुनःपुनरभिवृद्ध्या सुलभत्वादनादरणीयत्वम् यौवनस्यतु गतस्य पुनरनावृत्त्या दुर्लभत्वादादरणीयत्वं गुणाधिक्यमेव । नतु न्यूनत्वमिति ॥ एवं पक्षद्वये स्थिते पद्यकर्तुः कवेः कस्मिन्पक्षे तात्पर्यमिति विचारेकृते, रुय्यकपक्षावलम्बनेन यौवने क्षयिष्णुत्वरूपन्यूनगुणत्वमात्रविश्रान्तौ, नायिकायाः यौवने अस्थिरत्वबुद्ध्या निर्वेदोदयात्सद्यस्स्वातिशयाधायकस्येष्टस्य कोपस्यैवाभ्युपगमापत्त्या ' विरमप्रसीद ' इत्यादि नायकप्रार्थनाविरोध स्स्फुटः ॥ मम्मटाभिप्रायानुसारेण यौवने दुर्लभत्वरूपगुणाधिक्ये विवक्षिते सत्येव विलक्षणसुखहेतुभूते क्षणिकेच यौवने क्षणमात्रमपि कोपादिना वृथानयापनीयमिति नायिकायाज्ञानजननात् शीघ्रं कोपसमाधानं भवतीति प्रकृतात्यन्तानुकूल्यम् ॥

अत्रायंविशेषः । ' क्षीणःक्षीण ' इति पद्यं अलंकारसर्वस्वे रुय्यकेणोपात्तम् । तद्व्याख्यात्रा विमर्शिनीकारेण ' प्रियवयस्योपदेशे '

इत्यनेन नायिकांप्रति तस्याः प्रीतिपात्रभूतायाः सख्याः तस्याः प्रियस्यनायकस्यसख्यावा वचनमित्युक्तम् । तद्दूषणाय तदनुवादकेन रसगङ्गाधरकारेणापि 'प्रियहितकारिण्यावचने' इत्यनेन तथैवोक्तम् ॥ मयातु 'सुन्दरि' इति संबोधनेन, चन्द्रस्यैव दृष्टान्तीकरणात् 'प्रसीद' इति प्रार्थनाबलाच्च नायकोक्तिरित्युक्तम् । आकरस्तु नज्ञायते, यतोस्यैवोक्तिरिति निर्धार्येत ॥

एवं कुवलयानन्दे व्यतिरेके न्यूनत्वस्योदाहरणं प्रदर्शितम् । 'रक्तस्त्व' मित्यादि ॥ अशोकवृक्षंप्रति विरहिणउक्तिरियम् । हेअशोक त्वं नवकिसलयैः रक्तः । रक्तवर्णः । अहन्तु प्रियायागुणैः । सौन्दर्यादिभिः रक्तः अनुरागवान् । शिलीमुखाः भ्रमरास्त्वामायान्ति कामचापमुक्ताबाणाः मामायान्ति । कान्तायाः पादप्रहारस्त्वमुदे सपदि दोहलेन कुसुमोद्गमात् । ममापि भोग्यत्वात् । तस्मात्सर्वमावयोस्तुल्यम् । त्वंपुनरशोकः । शोकरहितः तन्नामकश्च । अहन्तु सशोकः । एतावदेववैलक्षण्यम् । इत्यर्थः । अत्रालङ्कारसर्वस्वकारमतानुसारेण वैलक्षण्यमात्रं व्यतिरेकशब्दार्थ इति कृत्वा आधिक्यइव न्यूनत्वेपि व्यतिरेकः । उपमानादशोकादुपमेयस्य नायकस्य सशोकत्वान्न्यूनत्वमिति दीक्षिताभिप्रायः ॥

जगन्नाथाभिप्रायस्तु मम्मटपक्षावलंबनेन आधिक्येसत्येव व्यतिरेकः । न्यूनत्वेतु न । नायकस्य सशोकत्वं वास्तवमिति वास्तवार्थोक्तावचमत्कारादलङ्कारत्वासंभवाच्च । किन्त्वत्र पद्ये उपमायाः पादत्रयोक्तायाः निराकरणं क्रियते चतुर्थपादेन । उपमादूरीकरणमेवात्र रसानुगुणतया चमत्कारि । यथा सुरतावसरे भूषणदूरीकरणमेव भूषणम् । अतएवानन्दवर्धनस्सहृदयधुरन्धरः 'सुकविस्तु रसानुसारेण क्वचिदलङ्कारसंयोगं क्वचिदलङ्कारवियोगञ्च कुर्यात्' इत्युक्त्वा, 'रक्तस्त्वम्' इति पद्यं सादृश्यदूरीकरणे उदाजहे । इति ॥

अत्र जगन्नाथप्रदर्शिता आनन्दवर्धनस्यानुपूर्वी 'सुकविस्तु' इत्यादिः ध्वन्यालोकपुस्तकेनास्ति । किन्त्वेवं दृश्यते 'गृहीतमपिच यमवसरे त्यजति तद्रसानुगुणतयाऽलङ्कारान्तरापेक्षया । यथा । 'रक्तस्त्व' मित्यादि ॥ तथाच 'गृहीतमपि' इत्यादिवाक्यस्यैव व्याख्यारूपतया अर्थानुवादः 'सुकवि' रित्यादिना जगन्नाथेन कृत इति ज्ञायते ॥

यत्तु अत्र रसगङ्गाधरकारः ''रक्तस्त्व' मितिपद्यं सादृश्यदूरीकरणे उदाजह्रे ध्वनिकृत्' इत्युवाच तन्नतथा, ध्वन्यालोके 'रक्तस्त्व' मितिपद्यानन्तरमेवंदृश्यते वाक्यम् 'अत्रहि प्रबन्धप्रवृत्तोपि श्लेषः व्यतिरेकविवक्षया त्यज्यमानो रसविशेषं पुष्णाति' इति ॥

अस्यार्थः । चतुर्थपादस्थितो व्यतिरेकएव प्राधान्येन विवक्षितः । आदितः पादत्रयकथितः 'रक्तः' 'शिलीमुखा' इत्यादिश्लेषस्तु व्यतिरेकोत्थापकतयैव लब्धस्वरूपोऽसत्कल्पस्त्यज्यमानएव विप्रलंभशृङ्गाररूपं रसविशेषं पुष्णातीति ॥ इत्थञ्च ध्वनिकृता लोचनकृताचात्र व्यतिरेकएव स्थापितः । श्लेषस्तु परित्यक्तः । रसगङ्गाधरकृतातु व्यतिरेकएव त्यक्त इति विरोधइतिचेत्सत्यम् । जगन्नाथस्येदं तात्पर्यम्, मम्मटाभिप्रायानुसारेणाधिक्येसत्येव व्यतिरेकादत्र व्यतिरेकोनास्ति । चतुर्थपादस्तु 'सर्वन्तुल्य' मित्यनेनोक्तामुपमां वारयति । अलंकारत्यागस्यैव रसानुगुण्येन चमत्कारित्वमित्यंशमात्रे ध्वनिकृत्संमतिरुक्ता । नतु व्यतिरेकांशेपि । व्यतिरेकांशस्तु नस्वसंमतइति ॥

अस्मदभिप्रायस्तु 'न्यूनत्वेपिव्यतिरेकालङ्कार' इति रुय्यकपक्षस्यैवानुकूलौ ध्वन्यालोकलोचनग्रन्थाविति ॥

एवमनुभयपर्यवसायि व्यतिरेकोदाहरणे,

'दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्यच केवलमाकारतो भेदः ॥'

इतिपद्ये दृढतरनिबद्धमुष्टित्व कोशनिषण्णत्व सहजमलिनत्वानि कृपणकृपाणोभयसाधारणत्वादुपमोपपादकानि । केवलमाकारतोभेदइत्यंशे व्यतिरेकत्वं वक्तव्यम् । तत्राधिक्यात्मकव्यतिरेकस्यानुभयपर्यवसायित्वमुच्यतेवा ? किंवा न्यूनत्वात्मकव्यतिरेकस्यतथात्वम् ? उपमेयस्य कृपणस्याधिक्यप्रतिपादकधर्माभावान्नाधिकरूपत्वम् । दीर्घाक्षरस्यैवाधिक्यरूपत्वमितिचेन्न । तस्योपमानभूतकृपाणवाचककृपाणशब्दगतत्वात् । आकृतेरपि आधिक्यरूपत्वं नास्ति, तस्या उभयवृत्तित्वात् । किञ्च दीर्घाक्षराकृत्योरुभयोरभेदाध्यवसाने साधारणधर्मत्वस्यैव संपादनात्कृपणकृपाणयोरुपमैव । नतु व्यतिरेकः । यथा 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव ' इत्यत्र पुरे कलकलध्वनिसहितत्वम्, सुधांशुबिम्बेषोडशकलावैशिष्ट्यमिति धर्मयोर्भेदेपि तदुभयार्थकश्लिष्टसकलकलशब्दस्यैव साधारणधर्मत्वम् तथा दीर्घाक्षराकृत्युभयवाचकाकारशब्दस्यैवोपमाप्रयोजकत्वम् । तस्माद्गम्योपमैवात्र नतु व्यतिरेकः । श्लेषस्तूपमानुकूलः व्यतिरेकप्रतिकूलः ॥ अत्र यदि व्यतिरेकोऽपेक्षितस्यात्तदा 'कृपणस्य कृपाणस्यच केवलदीर्घाक्षराद्भेदः ' इत्येव ब्रूयात् । पद्यकर्तुः कवेरिदन्तात्पर्यम् । दृढतरेत्यादिविशेषणानां कृपणकृपाणोभयसाधारणत्वात्तयोरुपमैव । दीर्घाक्षरभेदोपि आकृतिभेदत्वेनाध्यवसितत्वात्साधारणएवेति सर्वथा तयोरुपमैव । 'आकारतोभेद ' इत्यत्राकारभेदस्योक्तरीत्योभयसाधारणत्वादेव न्यूनत्वरूपत्वं सुतरांनसंभवत्येव । तस्मात्सर्वथात्र गम्योपमैवेति ॥

जगन्नाथेनैतावतिविचारेकृतेपि चन्द्रिकाकार एवंप्रतिवक्ति । 'एवञ्च किञ्चिद्धर्मप्रयुक्तसाम्यवत्तया प्रतीयमानयोः किञ्चिद्धर्मप्रयुक्तवैलक्षण्यं व्यतिरेकशरीरम् । वैलक्षण्यन्तु क्वचिदुपमेयस्योत्कर्षे क्वचिच्च तदपकर्षे पर्यवसन्नम् । क्वचित्तु तदन्यतरपर्यवसानविरहेपि स्ववैचित्र्यविश्रान्तमात्रमिति बोध्यम् । एतेन चरमभेदद्वयतदुदाहरणदूषणं

कस्यचिदापातरमणीयमिव भासमानं प्रत्युक्तं वेदितव्यम् । अत्यन्तासारतयातु नानुवादमर्हतीत्युपरम्यते ' इति ॥ अत्रविषये उभयोर्विचारवैचक्षण्यं प्रेक्षकैरवेक्षणीयम् ॥ किञ्चात्र चन्द्रिकावाक्ये ' आपातरमणीयामिव भासमानं प्रत्युक्तम् ' इत्यत्र ' इवभासमान ' मित्यधिकम् । नाधिक्यमात्रंदोषः । अपितु विरोधोपि । ' आपातरमणीय ' मित्यनेनैव विचारे कृते दोपभूयिष्ठमित्यर्थो लभ्यते । तदुपरि ' इवभासमान ' मित्युक्ते, ' आपातरमणीयं न भवति ' विचारेकृतेपि रमणीयमेवेत्यर्थलाभात् इति ॥

॥ इति व्यतिरेकविचारः ॥



विषयः (४२) विनोक्तिविचारः (क)

कुवलयानन्दे द्वितीयविनोक्तिलक्षणोदाहरणकारिकायाः

' तच्चेत्किञ्चिद्विनारम्यं विनोक्तिस्सापि कथ्यते ।
विनाखलैर्विभात्येषा राजेन्द्र भवतस्सभा । '

इत्यस्याव्याख्यायां चन्द्रिकायामियमानुपूर्वी । ' यत्तु हृद्यो विनार्थसंबन्धएव विनोक्तिः । हृद्यत्वञ्च विनाकृतस्य वस्तुनो रमणीयत्वारमणीयत्वाभ्यां भवति । इत्यर्वाचीनैरुक्तम् । तदयुक्तम् । कारणंविना कार्योत्पत्तिकथनरूपे विभावनालंकारेऽतिव्याप्तिवारणाय विनार्थसंबन्धप्रयुक्तप्रस्तुतरमणीयत्वादेरपि लक्षणे निवेशस्यावश्यकत्वादिति ' इति ॥ अत्र अर्वाचीनैरित्यनेन रसगङ्गाधरकारएव विवक्षितः । तत्र तस्यैव लक्षणवाक्यमिदम् । ' विनार्थसंबन्धएव विनोक्तिः । हृद्यत्वञ्चानुवर्तते । तच्च विनाकृतस्य वस्तुनो रमणीयत्वारमणीयत्वाभ्यां भवति ' इति ॥ अत्रदोषमुद्भावयतश्चन्द्रिकाकारस्यायं भावः । उक्तरसगङ्गाधर

वाक्ये अवान्तरवाक्यत्रयं वर्तते । 'विनार्थसंबन्धएव विनोक्तिः' इति प्रथमं वाक्यम् । 'हृद्यत्वञ्चानुवर्तते' इति द्वितीयम् । 'तच्च विनाकृतस्य वस्तुनोरमणीयत्वारमणीयत्वाभ्यां भवति' इति तृतीयम् । तत्राद्यं वाक्यद्वयं मिलित्वालक्षणपरम् । तृतीयन्तु विभागपरम् इति जगन्नाथतात्पर्यमितिकृत्वा प्रस्तुतगतरमणीयत्वारमणीयत्वयोर्लक्षणे निवेशाभावात् 'चमत्कारीविनार्थसम्बन्ध' इत्येव लक्षणं निष्पन्नमिति एतादृशलक्षणस्य विभावनालङ्कारेऽतिव्याप्तिः । 'विभावना विनापि स्यात्कारणं कार्यजन्म चेत् ।' इतिहि तल्लक्षणम् । 'अप्यलाक्षारसासिक्तं रक्तं तच्चरणद्वयम्' इतिचोदाहरणम् । अत्र रक्तत्वकारणीभूतलाक्षारसासेकं विनापि चरणरक्तत्वकथनाच्चमत्कारी विनार्थसंबन्धोऽस्तीति ॥ रमणीयत्वारमणीयत्वयोरपि लक्षणघटकत्वेतु नातिव्याप्तिः । तत्र लाक्षारसासेकरूपकारणविनाभाववर्णनेपि तत्प्रयुक्तं चरणद्वये रक्तत्वमात्रमुक्तम् । नतु रमणीयत्वमरमणीयत्वंवा । इति ॥ तस्माद्दीक्षितोक्तरीत्या 'विनोक्तिश्चेद्विनाकिञ्चित्प्रस्तुतं हीनमुच्यते' इति वदरस्यत्वं, 'तच्चेत्किञ्चिद्विनारम्यं विनोक्तिस्सापि कथ्यते' इति वद्रम्यत्वंवा लक्षणघटकं वक्तव्यम् । तथा नोक्तं जगन्नाथेनेति दूषणमुक्तश्चन्द्रिकाकारेण ॥

अत्रायमस्मदीयोभिसन्धिः एतच्च दूषणं नप्रसरति जगन्नाथोक्तौ । तथाहि । यदा हृद्यत्वंलक्षणघटकं तदातत्प्रयोजकीभूते रमणीयत्वारमणीयत्वे अपि लक्षणघटके एव । ताभ्यांविना हृद्यत्वस्यैवासंभवात् ॥ तस्माद्रमणीयत्वारमणीयत्वयोरपि लक्षणघटकत्वं दीक्षितस्येव जगन्नाथस्यापि विवक्षितमेव । तथाच रसगङ्गाधरोक्तं वाक्यत्रयं मिलितमेव लक्षणतया तदभिमतम् ॥

किञ्च दीक्षितोक्तरीत्या रमणीयत्वारमणीयत्वयोर्लक्षणघटकत्वेपि विभावनायामतिव्याप्तिर्दुर्वारा । विभावनाया आद्यभेदस्यैवोदाहरणे

'अपीतक्षीबकादम्बमसंमृष्टामलाम्बरम् ।
अप्रसादितशुद्धाम्बु जगदासीन्मनोहरम् '

इत्यत्र पानं विना क्षीबत्वं, मार्जनं विना अमलत्वमित्यादिविनार्थसंबन्धप्रयुक्तं प्रस्तुतजगद्गतं रमणीयत्वं प्रतिपादितम् 'जगदासीन्मनोहर' मिति ॥

वस्तुतस्तु—विभावनायामतिव्याप्तेरेवनावकाशः । 'विभावना विनापि स्यात्कारणं कार्यजन्मचेत्' इति विभावनायां कारणविनाभावस्यैव लक्षणघटकत्वम् । विनोक्तौकारणातिरिक्तस्य यस्यकस्यचिदिति भेदादिति ॥



विषयः (४३) विनोक्तिविचारः (ख)

कुवलयानन्दे द्वितीयविनोक्त्युदाहरणतया पद्यमिदमुपात्तम् ।

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रिः
नैशस्यार्चिर्हुतभुजइव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गा रोधःपतनकलुषा गृह्णतीव प्रसादम् ।

इति । इदन्तुपद्यं प्रकृतोपयोगाय व्याख्यायते मया । कालिदासकृते विक्रमोर्वशीयनाटके प्रथमेऽङ्के पद्यमिदं विद्योतते । तस्यचैतस्य प्रकरणमिदम् । केशिनामानं दानवं विजित्य तदपहृतां साध्वसवशादपगतचेतनामूर्वशीं तस्यास्सख्या चित्रलेखया सह रथेन प्रत्याहरता राज्ञा पुरूरवसा क्रमादपगच्छन्मूर्छावस्थान्तामवलोक्य चित्रलेखांप्रत्युच्यते 'आविर्भूते' इत्यादि । एवमेवहि तत्र नाटके पद्यादस्मात्प्राक्तनी वाचः प्रक्रिया ।

(ततःप्रविशति रथारूढोराजा सूतश्च, भयनिमीलिताक्षी चित्रलेखाहस्तावलंविता ऊर्वशीच) (चित्रलेखा) सहि समस्सस समस्सस, (राजा) सुन्दरि समाश्वसिहि समाश्वसिहि

गतं भयं भीरु सुरारिसंभवं त्रिलोकरक्षी महिमाहि वज्रिणः ।
तदेतदुन्मीलय चक्षुरायतं निशावसाने नलिनीव पङ्कजम् ॥

(चित्रलेखा) अम्महे कहं उस्ससिदमेत्तसंभाविदजीविदा अज्जवि एसा सण्णं णप्पडिवज्जदि, (राजा) वलवदत्र तेसखी परित्रस्ता । तथाहि ।

मुञ्चति नतावदस्याः कम्पं कुसुमसमबन्धनं हृदयम् ।
पश्य हरिचन्दनेन स्तनमध्योच्छ्वासिना कथितः ॥

(चित्र) हळा उव्वसि पज्जवत्थावेहि अत्ताणं अणच्चराविअ पडिभासि (ऊर्वशी) (प्रत्यागच्छति) (राजा) (सहर्षम्) चित्रलेखे दिष्ट्या वर्धसे प्रकृतिमापन्ना ते प्रियसखी, पश्य' इति । अनन्तरं 'आविर्भूते' इत्यादिपद्यम् । पद्यानन्तरञ्च, '(चित्रलेखा) सहि उव्वसि वीसद्धा होहि । पडिहदा खु दे तिदसपरिपन्थिणो हदासा दाणवा । (ऊर्वशी) (चक्षुषीउन्मील्य) किं पहावदंसिणा महिन्देण अब्भुववण्णम्मि । (चित्रलेखा) ण महिन्देण, महिन्दसरिसाणुहावेण राएसिणा पुरूरवसेण । (ऊर्वशी) (राजानमवलोक्य) (आत्मगतम्) उवकिदंखु दाणवेण । (राजा) (प्रकृतिस्थामूर्वशींविलोक्य आत्मगतम्) स्थानेखलु नारायणमृषिं प्रलोभयन्त्यस्तदूरुसंभवामिमां विलोक्य व्रीडितास्सर्वा अप्सरस इति । अथवा नेयं तपस्विनस्सृष्टिः । अस्यास्सर्गविधौ प्रजापतिरभूत्' इत्यादि ॥

अनेन प्रकरणेन ऊर्वश्या मूर्च्छावस्था ज्ञायते । तथाहि । सर्वस्य जन्तोः जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणाख्याःपञ्चावस्था अनुभूयन्ते । तत्र

जाग्रदवस्थायां बाह्येन्द्रियाणां चक्षुरादीनां व्यापारास्सन्ति । स्वप्नावस्थायां बाह्येन्द्रियव्यापारो नास्ति । केवलमन्तरिन्द्रियस्य मनसो व्यापारोस्ति । स्वप्नेह्यनुकूलप्रतिकूलवस्तुदर्शनात्सुखदुःखभयाद्यनुभवात् । सुषुप्त्यवस्थायान्तु बाह्याभ्यन्तरोभयेन्द्रियजन्यं ज्ञानसामान्यं नास्ति । मूर्च्छावस्थायामपि तथैव । तयोर्वैलक्षण्यन्तु सुषुप्तौ भूयान्प्राणवायुसंयोगोवर्तते मूर्च्छायान्त्वल्पः । मरणे प्राणसंयोगएव नास्ति । सुषुप्तेः कारणमिन्द्रियाणां श्रमः । मूर्च्छायास्तु भयाभिघातादिः । मरणस्यायुःपरिसमाप्तिः । मूर्च्छायामविकृतं शरीरम् मरणे विकारि । आयुश्शेषेसति मूर्च्छाया जाग्रदवस्थां प्राप्नोति अन्यथा मरणम् । अतएव मूर्च्छा मरणायार्धसंपत्तिरिति वेदान्तिनः । तथाच ब्रह्मसूत्रम् 'मुग्धेऽर्धसंपत्तिः परिशेषात्' इति ॥

प्रकृतप्रकरणे 'निमीलिताक्षी', इत्यनेन बाह्येन्द्रियव्यापारो नास्तीत्यवगम्यते । 'समाश्वसिहि' इति राज्ञश्चित्रलेखायाश्च वचनं मूर्च्छां ज्ञापयति । नाटकेषु सर्वत्र मूर्छितानुद्दिश्य पार्श्वस्थानां 'समाश्वासिही' ति प्रयोगोदृश्यते । किञ्च चित्रलेखावचने 'उच्छ्वसितमात्रसंभावितजीविता' इत्यनेन जीवितमास्ति नवेति संशये उच्छ्वसितमात्रेण अल्पप्राणसंयोगमात्रेण जीवितं संभाव्यते अनुमीयते इत्यर्थकेन शरीरेन्द्रियाणां निर्व्यापारत्वमुच्यते । 'अद्याप्येषासंज्ञांनप्रतिपद्यते' इत्यनेन बाह्याभ्यन्तरज्ञानसामान्याभावउच्यते । 'बलवदत्रतेसखीपरित्रस्ता' इति राज्ञोवचनेन मूर्च्छायाः कारणं प्रबलतरं भयमित्युक्तम् । 'मुञ्चतिनताव' दित्यादिपद्येन अल्पप्राणसंबन्धद्योतकं हृदयचलनमुक्तम् । '(ऊर्वशीप्रत्यागच्छति) (राजा सहर्षम्) चित्रलेखे दिष्ट्यावर्धस्वे प्रकृतिमापन्ना ते प्रियसखी पश्य' इत्यनेनोर्वश्या मूर्च्छाया अपगमो ज्ञायते । ततश्च 'आविर्भूते' इत्यादिपद्यम् । पद्यानन्तरन्तु 'ऊर्वशि विस्रब्धा भव प्रतिहतादानवाः' इति चित्रलेखावचनानन्तर-

मूर्वशी चक्षुरुन्मील्य ‘ किंमहेन्द्रेणरक्षितास्मि ’ इति पृच्छति । चित्र-लेखातु ‘ नमहेन्द्रेण महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसा ’ इत्यादिमिथोभाषणेन दानवापहरणात्प्रभृति एतावत्पर्यन्तो नकश्चिद्वृत्तान्त ऊर्वश्या ज्ञातइत्यवगम्यते । तादृशाज्ञानंच मूर्च्छायामेव ।

इत्थञ्च पद्यस्य पूर्वोत्तरसन्दर्भानुसारेणेदन्तातपर्यम् कृष्णपक्ष क्षपा प्रथमं तमसाभिभूता चन्द्रोदयेसति यथा क्रमेण तेन मुच्यते, यथाच रात्रौ ज्वलतो ज्वलनस्य ज्वाला क्रमेण धूमस्तोमेन मुच्यते, स्रोतःपातितकूला कलुषाच गङ्गा यथा क्रमेण कालुष्यान्मुच्यते तथेय मूर्वशी मोहेन मूर्छया मुक्तकल्पा ईषन्न्यूनमुक्ता लक्ष्यत इति ॥

अत्र मोहो मूर्च्छा ‘ मुहवैचित्ये ’ इति धातोर्घञ् । वैचित्यं विचित्तता । बाह्याभ्यन्तरेन्द्रियजन्यज्ञानाभावः तद्वती अवस्था बोध्यते । ‘ मूर्च्छातु कश्मलं मोहः ’ इत्यमरकोशश्च ॥

कालिदासस्यैव कुमारसंभवे

‘ तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तंभयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ ’

इति मदनदहनानन्तरं रतेर्मूर्छावर्णने मोहेनेतिमूर्छायांप्रयोगाच्च ॥ अत्र-मल्लिनाथः—‘ मोहेन मूर्छयाकर्त्रा मोहेन दुःखसंवेदनाभावात्तस्योपकारकत्वोक्तिः ’ इति व्याचख्यौ ॥ अनेन मूर्छायां सुखदुःखसाक्षात्काराभाव उक्तः अतो रतेरिवोर्वश्याअपि ॥

काव्यरसादिलक्षणग्रन्थेषु प्रतापरुद्रीये ‘ मोहस्तु मूर्छनं भीति दुःखावेशानुचिन्तनैः ’ इति मोहलक्षणमुक्तम् । उदाहरणञ्च ‘ चन्द्रपादैरभिहतसकलाङ्गीमूर्छिताकोमलाङ्गी ’ इति ॥ काव्यप्रदीपे ‘ मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः । घूर्णनाज्ञानपतनभ्रमणादर्शना-

दिकृत् ॥ ' इति । अस्यैव व्याख्यायां प्रभाख्यायामनेनैव वैद्यनाथेन कृतायां ' तीव्राभिषङ्गे ' त्यादिकुमारसंभवपद्यमेवोदाहृतम् । साहित्यदर्पणेच प्रदीपोक्तलक्षणमेवोक्तम् । परन्तु ' घूर्णने ' ति पदस्थाने ' मूर्छने ' तिपदं निविष्टम् । उदाहरणन्तु ' तीव्राभिषङ्गे ' त्यादिपद्यमेव ॥

रसगङ्गाधरेतु । इयञ्च मूर्छा, मरणाख्यसञ्चारिभावतयोक्ता । तल्लक्षणन्तु ' रोगादिजन्या मूर्छारूपा मरणप्रागवस्था मरणम् । नचात्र प्राणवियोगात्मकं मुख्यं मरणमुचितंग्रहीतुम् । चित्तवृत्त्यात्मकेषु भावेषु तस्याप्रसक्तेः । भावेषुच सर्वेषु कार्यसहवर्तितया शरीर प्राणसंयोगस्य हेतुत्वात् उदाहरणम् ।

दयितस्य गुणाननुस्मरन्ती शयने
संप्रति या विलोकितासीत् ।
अधुनाखलु हन्त सा कृशाङ्गी
गिरमङ्गीकुरुते न भाषितापि ॥

अयञ्चभावः (मरणाख्यः) स्वव्यञ्जकवाक्योत्तरवर्तिना वाक्यान्तरेण सन्दर्भघटकेन नायिकादेः प्रत्युज्जीवनवर्णने विप्रलंभस्य, अन्यथातु करुणस्य पोषकः, इति विवेक ' इत्युक्तम् ॥

एवंस्थिते कुवलयानन्दचन्द्रिकाकारेण पद्यमिदमेवंव्याख्यातम् । ' आविर्भूत इति । मानवतीविषये नायकस्य परामर्शोऽयम् । इयं वरतनुः अन्तः अन्तःकरणे मोहेन मानावेशेन मुक्तकल्पा ईषन्न्यून मुक्ता लक्ष्यते । केव गङ्गेवेत्यादि '

अत्रेदं विचार्यते । अस्य पद्यस्य ' मानवतीविषये नायकस्य परामर्शोऽयम् ' इत्यवतरणिकादानम् , पद्यस्थस्य ' मोहेने ' तिपदस्य

'मानावेशेने' ति व्याख्यानञ्च, चन्द्रिकाकारस्य विक्रमोर्वशीयग्रन्थानवलोकनं, तेन तस्योर्वश्या मूर्छाप्रकरणानवबोधं, तेनच 'मोहेने' त्यस्य 'मानावेशेन' इति प्रकरणाननुगुणार्थकरणञ्च ज्ञापयति ॥

तथाहि । अनेन चन्द्रिकाकारेण विक्रमोर्वशीयग्रन्थो नावलोकित इत्यत्र बहूनि कारणान्युपलभ्यन्ते । तत्रेदमाद्यम् । उत्तरत्रोल्लासालङ्कारोदाहरणतयाग्रहीष्यमाणस्य,

'यदयं रथसंक्षोभादंसेनांसो निपीडितः ।
एकः कृती मदङ्गेषु शेषमङ्गं भुवो भरः' ॥

इति विक्रमोर्वशीयपद्यस्य व्याख्यासमये चंद्रिकायां 'अर्थाद्वनितायाः' इति वक्ष्यति । अस्मिन्पद्ये, 'अंसेन' इति पदस्य संबन्धिपदं नोक्तम् । अतश्चन्द्रिकाकारेण 'अर्थात्' इति हेतुप्रदर्शनपुरस्सरं 'वनितायाः' इति पदमध्याहृतम् । विक्रमोर्वशीयग्रन्थदर्शने सतिहि 'वनितायाः' इति चतुरक्षरीं विहाय 'ऊर्वश्याः' इति त्र्यक्षरीमेव लाघवादध्याहरेत्प्रकरणोचिताम् । कोवा प्रकरणज्ञः प्राकरणिकमर्थमुपेक्षेत । इति ॥

द्वितीयमिदङ्कारणम् । काव्यप्रदीपे उदाहरणतया गृहीतस्य 'अस्यास्सर्गविधौ प्रजापतिरभूच्चन्द्रोनु कान्तिप्रदः' इत्यादिविक्रमोर्वशीयपद्यस्य व्याख्यायामुदाहरणचन्द्रिकाख्यायामनेनैव वैद्यनाथेन लिखितायां 'पुराणोमुनिः' इति पदस्य 'ब्रह्मा' इति विवरणं कृतम् । विक्रमोर्वशीयप्रकरणेतु 'पुराणोमुनिः' इति पदेन विवक्षितो बदरिकाश्रमवासी नरनारायणयोरेको नारायणएव ॥

तथाहि । तत्र प्रस्तावनान्ते 'ऊरूद्भवा नरसखस्य मुनेस्सुरस्त्री' इत्यनेनोर्वश्याः नरसखस्य मुनेर्नारायणस्योरूद्भवत्वनिर्देशात् ॥ तस्मि

न्नाटके 'अस्यास्सर्गविधौ' इत्यादिपद्यस्य पूर्ववाक्यञ्चैवं दृश्यते । (' राजा प्रकृतिस्थामूर्वशीं विलोक्यात्मगतम्) स्थानेखलुनारायणमृषिं प्रलोभयन्त्यस्तदूरुसंभवामिमां विलोक्य व्रीडितास्सर्वा अप्सरस इति । अथवा नेयं तपस्विसृष्टिः' इति ॥ उत्तरत्र पुरूरवसं प्रति चित्ररथाख्यगन्धर्वराजवाक्यम् ॥

'पुरा नारायणेनेयमतिसृष्टा मरुत्वते ।
दैत्यहस्तादपाच्छिद्य सुहृदा संप्रति त्वया' ॥

इति । तथाचैतावता पूर्वोत्तरसन्दर्भेणोर्वश्याःस्रष्टा नारायणएव पुराणो मुनिरिति सिद्धावपि तद्विरुद्धं 'ब्रह्मा' इति व्याख्यानम् इति ॥

इदञ्च तृतीयम् । अस्य चन्द्रिकाकारस्यशिष्येण नागेशभट्टेनापि रसगङ्गाधरव्याख्याने मर्मप्रकाशाख्ये 'अस्यास्सर्गविधौ' इति पद्यं 'मालतीमाधवे मालतीवर्णनमिदम् । अस्याः मालत्याः' इति व्याख्यातम् । कालिदासविरचितत्वेन सर्वत्रप्रसिद्धे विक्रमोर्वशीय नाटके पूर्वोपदर्शितपूर्वोत्तरप्रकरणमध्यघटकत्वेन सर्वैर्दृश्यमानस्यास्य पद्यस्य मालतीमाधवे अदृश्यमानस्यच कथं मालतीवर्णनपरत्वम्? कथं वा 'पुराणोमुनिः' इत्यस्य 'ब्रह्मा' इति विवरणम्? इत्थञ्च नागेशभट्टवैद्यनाथाभ्यामुभाभ्यामपि विक्रमोर्वशीयग्रन्थोनावलोकितइत्येतत् स्फुटमेव । तथा मालतीमाधवमपि ॥

रसगङ्गाधरे 'अस्यास्सर्गे' त्यादिपद्यग्रहणस्य का प्रसक्तिरितिचेत् चित्रमीमांसायामप्पदीक्षितकृतायां ससन्देहालङ्कारोदाहरणतयोपात्तत्वात्तत्र तद्व्याख्याने दोषोद्भावनाय ॥

इदन्तु चतुर्थम् । काव्यप्रदीपोदाहरणचन्द्रिकायां मोहलक्षण प्रस्तावे मोहपदंमूर्छार्थकंस्वयमेवव्याख्यायोदाहृत्यच मूर्छार्थकमोहशब्द घटितं 'तीव्राभिषङ्गे' त्यादिकुमारसंभवपद्यमत्रपरं पद्ये 'मोहेने'

त्यस्य प्रकरणोचितंमूर्छार्थकत्वंपरित्यज्य प्रकरणानुचितमानार्थकत्वेन विवरणम् । इति ॥ मानोनाम स्त्रीणामीर्ष्याप्रणयादिकृतो नायकविषयकः कोपः । तदुक्तं दशरूपके

'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये ।
श्रुतेवा नुमिते दृष्टे ईर्ष्याकोपस्सउच्यते' इति ॥

साहित्यदर्पणेच

'मानः कोपस्सतुद्वेधाप्रणयेर्ष्यासमुद्भवः ।
द्वयोः प्रणयमानस्स्यात्प्रमोदे सुमहत्यपि ।
प्रेम्णः कुटिलगामित्वात्कोपोयः कारणं विना ॥'

इति ॥ कोशश्च 'मानश्चित्तसमुन्नति' रिति । निष्पत्तिश्च 'मनज्ञाने' इति धातोर्घञि । प्रयोगश्च समाध्यलङ्कारोदाहरणे

'मानमस्या निराकर्तु पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥'

इति ॥ तथा वक्रोक्त्युदाहरणे 'मुञ्चमानं, दिनं प्राप्तं नेह नन्दी हरान्तिके' इत्यादिच ॥ एवञ्चसति 'आविर्भूते' इत्यादिपद्यस्य पूर्वोत्तरप्रकरणाभ्यामूर्वश्याः नायके प्रणयकोपोवा ईर्ष्याकृतोवा कोपश्शक्यते किंवक्तुम् ?

इदन्तुपञ्चमम् 'वरतनुः' इतिपदस्य 'ऊर्वशी' इति विवरणाकरणमिति, कोवा विशेषज्ञो व्याख्याता सामान्यशब्दं विशेषशब्देन न विवृणुयात् ॥ एवमादिकारणबलाच्चन्द्रिकाकारस्य विक्रमोर्वशीयानवलोकने सिद्धे मूर्छाप्रकरणाज्ञानं सिद्धम् । तेनच पद्यस्थस्य 'मोहेने' तिपदस्य 'मानावेशेने' ति व्याख्या प्रमादकृतैवेतिच सिद्धम् ।

मोहपदस्य पूर्वोपदर्शितनिष्पत्त्या, कोशात्, कालिदासस्यैव समानप्रकरणे प्रयोगात्, तद्व्याख्यातृमल्लिनाथसूरिवचनात्, आलङ्का-

रिकोक्तलक्षणेभ्यः, विक्रमोर्वशीयप्रकरणाच्च मूर्छार्थकत्वे सिद्धे, कोपार्थकेन ' मानावेशेन इति पदेन विवरणस्यविरुद्धत्वात्,

' मनुअववोधने ' इति धातोर्घञिनिष्पन्नस्य, ' मानश्चित्तसमुन्नतिः ' इति कोशसिद्धस्य, पूर्वोक्ताऽलङ्कारिकलक्षणलक्षितस्य, पूर्वोक्तप्रयोगसिद्धस्यच मानस्योद्रिक्तचित्तवृत्तिरूपत्वान्मोहस्यच बाह्याभ्यन्तरेन्द्रियजन्यज्ञानाभाववदवस्थारूपत्वाच्च तयोःपर्यायत्वासंभवादिति ॥

एतेन मैसूरुश्रीमन्महाराजसंस्कृतमहापाठशालाप्रवर्तमान त्रैमासिकपत्रिकायां १९३८ तमक्रिस्ताब्दे १४ तमसंपुटे २-३ सश्चिकान्ते ' वादभूमिविमर्शः ' ' कुवलयानन्दचन्द्रिकामण्डनम् ' इति नाम्ना निर्दिष्टोऽन्येषां लेखो निरस्तः । सच लेखस्सकलशास्त्रतत्त्वज्ञैर्विचारपरैस्सहृदयैरेव सूक्ष्मेक्षिकयेक्षणीयः । मदुक्तदोषपरिहारः कथन्तेन भवतीति निर्णयश्च । किञ्च विक्रमोर्वशीयप्रकरणानुगुणः कोवाऽवस्थाविशेषऊर्वश्यास्तेन सिद्धान्तित इति निर्णयन्तु विपश्चितः । सचलेखोन्यत्र प्रतिवाक्यंखण्डितः अस्माभिः ॥

॥ इति विनोक्तिविचारः ॥



विषयः (४४) समासोक्तिविचारः

कुवलयानन्दे ' सारूप्यादपि समासोक्तिर्दृश्यते यथा

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशश्शैलानान्तदिदमितिबुद्धिं द्रढयति ॥

अत्र वनवर्णने प्रस्तुते तत्सारूप्यात्कुटुम्बिषु धनसन्तानादिसमृद्ध्यसमृद्धिविपर्यासं प्राप्तस्य तत्समाश्रयस्य ग्रामनगरादेर्वृत्तान्तः प्रतीयते ' इत्युक्तमप्पदीक्षितेन ।

तत्र दोषं प्रकटयति रसगङ्गाधरकारो जगन्नाथः ॥ तस्यायमाशयः । ' परोक्तिर्भेदकैःश्लिष्टैः ' इति काव्यप्रकाशे मम्मटभट्टः श्लिष्ट विशेषणैरप्रस्तुतस्यगम्यत्वे समासोक्तिमाह । रुय्यकस्तु सर्वस्वे ' विशेषणानां साम्यादप्रस्तुतस्य गम्यत्वे ' तामाह । विशेषणानां साम्यञ्च श्लिष्टत्वेन, साधारण्येन, औपम्यगर्भत्वेनच भवतीतिच ॥ विद्यानाथोपि

' विशेषणानां साम्येन यत्र प्रस्तुतवर्तिनाम् ।
अप्रस्तुतस्य गम्यत्वे '

इति तमेवानुससार । इत्थञ्च विशेषणसाम्यमेव समासोक्तिवीजमाहुस्सर्वे प्राञ्चः । ' पुरायत्रे ' ति प्रकृतपद्येतु वनविशेषणानि नश्लिष्टानि एकानुपूर्व्या अनेकार्थप्रतिपादकत्वाभावात् । नापि साधारणानि, वन नगरोभयवृत्तित्वाभावात् । नापिसादृश्यगर्भाणि,

' दन्तप्रभा पुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशालिबृन्देन सुवेषा हरिणेक्षणा ॥ '

इत्यत्र हरिणेक्षणाविशेषणेषु दन्तप्रभापुष्पयोः पाणिपल्लवयोः केशपाशालिबृन्दयोश्चोपमानोपमेययोर्निर्देशाद्यथा सादृश्यगर्भत्वं तथा प्रकृतवन विशेषणेषु सादृश्यगन्धस्याप्यभावात् । एवञ्च प्राचीनलक्षणविरोधः ।

ननु प्राचीनलक्षणविरोधेऽपि विशेषणसाम्यादिव केवलसादृश्यादपि यत्राप्रस्तुतवृत्तान्तः प्रतीयते तत्रापि समासोक्तिरित्यनुभव बलाल्लक्षणान्तरमपि कल्प्यतइतिचेत् । तदपि नसम्भवति ॥ तथाहि ॥ ' ग्रामनगरादेर्वृत्तान्तःप्रतीयते ' इत्यनन्तरं तत्रैव ' अत्र प्रस्तुताप्रस्तु-

तसाधारणविशेषणबलात् सारूप्यबलाद्वा यदप्रस्तुतवृत्तान्तस्य प्रत्यायनं तत्प्रस्तुते विशेष्ये समारोपार्थम् । सर्वथैव प्रस्तुतानन्वयिनः कविसंरंभगोचरत्वायोगात् । ततश्च समासोक्तौ अप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः, नतु रूपकइव प्रस्तुते अप्रस्तुतरूपसमारोपोस्ति । रूपके अप्रस्तुतचन्द्रवाचकपदवन्नहि समासोक्तावप्रस्तुतजारादिवाचक पदमस्ति' इत्युक्तया समासोक्तौ प्रस्तुतेधर्मिणि अप्रस्तुतधर्मिगतधर्मसमारोपएव चारुताबीजमिति तेनैव कण्ठरवेणोक्तम् । पुरायत्रेति प्रकृतपद्येतु प्रस्तुते वने अप्रस्तुतनगरगतकुटुम्बिधनसन्तानसमृद्ध्यसमृद्धि विपर्यासरूपधर्मसमारोपो नास्तीति कथमत्र समासोक्तिर्भवेत् , स्ववचनविरोधात् । यदि प्राचीनलक्षणविरोधेऽपि, स्वमात्रकल्पितलक्षणाभ्युपगमेऽपि, स्वप्रदर्शितोदाहरणेस्वोक्तलक्षणस्यैवाभावेऽपि, शपथमात्रेण समासोक्तिरङ्गीक्रियते, तर्हि सर्वत्र सर्वालङ्कारप्रसक्तिरिति अव्यवस्थैवालङ्कारिकाणां शरणमापद्येत इति ॥

अत्र चन्द्रिकाकारो वैद्यनाथः प्रतिवक्तिएवम् ' कुवलयानन्दकारस्सर्वमप्यर्थजातमलङ्कारसर्वस्वकारोक्तप्रक्रिययैव अध्यापितइव लिखति, नतु स्वबुद्ध्याकिञ्चिदपि । एवंस्थिते, ' सारूप्यादपिसमासोक्ति र्दृश्यते । यथा पुरायत्र ' इत्यादिना तद्विरुद्धमभिहितवान् । कथं विरोध इतिचेत् सर्वस्वकारेण सादृश्यगर्भविशेषणोपस्थापितसादृश्य मूला समासोक्तिरुक्ता । दीक्षितेनतु केवलसादृश्यमूला समासोक्ति रिति । ' इतिहि जगन्नाथोक्तन्दूषणम् । तच्च न लगति, कुतइतिचेत् , पुरायत्रे ' त्यत्रापि सर्वस्वकारोक्तरीत्या सादृश्यगर्भविशेषणोपस्थापितसादृश्यमूलसमासोक्तेरेव सत्त्वात् । कथं सत्वमितिचेत् , वनं प्रस्तुतम् ग्रामनगरादिरप्रस्तुतः वनेन वाच्येन व्यङ्ग्यस्य ग्रामादेः प्रतीते रनुभवसिद्धत्वात्समासोक्तिः । इत्थञ्च सादृश्यमूला । वननगरयोः किं सादृश्यमितिचेत् समृद्ध्यसमृद्धिविपर्यासवदाश्रयत्वम् , वनं समृद्ध्य-

समृद्धिविपर्यासवतां वृक्षाणामाश्रयः ग्रामस्तु समृद्ध्यसमृद्धिविपर्यासवतां कुटुम्बिनामाश्रयः, इदञ्च सादृश्यं 'घनविरलभावोविपर्यासं यातः' इति वनविशेषणेन ज्ञायतइति विशेषणस्य सादृश्यगर्भत्वम् । इत्थञ्च सादृश्यगर्भविशेषणोपस्थापितसादृश्यमूलत्वं समासोक्तेरुपपन्नम् । एवञ्च 'मूलग्रन्थानवबोधोद्विरोधोत्रा' नास्ति । एवमप्यत्र नगरादेरप्रस्तुतस्य विशेषणसाम्यगम्यत्वं नास्तीत्यव्याप्तिरितिचेत् मैवम् । यदाविशेषणसाम्यगम्यसादृश्यगम्यत्वमप्रस्तुतेऽङ्गीकृतम्, तदा विशेषणसाम्यगम्यत्वमप्यङ्गीकृतमेव, विशेषणसाम्यस्योक्तकोटिप्रविष्टत्वात् । यद्येवंरीत्या सर्वस्वोक्तलक्षणावैलक्षण्यं साध्यते, तर्हि 'सारूप्यादपिसमासोक्तिर्दृश्यते' इत्याद्यारम्भः कुतइतिचेत्, सारूप्यस्यैव कुत्रचित्प्राधान्यम् क्वचिद्विशेषणसाम्यस्यैव प्राधान्यमिति ज्ञापनायेति ॥

अस्मदभिप्रायस्तु चन्द्रिकाकारनिर्वाहे बह्वस्त्यस्वारस्यम्, तथाहि 'एष सादृश्यगर्भविशेषणोपस्थापितसादृश्यमूला समासोक्तिः' इति सर्वस्वकारग्रन्थविरोधे जगन्नाथेनोद्भाविते तद्दूषणस्यालग्नतासम्पादनाय 'पुरायत्रे' त्यत्रापि सादृश्यगर्भविशेषणोपस्थापितसादृश्यमूलत्वमेव साधितं महता प्रयासेन चन्द्रिकाकारेण । तत्तु नसंभवति । सर्वस्वकारेण विशेषणानां सादृश्यगर्भत्वम् 'दन्तप्रभापुष्पचिता' इत्यत्र दन्तप्रभा पुष्पाणीवेति समासेकृते हरिणेक्षणाविशेषणत्वं दन्तप्रभासदृशैः पुष्पैश्चिता इति समासे कृते लताविशेषणत्वं भवतीति समासभेदप्रतिपादकोपमानोपमेयोभयवाचकपदघटितं विशेषणं निविष्टम् । तच्च विशेषणं प्रस्तुतहरिणेक्षणाऽप्रस्तुतलतोभयसाधारणं भवति । प्रकृतोदाहरणेतु प्रस्तुते वने तरूणामेव घनविरलभावविपर्यासः । अयन्तु नाप्रस्तुतग्रामादौ । वनग्रामोभयगतधर्मयोस्समासभेदप्रतिपादकतादृशैकविशेषणघटकत्वमपिनास्ति । इमामेवानुपपत्तिमालोच्य पुनरपि तेनैवेत्थमाशङ्क्य परिहृतम् 'अथात्राप्रस्तुतवृत्तान्तस्य विशेषणसाम्य

गम्यत्वाभावादुक्तलक्षणस्याव्याप्तिरितिचेन्न । विशेषणसाम्यगम्यसादृश्य गम्यत्वेपि विशेषणसाम्यगम्यत्वानपायात् प्राधान्यात्तुपरं सारूप्यस्य गमकत्वोपदर्शनं सारूप्यादितिग्रन्थेन ' इति ॥

एतदप्यनुपपन्नम् । ' दन्तप्रभापुष्पचिता ' इत्याद्युक्तरीत्या विशेषणसाम्यस्यैवाभावात् कुतस्तरां तद्गम्यसादृश्यगम्यत्वम् ? किञ्च वृक्षान्विहाय केवलसमृध्द्यसमृद्धिविपर्यासमादाय वननगरयोस्साम्यंप्रतिपादनीयम् तच्चास्वरसम्, विशेषणकोटौ क्षितिरुहामित्यस्यपरित्यागा योगात् । परित्यागेपि केवलसाम्यगम्यत्वमेवायातमप्रस्तुतस्यग्रामनगरादेः । नतुविशेषणसाम्यगम्यसादृश्यगम्यत्वम् ॥ अपिच–' प्राधान्यात्तु परं सारूप्यस्यगमकत्वोपदर्शनं ' इत्यनुपपन्नम्, प्राधान्याप्राधान्ययोरेव सर्वस्वकारपक्षाद्भेदकत्वात् ।

वयन्त्वेवमुत्पश्यामः । चन्द्रिकाकारोत्र दीक्षितहृदयमविज्ञायैव सर्वस्वकारपक्षैककण्ठ्यनिर्वाहाय वृथाश्रममन्वभवदिति । इदन्तुदीक्षित हृदयम् । काव्यप्रकाशलक्षणे श्लिष्टविशेषणैरन्यार्थबोधनमित्येतत् । सर्वस्वकारलक्षणे, सादृश्यगर्भविशेषणसाम्यगम्यत्वमित्येतच्च केवल सादृश्यगम्यत्वस्याप्युपलक्षकम् । अन्यथा मम्मटोक्तलक्षणरीत्या अप्रस्तुतवृत्तान्तस्यश्लिष्टविशेषणमात्रगम्यत्वे साधारणविशेषणस्थले ' व्यावल्गत्कुचभार ' मित्यादौ समासोक्तिर्नस्यात् । सर्वस्वकारलक्षणोक्तरीत्या श्लिष्टसाधारणसादृश्यगर्भविशेषणमात्रगम्यत्वे केवलसाम्य गम्यस्थले ' पुरायत्रे ' त्यादौ समासोक्तिर्नस्यात् । इष्टापत्तिरितिचेन्न ।

' क्रौञ्चं विहाय पुत्रन्तं पितरञ्च हिमालयम् ।
प्रविश्य जलधिं पक्षौ रक्षताऽनेन किंकृतम् ॥ '

इत्यत्र मैनाके प्रस्तुते, तत्सादृश्याद्बालं पुत्रं वृद्धं पितरञ्च परित्यज्य राजसेनायां स्थित्वा स्वोदरमात्रपूरकस्य अप्रस्तुतपुरुषस्य प्रतीत्या

समासोक्तेस्सर्वानुभवसिद्धत्वात् । अत्रविशेषणानांश्लिष्टत्वं साधारणत्वं सादृश्यगर्भत्वंवा नास्त्येव । किन्तु केवलसादृश्यमेव । अतएव कुवलयानन्दकृता स्वोक्तलक्षणे विशेषणानां श्लिष्टत्वं साधारणत्वमन्यद्वा किमपि न निविष्टम् । किन्तु, ' समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्यचेत् ' इति ययाकयाच विधया प्रस्तुतेनाप्रस्तुतस्य गम्यत्वे समासोक्तिरुक्ता ॥

किंबहुना अन्ततोगत्वा लक्षणे ' प्रस्तुते ' इत्यपिमाभूदेव, कस्यचित्प्रकृतस्यदृष्टान्ततयाकथिते अतएवाप्रस्तुते ' नसंध्यांभजते रविः ' इतिवाक्येश्रुते स्त्रीलिङ्गपुंलिङ्गस्वारस्यान्नायिकानायकवृत्तान्त प्रतीतेस्सर्वसंमतत्वात् ॥

ननु–सर्वप्राचीनलक्षणपरित्यागेन स्वकपोलकल्पितलक्षणाङ्गीकारे सर्वत्रसर्वालङ्कारसंभवेन अव्यवस्थादोषो जगन्नाथेन प्रदर्शित इतिचेन्न ।

अतिप्राचीनो दण्ड्येव काव्यादर्शे द्वितीयपरिच्छेदारम्भे अस्मदादीनामप्यलङ्कारकल्पनेऽधिकारमनुमनुते । तथाहि ।

' काव्यशोभाकरान्धर्मानलङ्कारान्प्रचक्षते ।
तेचाद्यापि विकल्प्यन्ते कस्तान्कार्त्स्न्येन वक्ष्यति ॥
किन्तु बीजं विकल्पानां पूर्वाचार्यैः प्रदर्शितम् ।
तदेव परिसंस्कर्तुमयमस्मत्परिश्रमः ॥ '

इति ॥ अत्र काव्यचमत्कारप्रयोजकीभूतधर्मा अलङ्काराः तेचाद्यापि विकल्प्यन्ते इत्युक्त्या अपिशब्देनोत्तरेषामप्यलङ्कारकल्पनाधिकारस्सूच्यते । परन्तु कल्पनेप्यलङ्काराणामगतार्थता चमत्कारिताचेत्यपेक्षिता ॥

किञ्च लक्ष्यानुसारेण लक्षणकल्पना प्रायश्शास्त्रेषु । तस्मा ' त्पुरायत्रे ' त्यादौ केवलसादृश्यादेव समासोक्तिर्दीक्षितविवक्षिता ।

नच प्राचीनलक्षणविरोधः । तदुक्तलक्षणानां न्यूनतापरिहारेण तत्तात्पर्यप्रदर्शनपरत्वात् ॥ इत्थञ्च चन्द्रिकाकारो दीक्षितहृदयमजानानएव पथश्च्युत इत्यत्र नकश्चित्संशय इति ॥

एतेन मर्मप्रकाशे नागेशभट्टलिखितं परास्तम् । यत्तेनापि चन्द्रिकोक्तपङ्क्तिरेव लिखिता, 'विशेषणसाम्यगम्यसादृश्यगम्यत्वेपि तत्त्वानपायात्' इति । अप्रस्तुतस्य विशेषणसाम्यगम्यत्वेऽपेक्षिते विशेषणसाम्यगम्यसादृश्यगम्यत्वं कोवाऽपेक्षते ? तदपि नसंभवतीतिच पूर्वमेवोक्तम् ॥

वस्तुतस्तु अप्रस्तुतस्य नगरादेर्गम्यत्वं सारूप्यादित्युच्यते दीक्षितेन । सारूप्यञ्च समानधर्मः । सचप्रस्तुताप्रस्तुतगतांस्तरून्कुटुम्बिनश्च विहाय केवलघनविरलभावविपर्यासः । तद्वत्सु तरुषु दृष्टेषु एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमितिरीत्या तद्वन्तः कुटुम्बिनः स्मर्यन्ते । एतदेवाप्रस्तुतवृत्तान्तस्य सारूप्यगम्यत्वम् । नत्वत्रविशेषणसाम्यम् नापितद्गम्यंसादृश्यम् नवच तादृशसादृश्यगम्यत्वमप्रस्तुतस्येति ॥

॥ इति समासोक्तिविचारः ॥



विषयः (४५) परिकराङ्कुरविचारः

'साभिप्राये विशेष्येतु भवेत्परिकराङ्कुरः ।
चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥'

इति परिकराङ्कुरलक्षणमुदाहरणञ्च ॥ अत्र दीक्षितैरन्यदप्युदाहारिपद्यम्

'फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः ।
द्रष्टुमाखण्डलश्शक्तः काहमेष क ते गुणाः ॥'

इति । लक्षणसमन्वयप्रकारश्चैवं वर्णितः । 'फणीन्द्र' इत्यादिविशेष्यपदानि सहस्रमुखत्वाद्यभिप्रायगर्भाणि' इति ॥ इदन्तुपद्यं चन्द्रिकाकारेणैवं व्याख्यातम् ॥ 'फणींद्र इति ॥ राजानंप्रति कवेरुक्तिः । तव गुणान्वक्तुं फणीन्द्रः शेषः समर्थ इत्यध्याहार्यम् एवमग्रेपि । हैहयाधिपः कार्तवीर्यः । आखण्डलः इन्द्रः उभयत्र गुणानित्यनुषज्यते । एषः मर्त्यधर्मः, अहंक्व, तेगुणाःक्व ? इतिक्वशब्दौ महदन्तरं सूचयतः । सहस्रमुखत्वादीत्यादिना सहस्रबाहुत्व सहस्रनयनन्वयोस्संग्रहः अत्रानेकेषां विशेष्यपदानां तत्तदभिप्रायगर्भत्वं विशेष ।' इति ॥

अत्र 'समर्थइत्यध्याहार्यम् । एवमग्रेपि' इति किमर्थोयं लेख इतितु नजानीमः । अध्याहारोनामप्रकरणस्थवाक्येष्वविद्यमानस्य पदस्योपादानम् । 'द्रष्टुमाखण्डलश्शक्तः' इति तृतीयपादस्थितेन 'शक्तः' इतिपदेनान्वयसम्भवेन निराकांक्षत्वा 'त्समर्थ' इतिपदाध्याहारस्यानावश्यकत्वात् । किञ्च—'एवमग्रेपि' इत्यनेन 'तेगुणान्वक्तुं फणीन्द्रः' इत्यत्र यथा 'समर्थ' इतिपदमध्याहृतम्, तथा 'लिखितुं हैहयाधिपः' इत्यत्रापि 'समर्थ' इतिपदमध्याहार्यम् । एवं 'द्रष्टुमाखण्डलः, इत्यत्रापि 'समर्थ' इत्यध्याहार्यम् इत्यर्थो लभ्यते । एवंसति पादत्रयेपि 'समर्थ' इतिपदाध्याहारे तृतीयपादस्थस्य 'शक्तः' इतिपदस्य चतुर्थपादेप्यन्वयासंभवादजागलकुचायमानत्वमेव ॥ अपिच—'हैहयाधिपः कार्तवीर्यः आखण्डलः इन्द्रः उभयत्र गुणानित्यनुषज्यते' इति चन्द्रिकोक्तया 'फणीन्द्रस्तेगुणान्वक्तुम्' इति प्रथमपादस्थस्य 'गुणान्' इतिपदस्य 'लिखितुंहैहयाधिपः' 'द्रष्टुमाखण्डल' इति द्वितीयतृतीयपादयोरपि 'तेगुणान्—लिखितुम् तेगुणान्द्रष्टुम्' इत्यनुषङ्गः कार्य इति प्रतिपादितं भवति । अनुषङ्गोनाम प्रकरणस्थवाक्यान्तरगतस्य पदस्य प्रकृतवाक्येप्युपादानम् ।

इत्थञ्च यथा प्रथमपादस्थस्य 'गुणान्' इतिपदस्य द्वितीय-तृतीयपादयोरनुषङ्गस्तथा तृतीयपादस्थस्य 'शक्तः' इतिपदस्य प्रथमद्वितीयपादयोरप्यनुषङ्गः इत्येव वक्तुमुचितम् । नतु 'समर्थइत्यध्याहार्यम् एवमग्रेपी' ति । अनुषङ्गापेक्षयाऽध्याहारस्य प्रबलदोषत्वाच्छक्तपदवैयर्थ्यापत्तेश्चेति ॥

॥ इति परिकराङ्कुरविचारः ॥



विषयः (४६) अप्रस्तुतप्रशंसाविचारः (क)

कुवलयानन्दकृता अप्रस्तुतप्रशंसालङ्कारस्य लक्षणमुक्त्वा तस्य पञ्चधा विभागं प्रदर्श्य तत्संमतिरूपा काव्यप्रकाशकारिकेयं गृहीता,

'कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।
तदन्यस्य वच स्तुल्ये तुल्यस्येतिच पञ्चधा' ॥

इति ॥ चन्द्रिकाकारेणैवमियंव्याख्याता, 'कार्ये इति । कार्ये प्रस्तुते सति तदन्यस्य कारणस्य, वचः प्रतिपादनम् । निमित्ते कारणे प्रस्तुतेसति तदन्यस्य कार्यस्य एवंसामान्ये प्रस्तुते सति तदन्यस्य विशेषस्य विशेषे प्रस्तुते सति तदन्यस्य सामान्यस्य तुल्ये प्रस्तुते तदन्यस्य तत्सदृशस्येत्यर्थः अन्यशब्दस्यप्रतिसम्बन्धिपरत्वात्' इति ॥ अत्र अन्ते 'तुल्ये प्रस्तुते तदन्यस्य तत्सदृशस्येत्यर्थः, अन्यशब्दस्य प्रतिसम्बन्धिपरत्वात्' इति व्याख्यानमनुपपन्नम् । कारिकायां 'तुल्ये तुल्यस्य' इत्येव वर्तते। चन्द्रिकाकारस्तु 'तुल्यस्य' इतिपदं विहाय, 'तदन्यस्य' इति[illegible]म् कृत्वा 'तत्सदृशस्येत्यर्थः' इति व्याचख्यौ तथाव्याख्याने हेतुमप्यनन्तरमेवाह, 'अन्यशब्दस्यप्रतिसम्बन्धिपरत्वात्' इति ॥ तथाच—'तुल्यस्ये' ति स्थितस्य परित्यागः, अननु-

षङ्गेणैव निर्वाहे संभवत्यनुषङ्गरूपवाक्यदोषः । अनुषङ्गे कृतेपि अन्यपदस्य प्रतिसम्बन्धिपरत्वकल्पनद्वारा सदृशपरत्वकल्पनया लक्षणापरम्परा । 'तुल्यस्य' इतिपदस्यनैरर्थक्यञ्चेति दोषपरम्परापातात् ॥



विषयः (४७) अप्रस्तुतप्रशंसा (ख)

कुवलयानन्दकृता सारूप्यनिबन्धनाप्रस्तुतप्रशंसाया उदाहरणमिदं प्रदर्शितम् ॥

'आबद्धकृत्रिमसटाजटिलांसभित्ति
रारोपितो मृगपतेः पदवीं यदि श्वा ।
मत्तेभकुम्भतटपाटनलम्पटस्य
नादङ्करिष्यति कथं हरिणाधिपस्य ॥'

इति ॥ लक्षणसमन्वयप्रकारश्चैवंदर्शितः । 'अत्र शुनकस्य निन्दा, निन्दनीयत्वेन प्रस्तुते तत्सरूपे कृत्रिमवेषव्यवहारादिमात्रेण विद्वत्तामभिनयति वैधेये पर्यवस्यति' इति ॥ सर्वमेतत् स्पष्टार्थकम् ॥ चन्द्रिकाकारस्तु पद्यमेतदेवं व्याचष्टे । 'आबद्धेति । आबद्धाः याः कृत्रिमास्सटाः स्कन्धलोमानि, तैर्जटिला व्याप्ता अंसभित्तिः स्कन्धदेशः यस्य, एवंभूतः, श्वा, शुनकः, मृगपतेः, सिंहस्य, पदवीं—स्थानम्, यद्यारोपितः तादृशसटायुक्तत्वेन सिंहसाम्यं प्रापित इत्यर्थः । तथापि मत्तानामिभानां गजानां कुम्भतटस्य पाटने विदारणे लम्पटस्य व्यसनिनः हरिणानामधिपस्य नादम् सिंहनादम् कथङ्करिष्यतीत्यर्थः' इति॥

अत्र पद्यस्थस्य पदवीशब्दस्य वाच्योर्थोमार्गः, 'मार्गोध्वपन्थानःपदवीसृतिः' इति कोशात् स्थानं लक्षयति । तच्च स्थानम् गिरिसानु गिरिगुहाद्वारादि । तत्रैव सिंहस्थितेः प्रसिद्धत्वात् । तत्स्थानस्थापितस्यैव कृत्रिमसटापटलस्य शुनकस्य सिंहत्वभ्रमजनकत्वात् नतु वी-

थ्याम् गृहद्वारेवा स्थापितस्य । एतादृशार्थश्च 'पदवीम्' इत्यस्य 'स्थानम्' इति व्याख्यानेनैवलब्धः । तावताप्यतृप्यंश्चन्द्रिकाकारः पुनरपि तदेव वाक्यं व्यवृणोत् 'तादृशसटायुक्तत्वेनसिंहसाम्यंप्रापितइत्यर्थः' इति ॥

तत्तु नहृद्यम् । अत्र 'तादृशे' तिपदेन 'आवद्धकृत्रिम' इति सटाविशेषणग्रहणात् 'तादृशसटायुक्तत्वेन सिंहसाम्यं प्रापितः' इत्यर्थस्य आवद्धकृत्रिमसटाजटिलांसाभित्तिः' इति विशेषणेनैव लब्धत्वात्पौनरुक्त्यापत्तेः ॥

नापि पौनरुक्त्यमात्रम् विरोधश्च । नहिकृत्रिमसटाजटिलतामात्रेण वीध्यादिस्थितःश्वा सिंहभ्रमं जनयितुमीष्टे, किन्तु सिंहस्थानस्थापितएव, एतादृशश्चार्थः पदवीमितिपदस्य स्थानमिति स्वकृतविवरणेनैव लब्धः, सच 'तादृशसटायुक्तत्वेन सिंहसाम्यंप्रापितः' इति पुनः स्थानपदविवरणेन भ्रंशितः इति । इत्थञ्चैवं व्याख्याने अपेक्षितार्थाप्रतिपादनान्न्यूनता पौनरुक्त्यञ्चेति दोषद्वयमापततीति 'पदवीं स्थानं गिरिगुहाद्वारादिकम् इति व्याख्येयम् ॥



विषयः (४८) अप्रस्तुतप्रशंसा (ग)

विशेषे प्रस्तुते सामान्यस्याप्रस्तुतस्य प्रशंसारूपाप्रस्तुतप्रशंसाया उदाहरणतया पद्यमिदमुपात्तं कुवलयानन्दे ॥

'विधाय वैरं सामर्षे नरोऽरौ य उदासते ।
प्रक्षिप्योदर्चिषं कक्षे शेरतेतेऽभिमारुतम्' ॥

इति ॥ अत्रार्थस्समन्वयश्च स्पष्टएव । चन्द्रिकायान्तु 'कक्षे' इत्यस्य 'तृणे' इति यद्विवरणं कृतं तत्तु नहृद्यम् । यद्यपि 'कक्षस्तु गुल्मे

दोर्मूले पापे जीर्णवने तृणे' इति वैजयन्तीकोशात्तृणार्थकत्वं संभवति। तथापि 'तृणे' इत्येकवचनान्तत्वादेकस्मिंस्तृणे वह्निं प्रक्षिप्य तदभिमुखशयनेपि न किञ्चिदप्यनिष्टं संभवति। जात्येकवचनत्वाङ्गीकारेपि समभूमौ प्ररूढेषु तृणेषु शुष्केषु वह्निप्रक्षेपेपि नतावती हानिस्संभवति। अतस्तृणपदस्य तृणराशावेव लक्षणाऽङ्गीकार्या ॥

एतदपेक्षया 'गुल्मे' इत्यर्थस्साधीयान्। गुल्मोनाम शुष्कानेकलतापुञ्जः। तत्र वह्निं प्रक्षिप्य तदभिमुखशयने दाहएव, अतएव मल्लिनाथसूरिव्याख्यानम् 'कक्षे गुल्मे' इति। अथवा, उक्तकोशादेव जीर्णवने इत्यर्थः। एवं लक्षणादिदोषंविना निर्वाहे संभवति सति तृणार्थकत्वं नतावतीं मुदमावहति सहृदयानामिति ॥

॥ इत्यप्रस्तुतप्रशंसाविचारः ॥



विषयः (४९) अथपर्यायोक्तविचारः

अस्मिन्नलङ्कारे दीक्षितजगन्नाथयोर्विवादविषयोऽयम्।

'चक्राभिघातप्रसभाज्ञयैव
　　चकार यो राहुवधूजनस्य।
आलिङ्गनोद्दामविलासवन्ध्यं
　　रतोत्सवं चुम्बनमात्रशेषम् ॥'

इतिपद्ये उद्भटानन्दवर्धनाभिनवगुप्तमम्मटरुय्यकदीक्षितजगन्नाथादीनां सर्वेषामालङ्कारिकाणामभिमतं पर्यायोक्तमलङ्कार इति। तल्लक्षणमपि व्यंग्यस्य भंग्यन्तरेण चारुतरेण शब्दशक्त्या प्रतिपादनमितिच।

अत्राप्पदीक्षितो वक्ति, अस्मिन्पद्ये भगवति राहुस्त्रीसुरतकर्मकालिङ्गनरहितचुम्बनमात्रशेषकर्तृत्वे शब्दवाच्ये वासुदेवत्वमेव व्यंग्यम्।

अभिनवगुप्तालंकारसर्वस्वकारादयस्तु प्राचीनाः लक्षणमुदाहरणञ्च क्लिष्टतयाह्ययोजयन् । प्राचीनोक्तरीत्या राहुशिरश्छेदादीनां व्यंग्यत्वे 'प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः' इत्यस्मत्कल्पितः प्रस्तुताङ्कुरएव । वाच्यव्यंग्ययोरुभयोः प्रस्तुतत्वात् । वासुदेवत्वस्यैव व्यंग्यत्वे पर्यायोक्तम् । प्राचीनास्तु वृथाश्रममन्वभवन्निति ॥

अत्र जगन्नाथः प्रतिवक्ति । वासुदेवत्वं व्यंग्यं नभवति । 'चकारयः' इतियच्छब्दवाच्यस्य वासुदेवस्य विशेषणतया वासुदेवत्वस्यभानात् । नहि शब्दशक्त्युपस्थितस्य कथञ्चिदपि व्यंग्यत्वमिष्टम् । अतएवप्राचीनानां क्लिष्टगत्यालम्बनम् । तथाहि अभिनवगुप्तपादाचार्येण ध्वन्यालोकलोचने उद्भटोक्तं 'पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते' इति लक्षणं प्रदर्श्य तदर्थश्चैवं दर्शितः । लक्षणवाक्ये 'अभिधीयते' इत्युक्तया अन्येनेत्यस्य वाच्यादन्येनेत्यर्थः अन्यश्चप्रकारः वाच्यादन्योव्यंग्यएव । व्यंग्येनेत्यत्र उपलक्षणेतृतीया, तथाच व्यंग्योपलक्षितंसद्यदभिधीयते तत्पर्यायोक्तमिति लक्षणं पर्यवसितम् । व्यंग्यस्योपलक्षणतया प्राधान्याभावाद्वाच्यस्यैव तदपेक्षया चमत्कारित्वेनच प्राधान्यात् ध्वनितोवैलक्षण्यंपर्यायोक्तस्य । इति ॥ किमत्र व्यंग्यमितिचेत् तदपि तेनैव तत्रैवोक्तम् 'वासुदेवप्रतापोह्यत्र विवक्षितः सचात्र चारुत्वहेतुतया नचकास्ति अपितु पर्यायोक्तमेव' इति ॥

इत्थञ्चदीक्षितोक्तं वासुदेवत्वस्यैव व्यंग्यत्वमभिनवगुप्तपर्यन्तानां प्राचीनानामनभिमतमेवेति स्पष्टम् । वासुदेवत्वन्तु 'चकारयः' इति यच्छब्दवाच्यत्वात्प्रकरणलब्धत्वादसुन्दरत्वाच्च नव्यंग्यं भवितुमर्हतीति सिद्धम् । अतएव तस्य क्लिष्टगत्यालम्बनम् ॥ अलङ्कारसर्वस्वकारोपि 'गम्यस्यापि भंग्यन्तरेणाभिधानं पर्यायोक्तम्' इति लक्षणमुक्त्वा तत एवमाशंक्य समादधे 'यद्गम्यं तस्यैवाभिधानायोगात्कार्यादिद्वारेणै-

वाभिधानम् ' इति । तथाच 'चक्राभिघाते' त्याद्युदाहरणे वाच्यं राहुस्त्रीसुरतस्यालिङ्गनराहित्यकरणं चुम्बनमात्रशेषीकरणम्, तस्यचकारणं राहुशिरश्छेदः । सएवव्यंग्यः नतु दीक्षितोक्तं वासुदेवत्वम्, तस्य 'यः' इति यच्छब्दवाच्यत्वात्प्रकरणलब्धत्वाच्च ॥

एवं मम्मटपक्षेपि यच्छब्दवाच्ये प्रकरणलब्धेच भगवति राहुस्त्रीसुरतचुम्बनमात्रशेषकर्तृत्वे शब्दवाच्ये व्यंग्यं राहुशिरश्छेदकर्तृत्वमेव नतु दीक्षितोक्तं वासुदेवत्वमुक्तहेतोरेव । एवञ्च सर्वप्राचीनाभिमतिविरुद्धमभिहितन्दीक्षितेनेति ॥

अत्र चन्द्रिकाकारो जगन्नाथोक्तं दूषयित्वा दीक्षितोक्तं साधयति । तस्येयमानुपूर्वी । 'यत्तु भगवद्रूपेणावगमनं विशेषणमर्यादालभ्यत्वेनासुन्दरं पर्यायोक्तस्याविषयः इति, तदविचारितरमणीयम् । नहि पर्यायोक्ते व्यंग्यसौन्दर्यकृतोविच्छित्तिविशेषः । किन्तु भंग्यन्तराभिधानकृतएव, व्यंग्यन्तु भंग्यन्तराभिधानतोऽसुन्दरमेव प्रायशो दृश्यते । इहागन्तव्यमिति विवक्षिते व्यंग्ये 'अयंदेशोऽलङ्करणीयः' 'सफलतामुपनेतव्यः' इत्यादौ । अतस्तदसुन्दरत्वोद्भावनमकिञ्चित्करमेव । अलङ्कारसर्वस्वकारग्रन्थविरोधोद्भावनन्तु तच्छिक्षाकारिणं प्रति नशोभते । उपजीव्यत्वोद्भावनमपि ग्रन्थस्याकिञ्चित्करमेव । युक्तिविरोध इति परोत्कर्षासहिष्णुत्वमात्रमुद्भावयितुरवगमयतीत्यलं विस्तरेण' इति ॥

अस्यायमभिप्रायः—पर्यायोक्ते व्यंग्यापेक्षया वाच्यस्यैव चारुत्वं सर्वसंमतम् । प्रकृते वाच्यभूतराहुवधूसुरतचुम्बनमात्रशेषकर्तृत्वस्यैव व्यंग्यभूतवासुदेवत्वापेक्षया चारुत्वमिष्टमेव । तथाच वासुदेवत्वमसुन्दरमेव । वासुदेवत्वस्यैवसुन्दरत्वे ध्वनित्वमेवस्यात् नतुपर्यायोक्तत्वम् ॥ किञ्च—अलङ्कारसर्वस्वखण्डनप्रवृत्तस्य दीक्षितग्रन्थस्य सर्व-

स्वग्रन्थविरोधप्रदर्शनमसमञ्जसमेव । अपिच–सर्वस्वग्रन्थस्य दीक्षितोपजीव्यत्वकथनमपि विडम्बनायैव, किन्दीक्षितेन कुवलयानन्दारम्भे चित्रमीमांसारम्भेवा 'सर्वस्वग्रन्थविरुद्धं नकिञ्चिन्मयाभिधीयते' इति प्रतिज्ञातम्? किन्तु स्वाभिमतांशोऽनुमन्यते, विरुद्धांशः खण्ड्यते अतो नेमानि दूषणानीति ॥

अत्रायमस्मदभिसन्धिः । चन्द्रिकाकारोक्तं सर्वमुपपन्नम् । किन्त्वेकं विषयमपिदधे सः । 'वासुदेवत्वं व्यंग्यं नभवति सर्वप्राचीनानभिमतत्वात्' इति जगन्नाथेन दोषोद्भावने कृते तस्य व्यंग्यत्वमप्रसाध्यैव असुंदरत्वमात्रमभ्युपगम्येष्टापत्तिं प्रकटीचकार, अतएवैतन्मार्गानुयायी नागेशोपि मर्मप्रकाशे 'नासौ काव्यमार्गे गण्यत इति राजाज्ञामात्रमेतत्' इत्यलिखत् ॥

अत्रोत्तरम् । न राजाज्ञामात्रम् अपितु प्राचीनसर्वालङ्कारनिबन्धनकाराणामाज्ञा । तद्विरुद्धमभिहितन्त्वयेति । नागेशोक्तिरप्याग्रहकृतैव अन्यथा प्राचीना अपि वासुदेवत्वमेव व्यंग्यं ब्रूयुः नत्वन्यदन्यत् ॥ किञ्च 'नमो राहुशिरश्छेदकारिणे' इत्येतावन्मात्रे काव्ये नकश्चिदलङ्कार इति सर्वः प्रत्येति । वासुदेवत्वस्य व्यंग्यतामाश्रित्यात्र पर्यायोक्तं स्यात् । अपिच–'राहुस्त्रीकुचनैष्फल्यकारिणेहरयेनमः' अत्र हरित्वेन हरेश्शब्दवाच्यत्वेपि राहुशिरश्छेदकारित्वरूपं व्यंग्यमादाय पर्यायोक्तत्वं सर्वसंमतम् । तच्चनस्यात् । हरित्वस्यशब्दवाच्यत्वात् । अन्यच्च–किमत्र नारायणत्वं व्यंग्यम् अथवा वासुदेवत्वम् उतविष्णुत्वम् आहोस्वित्कृष्णत्वमित्यादीनांप्राप्तौ विनिगमकाभावात्सर्वेषां व्यंग्यत्वमित्यव्यवस्था स्यात् । नकस्यचिद्वास्यात् । कृ[?]तानांविनिगमनाविरहे अतिरिक्तस्यैव जागरूकत्वात्प्राचीनोक्तानां राहुशिरश्छेदादीनामेवव्यंग्यत्वं सिद्ध्येदपि ॥ अपरञ्च–वासुदेवत्वादीनां वासुदेवादिपदशक्यतावच्छेदकरूपत्वाच्छक्यतावच्छेदकस्यैव व्यंग्यत्वं कोवाऽभ्युपैतु शास्त्रज्ञः?

नहि लक्षणामूलध्वनिस्थले ' गङ्गायाङ्घोषः ' इत्यत्र लक्षणाफलभूतशैत्यपावनत्वादीनां व्यंग्यत्वं विहाय प्रवाहत्वस्यैव व्यंग्यत्वं कश्चिदङ्गीकरोति ॥

एवंस्थिते ' राजाज्ञामात्रमेतत् ' इतियुक्तमुक्तं केवलवैयाकरणेन नागेशेन । यथोक्तम् कविकण्ठाभरणे क्षेमेन्द्रेण,

' कुर्वीत साहित्यविदस्सकाशे श्रुतार्जनं काव्यसमुद्भवाय ।
नतार्किकं केवलशाब्दिकंवा कुर्याद्गुरुं सूक्तिविकासविघ्नम् ॥
यस्तु प्रकृत्या अश्मसमानएव कष्टेनवा व्याकरणेन नष्टः ।
तर्केण दग्धोऽनलधूमिनावा प्यविद्धकर्णस्सुकविप्रबन्धैः ॥
नतस्य वक्तृत्वसमुद्भवस्स्याच्छिक्षाविशेषैरपि सुप्रयुक्तैः ।
न गर्दभो गायति शिक्षितोपि सन्दर्शितं पश्यति नार्कमन्धः ॥ '

इति ॥ तस्माद्वासुदेवत्वं व्यंग्यमितिपक्षस्तु नसाधीयानेवेति ॥

॥ इति पर्यायोक्तविचारः ॥



विषयः (५०) अथव्याजस्तुतिविचारः

व्याजस्तुत्यलङ्कारे मुखतस्स्तुत्या निन्दाया गम्यत्वस्योदाहृतमिदङ्कुवलयानन्दकृता ।

' अर्धं दानववैरिणा गिरिजयाप्यर्धं हरस्याहृतम्
देवेत्थञ्जगतीतले पुरहराभावे समुन्मीलति ।
गङ्गा सागर मम्बरं शशिकला नागाधिपः क्ष्मातलम्
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां माञ्च भिक्षाटनम् ॥ '

इति ॥ लक्षणसमन्वयप्रकारश्चैवं कथितः, ' द्वितीयोदाहरणे सर्वज्ञ-

स्सर्वेश्वरोसीति राज्ञस्स्तुत्या व्याजरूपया मदीयवैदुष्यादि दारिद्र्यादि जानन्नपि बहुप्रदानेन रक्षितुं शक्तोपि मह्यं किमपि नददासीति निन्दाव्यज्यते ' इति ॥

एतच्च रसगङ्गाधरकारः प्रतिवक्ति । ' राजवर्णनप्रस्तावे राजगताज्ञत्व पामरत्वयोरविवक्षितत्वादतएव सर्वज्ञोपि समर्थोपि मांनरक्षितवानसीत्युपालम्भरूपापि निन्दा नात्रविवक्षिता । सर्वज्ञस्य समर्थस्य तव दरिद्रोहं रक्षितुं योग्यइति स्वविज्ञापनाया एव प्रत्युत विवक्षितत्वात् ' इति ॥

एतत्तु निराकरोति चन्द्रिकाकारः । ' नचात्र राजवर्णनप्रस्तावे कथं स्तुतेर्व्याजरूपत्वमितिवाच्यम् । स्तुतिपर्यवसानविवक्षायां स्वकीयभिक्षाटनोद्घाटनस्यासङ्गतत्वेन स्तुतेरुक्तनिन्दारूपोपालंभपर्यवसानस्यानुभवसिद्धस्याविरुद्धत्वात् ' इति ॥

अत्रेदमस्मदीयं हृदयम् । एकस्मिन् काव्ये श्रुते प्रकरणवक्तृबोद्धव्यादिपरिज्ञानाभावे तदर्थो नज्ञायत इति सर्वसहृदयसाक्षिकमेतत् । इदन्तुपद्यं राज्ञःप्रथमदर्शने कविना स्वविद्यादारिद्र्यादिविज्ञापनया द्रव्यादिप्रार्थनापरमिति प्रकरणबलाद्यदिनिर्णीतंभवेत्तदा जगन्नाथोक्तमेव साधु ॥

यदि चिरकालोपासितादपि राज्ञः फलङ्किमप्यलब्ध्वा आयत्त्यामपि निराशेनान्यतो गन्तुं व्यवसितेन कविनेदमुक्तमिति प्रकरणं निर्णीयेत, तदा दीक्षितवैद्यनाथनागेशोक्तमेव साधु ॥ प्रकरणन्तु नकेनापि निर्दिष्टम् । किन्तु तत्तद्व्याख्यानकल्प्यम् । यद्यपि प्रकरणद्वयमपि कल्पनीयम् । कल्पनेपि लाघवं जगन्नाथपक्षे । तदितरपक्षे बह्वर्थानाङ्कल्पनीयतया गौरवमिति वैलक्षण्यमिति ॥ यत्तु चन्द्रिकायामुक्तं

'स्तुतिपर्यवसानविवक्षायां स्वकीयभिक्षाटनोद्घाटनस्यासंगतत्वेन' इति। तन्न भिक्षाटनोद्घाटनन्तूभयपक्षानुकूलं नतु स्वस्यैव ॥

॥ इति व्याजस्तुतिविचारः ॥



विषयः (५१) अथाक्षेपः

कुवलयानन्दकृता अलङ्कारसर्वस्वकारोक्तां रीतिमालम्ब्य अपर आक्षेपालङ्कारो लक्षणोदाहरणाभ्यां प्रदर्शितः ।

' निषेधाभासमाक्षेपं बुधाः केचन मन्वते ।
नाहंदूती तनोस्तापस्तस्याः कालानलोपमः ॥

यथावा

' नरेन्द्रमौले न वयं राजसन्देशहारिणः ।
जगत्कुटुम्बिनस्तेद्य नशत्रुः कश्चिदीक्ष्यते ॥ '

इति । लक्षणसमन्वयप्रकारश्चैवं कथितः । ' अत्र सन्देशहारिणामुक्तौ ' नवयं सन्देशहारिणः ' इति निषेधोऽनुपपन्नः संन्धिकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन् सर्वजगतीपालकस्य तव न कश्चिदपि शत्रुभावेन अवलोकनीयः किन्तु सर्वे राजानो भृत्य भावेन संरक्षणीयाइति विशेषमाक्षिपति ' इति ॥

एतद्दूषयति जगन्नाथः । तस्यायमभिप्रायोवर्ण्यते, केषाञ्चिद्राज्ञां सकाशात्केचिद्दूता आगत्य सर्वेभ्यः प्रवलतरं कञ्चिद्राजानं प्रत्येवमूचुः भो राजश्रेष्ठ वयं राज्ञां नदूताः जगत्सर्वं तव कुटुम्बम् । त्वमेकएव कुटुम्वी अस्मदृष्ट्या जगति कश्चिदपि न ते शत्रुः इति पद्यस्य पदार्थः। अत्र दूतेषु दूतत्वनिषेधो वाधितः यथा ' गङ्गायांघोपः ' इत्यत्र

गङ्गापदशक्यार्थे प्रवाहे घोषः, ततश्च गङ्गापदं स्वशक्यार्थप्रवाहसम्बन्धि तीरं यथा लक्षणया बोधयति, तथा बाधितोदूतेदूतत्वनिषेधः दूतगतं समयोचितकैतववक्तृत्वं निषेधति तथाच 'नवयंराजसन्देशहारिणः' इति निषेधेन दूतानां सत्यवादित्वमेवाक्षिप्तंभवति नतूत्तरार्धगतं किमपि । अनेन वक्ष्यमाणार्थे सत्यत्वं सूचितम् । वक्ष्यमाणार्थस्तूत्तरार्धे स्फुटः, 'जगत्कुटुम्बिनः' इत्यनेन त्वंसर्वजगतीपालकः इत्यर्थ आक्षिप्तः । 'नशत्रुः कश्चिदीक्ष्यते' इत्यनेन राजसु शत्रुत्व भावनां त्यज किन्तु 'भृत्यभावनां कुरु' इत्यर्थ आक्षिप्तोभवतीतिच स्पष्टम् । एवंस्थिते दीक्षितस्तु उत्तरार्धाक्षेप्यार्थस्यापि 'नवयन्दूता' इति निषेधमात्राक्षेप्यत्वमूचे । तच्चानुपपन्नम् । पदानां तादृशसामर्थ्याभावात् इति ॥

चन्द्रिकाकारस्तु पूर्वपक्षमिममेवानूद्य एवं समादधे । तस्येयमानुपूर्वी । 'नवयमिति निषेधाभावे केवलादुत्तरार्धात् नोक्तविशेषावगतिस्स्यात् । सन्धिकालोचितकैतववचनत्वेनैव सम्भाव्यमानत्वात् । अपितु तत्कालीनसन्ध्यभिप्रायमात्रावगमः । निषेधेनतु तत्परिहारे युक्त उक्तविशेषावगमः । इत्यनुभवसाक्षिकमेतत् । सत्यवादित्वादिकन्तूक्त विशेषे व्यञ्जनीये द्वारभूतम् नतु तदेव विशेषरूपम् । अचमत्कारित्वात् । अतएव 'नाहन्दूतीत्यत्र वस्तुवादित्वादिर्विशेषोव्यज्यते' इत्यलङ्कारसर्वस्वकारः । वस्तुवादित्वं आदिः द्वारभूतं यस्य तादृशोविशेष इति तदर्थः इति । एतेन 'नाहंदूती' ति पूर्वोदाहरणमपि व्याख्यातम्' इति ॥

अस्यायमभिप्रायः । दूतेषु दूतत्वनिषेधेन दूतानां सत्यवादित्वमुक्तरीत्या आक्षिप्यते । सत्यवादित्वद्वारा 'सर्वजगतीपालकस्यतव नकश्चिदपिशत्रुभावेनावलोकनीयः किन्तु सर्वेपिराजानोभृत्यभावेन संर-

क्षणीयाः ' इत्ययमर्थआक्षिप्यते । दूतेषुदूतत्वनिषेधाभावेतु ' इमेदूता स्स्वस्वामिनां मयासह सन्धिङ्कर्तुं ' जगत्कुटुम्बिन ' इत्यादिमिथ्यास्तुवन्तिमाम् । नमयासन्धिःकर्तव्यः ' इति ज्ञायेत । तच्च दूताभिप्रायविरुद्धम् । तत्परिहार आवश्यकः । ततश्चोक्तनिषेधस्योक्तार्थाक्षेपकत्वमनुभवसिद्धमेवेति दीक्षितोक्तं समीचीनमिति ॥

अत्रेदंविचार्यते । यदि दूतत्वनिषेधमात्रेण दूतानां सत्यवादित्वपूर्वकं ' सर्वजगतीपालकस्य ' इत्याद्यर्थस्याक्षेप्यत्वं स्यात् , तर्हि

' नरेन्द्रमौले नवयं राजसन्देशहारिणः ।
युद्धे तेषां पुरः कोवा शूरंमन्यस्स्थिरोभवेत् ॥ '

इत्यत्रापि त्वदुक्तार्थ आक्षेप्यस्स्यात् उक्तनिषेधस्यैवतादृशार्थाक्षेपकत्वसामर्थ्यस्यभवदुक्तत्वात् । किन्त्वत्रोक्तनिषेधेसत्यपि ' शीघ्रमसत्स्वामिषु शरणागतोभव नोचेन्नभवसि ' इत्यर्थएवोत्तरार्धेनाक्षिप्यते नतु भवदुक्तोर्थः । किन्तु सत्यवादित्वमात्रमेव । तेनच ' वयन्तुत्वयिदययाब्रूमः ' इतितात्पर्यम् । इत्थञ्चोक्तनिषेधस्योक्तार्थाक्षेपकत्वं नास्त्येवेति सिद्धम् ॥

यच्च एतदुपपादकतया सर्वस्वकारवाक्ये ' वस्तुवादित्वादिर्विशेषोव्यज्यते ' इत्यत्र आदिपदस्य द्वारभूतमित्यर्थकल्पनम् , तच्चास्वरसम् निष्प्रयोजनञ्चेतिसिद्धम् । एतेनैवैतच्छिष्यो मर्मप्रकाशकृन्नागेशोपि परास्तः । तेनाप्यस्यैवार्थस्यानूदितत्वादिति ॥

॥ इत्याक्षेपविचारः ॥



विषयः (५२) अथविरोधाभासविचारः

कुवलयानन्देऽस्मिन्नलङ्कारे

'प्रतीपभूपैरिव किन्ततोभिया विरुद्धधर्मैरपि मेत्तृतोज्झिता ।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥'

इति पद्यमुदाहृत्य 'अत्रविरोधसमाधानोत्प्रेक्षाशिरस्को विरोधाभास इति पूर्वस्माद्भेदः' इति लिखितम् ॥

अत्र दोषमुद्भावयति रसगङ्गाधरकारः । तस्येयमानुपूर्वी ॥ 'विरोधप्रतीत्यनन्तरं यत्रार्थान्तरप्रतिपत्त्या विरोधसमाधानं तत्रविरोधाभासइष्यते । यथा । 'रिपु राजि रस भाव भञ्जनो प्यरि पुरा जिर सभा ऽवभञ्जन' इत्यादौ । इहतूत्प्रेक्षया विरोधसमाधानात्मिकया मुखस्थितया विरोधस्योत्थानमेव भग्नमिति कथमनुत्तिष्ठन्नेव विरोधश्चमत्कारमूलमलङ्कारभावं वहेत्' इति ॥

अत्र चन्द्रिकाकार एवं समाधानमाह तस्येयमानुपूर्वी ॥ 'विरोधभानमन्तरेण 'विरुद्धधर्मैरपि' इत्याद्युत्प्रेक्षायाएवानुत्थानेन श्लेषमूलमाभासमानं विरोधमुपजीव्यैव विरोधत्यागोत्प्रेक्षाया अर्थान्तरानुगृहीतायास्तत्समाधानत्वेन पश्चादवस्थितत्वात्तदुक्तमसारम्' इति ॥

अत्र विचारयामः । 'प्रतीपे' त्याद्युक्तपद्ये प्रारंभएव 'प्रतीप भूपैरिवे' त्युपमा दृश्यते । अनन्तरं 'किन्ततोभियाविरुद्धधर्मैरपि मेत्तृतोज्झिता' इत्यनेन, लोके तेजस्तिमिरे इव विरुद्धत्वेन प्रसिद्धावपि धर्मौ तस्मिन्नले तस्मादेव भिया परस्परविरोधं तत्यजतुःकिम्? इत्युत्प्रेक्षा स्पष्टं दृश्यते । नलस्य शत्रवो राजानो नलभिया यथा स्वेषु स्थितं परस्परविरोधमपि तत्यजु स्तथा इत्युपमाया भावः ॥ एवञ्च पूर्वार्धे उत्प्रेक्षाप्रधानं उपमातु तत्पोषकतया तदङ्गमित्यत्र नकोपिविवादः । अत्रोत्प्रेक्षाया बाधकं किमपि नदृश्यते । साधकान्तरमपि नापेक्ष्यते, किमित्युत्प्रेक्षावाचकस्य, विरुद्धधर्मैरिति विषयस्य, विरो-

धत्यागस्यविपयिणः, सामानाधिकरण्यस्यनिमित्तस्यच स्पष्टत्वात् । परन्तु कोधर्मस्स्वविरुद्धेन स्वव्यधिकरणेन धर्मेण सह सामानाधिकरण्यमाप ? इति जिज्ञासा केवलमवशिष्यते । सामान्यतो धर्माणां विरोधत्यागे संभाविते, 'ननिर्विशेषं सामान्य' मितिन्यायेन कयो धर्मयोर्विरोधत्यागः ? सच कथमिति विशेषजिज्ञासायास्सहजत्वात् । इत्थञ्च विरुद्धधर्मैः कृतस्य स्वविरोधत्यागस्य समर्थनसापेक्षस्य समर्थनमुत्तरार्धेन 'अमित्रजिदि' त्यादिना काव्यलिङ्गविधया क्रियते । अस्यार्थः । यत् यस्मात्कारणात् सः नलः मित्रजित् अमित्रजिच्चावर्तत, तथा, चारदृग्विच्चारदृक्चावर्तत मित्रजित्त्वामित्रजित्त्वयोश्चारदृक्त्व विचारदृक्त्वयोश्च विरुद्धयोर्नलरूपैकाधिकरणवृत्तित्वं यस्मात्तस्माद्विरुद्धधर्मैरपि भेत्तृतोज्झिताकिम् ? इति ॥ अत्र यत् इति हेतुवाचकपदेनैवोत्तरार्धस्य अविरोधोपपादनमात्रे तात्पर्यं स्पष्टमवगम्यते । नतुविरोधभाने तत्परिहारेवा ।

ननु मित्रजिन्नलः कथममित्रजित् ? कथंवा चारदृक्नलो विचारदृग्भवेदिति विरोधस्यापाततोभानात्ततस्सूर्यजित् शत्रुजिच्च, चारैस्सर्वंज्ञात्वा विचारपरश्चाभूत् इत्यर्थान्तरेण परिहारस्यचोत्तरार्धमात्रएव सत्वात्तत्रविरोधाभासस्य नकापिहानिरितिचेत् । स्यादेतदेवम् । यदि पूर्वार्धंविहाय, 'अमित्रजिन्मित्रजिदोजसाऽभवद्विचारदृक्चारदृगप्यसौ नलः' इत्येतावन्मात्रं काव्यंस्यात् । तदा नञा विरोधस्य भान मर्थान्तरेण तत्परिहरणञ्च प्राधान्येन चमत्कारि भवेत् । इदानीन्तूत्प्रेक्षैव चमत्कारिणी । उत्तरार्धन्तु विरुद्धयोरविरोधसमर्थनमात्रपरम् ।

यदिच उत्तरार्धमात्रविवक्षया तत्रैव विरोधाभासोऽङ्गीक्रियते तर्हि विरोधाभासः कथञ्चिदुत्प्रेक्षाया अङ्गंभवेत् नतूत्प्रेक्षैव विरोधाभासस्याङ्गम् । अतएव मल्लिनाथसूरिणा इममेव पक्षमभिप्रेत्यैतत्पद्यव्या-

ख्याने विरोधाभासः उत्प्रेक्षाया अङ्गमित्युक्त्वा अङ्गाङ्गिभावेन साङ्कर्य मुक्तम् । एवमङ्गाङ्गिभावनिर्वाहोपि दीक्षितपक्षे न संभवति । कुवलयानन्दविरोधात् । तत्रविरोधसमाधानरूपत्वमुत्प्रेक्षाया उक्तम् विरोधभानं तत्समाधानश्चेत्युभयं मिलितमेवहि विरोधाभासोऽलङ्कारः । यदि विरोधसमाधानरूपत्वमुत्प्रेक्षायास्तदा तस्या विरोधाभासकुक्षिनिक्षिप्तत्वात्कथमङ्गत्वमङ्गित्वंवा संभवेत् ? उत्प्रेक्षाया विरोधसमाधानरूपत्वमपि नास्ति, विरोधत्यागमात्रस्योत्प्रेक्ष्यत्वात् । उत्तरार्धेनैवोक्तरीत्या अविरोधसमर्थनात् । इत्थञ्च कुवलयानन्दे उत्प्रेक्षाया विरोधसमाधानात्मकत्वमुक्तमयुक्तम् । रसगङ्गाधरकारेणतूत्प्रेक्षाया विरोधसमाधान रूपत्वमभ्युपगम्य तदुपरि विरोधानुत्थानं दोषउक्तः । तदभ्युपगमएव तस्यायुक्तः । उत्प्रेक्षाया विरोधसमाधानरूपत्वाभावस्य समर्थितत्वात् ॥

यत्तु चन्द्रिकाकारेण ' विरोधभानमन्तरेण विरुद्धधर्मैरपीत्याद्युत्प्रेक्षायाएवानुत्थानेन ' इत्युक्तं तदयुक्तम् । यद्यपि विरोधत्यागोत्प्रेक्षां प्रति विरोधभानमावश्यकम् । तच्चविरोधभानं ' विरुद्धधर्मै ' रित्यत्र विरुद्धपदेनैव । नतूत्तरार्धगतेन केनचिदपि । ' विरोधत्यागोत्प्रेक्षा ' इत्यत्रांशत्रयं वर्तते । विरोधांशः, त्यागांशः, उत्प्रेक्षांशश्चेति । तत्रविरोधांशः पद्यस्थेन ' भेत्तृता ' इति पदेनोपस्थापितः । त्यागांशस्तु ' उज्झिते ' तिपदेन । उत्प्रेक्षांशस्तु ' किम् ' इतिपदेन । एवञ्च विरोधभानंप्रति नोत्तरार्धापेक्षा इत्युत्थितैवोत्प्रेक्षा । नानुत्थानम् ।

यदपि ' श्लेषमूलमाभासमानं विरोधमुपजीव्यैव ' इत्युक्तम् तदप्यसमीचीनम् । विरोधस्यापाततोभासमानत्वे श्लेषस्य मूलत्वाभावात् । ' अमित्रजिन्मित्रजित् ' इत्यत्र मित्रशब्दादर्थद्वयानुपस्थितावपि ' अ ' इति नञैव विरोधोपस्थापनात् । श्लेषेणार्थद्वयोपस्थितौतु विरोधःपरिह्रियतएव । नतूपस्थाप्यते । तस्माद्विरोधभानस्य श्लेषमूलत्वंनास्त्येवेति ॥

यदपि 'विरोधत्यागोत्प्रेक्षायास्तत्समाधानत्वेन पश्चादवस्थितत्वात्' इत्युक्तम् तदप्यसत् । उत्प्रेक्षाया विरोधसमाधानरूपत्वस्य प्रथममेव निरस्तत्वाम् । उत्प्रेक्षायाः पश्चादवस्थितेरपि तस्यानिरपेक्षत्वसमर्थनान्निरस्तत्वाच्च ।

ननु—काव्यलिङ्गविधयोत्तरार्धेन विरोधपरिहारे, समर्थिते सत्येव पूर्वार्धप्रतिपादितविरोधत्यागोत्प्रेक्षायास्सिद्ध्या तस्याः पश्चादवस्थितिस्सिद्ध्यतीतिचेत् सत्यम् । तस्याविरोधाभासकुक्षिनिक्षिप्तविरोधसमाधानरूपत्वेन पश्चादवस्थितिर्नास्तीत्येव समर्थितमिति नकिञ्चित्तवसाधकम् ॥

एतेन—चन्द्रिकासमानार्थको मर्मप्रकाशोपि निरस्तः । किन्त्वत्र किञ्चित्स्वारस्यम् । 'अत्रेदंचिन्त्यम्' इतिलिखित्वाऽन्ते 'पश्चात्तत्समाधानत्वेनस्थितेत्युत्प्रेक्षाङ्गमत्रविरोध इति' इति लिखितम् । अत्र—अस्मिन्पद्ये विरोधः उत्प्रेक्षाङ्गम् प्रधानभूताया उत्प्रेक्षायाः अङ्गम् अङ्गभूतः इत्यर्थोवा ? अत्र उत्प्रेक्षा विरोधे अङ्गम् अङ्गभूता इत्यर्थोवा ? इति सन्देहदाया एवानुपूर्व्या लेखनाल्लेखकस्यापि सन्देह उन्नीयत इति । 'पश्चात्तत्साधनत्वेनस्थिता' इति सर्वपुस्तकेष्वपपाठोपि सन्देहमिमंपुष्णाति । पश्चात्तत्समाधानत्वेनस्थितेतितुभाव्यम् इति ॥

॥ इति विरोधाभासविचारः ॥



विषयः (५३) अथविभावनाविचारः

विभावनायां रसगङ्गाधरकार एवंदीक्षिते दोषान्प्रकटयति । कुवलयानन्दकृता विभावना षोढा लक्षयित्वोदाहृता । सर्वानुगतं सामान्यलक्षणं नोक्तमेवतेन । प्राथमिकभेदलक्षणस्यैव सामान्यलक्षण-

त्वेनोपपत्तिकल्पनायामपि बाधकं स्वयमेव संपादितंतेन 'तृतीयाविभावना' 'चतुर्थीविभावना' इत्यादिसंख्यानिर्देशेन प्राथमिकस्यापि षड्भेदघटकत्वेन सामान्यलक्षणरूपत्वासंभवात्। किञ्च—अतिशयोक्ताविव 'ताद्रूप्यतमत्वं' सामान्यलक्षणमिति कल्पनेपि भेदानां परस्परवैलक्षण्यं नसंभवति एकयैवविधया द्वित्राणांविधानां चारितार्थ्यात्। इति। ततश्च—यदि दीक्षितोक्तमेव कथञ्चित्साधनीयमित्याग्रह स्तर्हि आद्यभेदलक्षणमेव सर्वानुगतं सामान्यलक्षणम्। साचद्वेधा। शाब्दी, आर्थीच। तेअपि प्रत्येकंत्रिविधे। इत्थञ्च षण्णांभेदानामचरितार्थतेति दिक्षणत्रपिचकार॥

चन्द्रिकाकारस्तु 'तत्तदर्थचमत्कृतिवैलक्षण्याद्भेदानां परस्परवैलक्षण्यमनुभवसिद्धमेवेति 'प्रथमप्रकाराद्द्वितीयप्रकारस्य वैलक्षण्यन्दुरुपपादम्' इति जगन्नाथोक्तिरयुक्तैव, 'प्रकारान्तरास्वीकारे लाघवम्' इत्युक्तिरपि स्वलाघवस्यैवोक्तिः' इत्याह। अत्र दोषपरिहारक्रमो नतावर्ती मुदमावहति॥ तदुक्तौदोषमनुपपाद्यैव 'जगन्नाथोक्तिरयुक्ता' 'स्वलाघवस्यैवोक्तिः' इत्युक्तिमात्रात्तदुक्तिखण्डनं कथं भवेत्?

॥ इति विभावनाविचारः॥



विषयः (५४) अथासङ्गतिविचारः (क)

'विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसङ्गतिः।
विषजलधरैः पीतं मूर्च्छिताः पथिकाङ्गनाः'

इत्यसङ्गत्यलङ्कारस्यलक्षणोदाहरणे। एतद्व्याख्यायां चन्द्रिकायां 'विरुद्धमिति अदृष्टमित्यर्थः। भिन्नदेशत्वम्। विषम् जलम्। हालाहलञ्च। सङ्गतस्यभावः साङ्गत्यम् तदभावोऽसाङ्गत्यम्' इत्यानुपूर्वीदृश्यते।

अत्रासाङ्गत्यशब्दः व्युत्पत्तिप्रदर्शनपूर्वकं व्याख्यातः । कारिकायां कुवलयानन्देवा असांगत्यशब्दो नदृश्यतएव सर्वमुद्रितपुस्तकेषु । ततश्च बहु चिन्तयता मयाऽसत्प्राचीनतालपत्रकोशे दृष्टःपाठोयमतीवमुद मुदपादयन्मे 'क्वचिदसांगत्यसमाधाननिबन्धनेन चारुतातिशयः । यथा । अजस्रमारोहसिइत्यादि ' अतस्तथैवपाठेनभाव्यम् ॥ तदापि 'संगतयोर्भावस्सांगत्यम् तदभावोऽसांगत्यम्' इत्येवव्याख्येयम् । कार्यहेत्वोरुभयोःखलु सांगत्यम् नत्वेकस्येति ॥



### विषयः (५५) असंगतिः (ख)

उक्तासङ्गतिलक्षणे 'विरुद्धम्' इति पदस्य प्रयोजनं दर्शयितु मिदमुदाजहार दीक्षितः ।

'भ्रूचापवल्लीं सुमुखी यावन्नयति वक्रताम् ।
तावत्कटाक्षविशिखैर्भिद्यते हृदयं मम ॥ '

इति । अस्यायं भावः चापनामनं वेधके, भेदनन्तु लक्ष्ये, इति चापनामनभेदयोः कार्यकारणयोर्वैयधिकरण्यमेव लोकेप्रसिद्धम् । तच्च नविरुद्धम् । इत्युदाहृतपद्ये नासंगतिरलङ्कार इति ॥

अस्यपद्यस्य व्याख्यायां चन्द्रिकाकारः, 'भ्रूचापेति । भ्रूचापवल्लीम् । भ्रूस्वरूपधनुर्लताम् । यावदिति परिमाणार्थम् वक्रतांनयति । आकर्षतीतियावत् । तावत्परिमाणं हृदयं भिद्यतइत्यर्थः' इति व्यलिखत् । अत्र यावत्तावच्छब्दयोः परिमाणार्थकत्वमस्वरसम् लोकेधनुर्वक्रताया यत्परिमाणं लक्ष्येपि तत्परिमाणभेदनमप्रसिद्धम् । किन्तु बाणाग्रसमपरिमाणतया लक्ष्यभेदनं प्रसिद्धम् । हृदयस्याप्यणुपरिमाणस्य भ्रूसमानपरिमाणत्वं नास्त्येव । अतोयावत्तावच्छब्दयोः अवधि

वाचकत्वमेव स्वरसम् । अवधिश्च कालस्य । तथाच यदातदेत्यर्थः । तथैवनिर्देशंविना यावत्तावच्छब्दनिर्देशस्तु चापनामनक्षणएव लक्ष्यभेदः भ्रूनमनक्षणएव हृदयभेद इति ज्ञापनाय । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इति कोशादिति ॥



## विषयः (५६) असंगतिः (ग)

कुवलयानन्दकृता पूर्वोक्तरीत्या असंगतेर्लक्षणोदाहरणे प्रदर्श्य पुनरपि तद्भेदद्वयं प्रदर्शितम् ।

'अन्यत्रकरणीयस्य ततोन्यत्र कृतिश्च सा ।
अपारिजातां वसुधां चिकीर्षन्द्यान्तथाऽकृथाः ॥' यथावा ॥

'त्वत्खड्गखण्डितसपत्नविलासिनीनां
भूषाभवन्त्यभिनवा भुवनैकवीर ।
नेत्रेषु कङ्कण मथोरुषु पत्रवल्ली
चोलेन्द्रसिंह्म तिलकङ्करपल्लवेषु ॥' तथा ॥

'अन्यत्कर्तुंप्रवृत्तस्य तद्विरुद्धकृतिस्तथा ।
गोत्रोद्धारप्रवृत्तोपि गोत्रोद्भेदं पुराऽकरोः ॥' यथावा ॥

'मोहं जगत्त्रयभुवामपनेतुमेतदादाय
रूपमखिलेश्वर देहभाजाम् ।
निस्सीमकान्तिरसनीरधिनाऽमुनैव मोहं
प्रवर्धयसि मुग्धविलासिनीनाम् ॥' इति ॥

अत्रदोषंप्रकटयतिजगन्नाथएवम् । 'अन्यत्रकरणीयस्य' इति लक्षणलक्षितस्य असंगतिद्वितीयभेदस्य प्रथमभेदेऽन्तर्भावसंभवात्

द्वितीयभेदोक्तिरसङ्गता । तथाहि । इदंखल्वाद्यभेदलक्षणस्य लक्ष्येसमन्वयप्रतिपादकवाक्यं कुवलयानन्दे, ‘ययोः कार्यहेत्वोर्भिन्नदेशत्वंविरुद्धम् तयोस्तन्निबध्यमानमसंगत्यलङ्कारः । यथात्र विषपानमूर्च्छयोर्भिन्नदेशत्वम्’ इति । अस्यायंभावः अत्र विषपानं कारणम् कार्यं मूर्च्छा । कारणभूतं विषपानं जलधरेषु, कार्यभूता मूर्च्छा पथिकाङ्गनासु । अतश्च कार्यकारणयोर्भिन्नदेशत्वं (वैयधिकरण्यं) विरुद्धमिति ।

इदमेव प्रथमभेदलक्षणं द्वितीयभेदोदाहरणे ‘अपारिजातां वसुधां चिकीर्षन्द्यां तथाऽकृथाः’ इत्यत्र समन्वितं भवति । कथमितिचेत् ? जानाति, इच्छति, यतते, करोति, इतिक्रमात् कार्यतावच्छेदकसंबन्धेन कार्यंप्रति विषयतासंवन्धेनेच्छायाः कारणत्वं सिद्धमेव । प्रकृते कारणभूता पारिजातराहित्यचिकीर्षा विषयतासंवन्धेन वसुधायाम् । कार्यभूतं पारिजातराहित्यं स्वरूपसंबन्धेन दिवि जातमिति नप्रथमभेदतो द्वितीयभेदस्य वैलक्षण्यम् ॥

एवं ‘अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा’ इति लक्षण लक्षितस्य तृतीयभेदस्योदाहरणे ‘गोत्रोद्धारप्रवृत्तोपि गोत्रोद्भेदं पुराऽकरोः’ इत्यत्र ‘विरुद्धात्कार्यनिष्पत्तिर्दृष्टाकाचिद्विभावना’ इति पञ्चमविभावनालक्षणसमन्वयसंभवात्तृतीयभेदोक्तिरप्यसङ्गता । पञ्चमविभावनाया उदाहरणमिदम् ‘शीतांशुकिरणास्तन्वीं हन्त सन्तापयन्ति ताम्’ इति । अत्र समन्वयवाक्यङ्कुवलयानन्दे, ‘अत्र तापनिवर्तकतया तापविरुद्धैरिन्दुकिरणैस्तापजनिरुक्ता’ इति । अयञ्च समन्वयक्रमः ‘गोत्रोद्धारे’ त्यत्रापि संभवति । गोत्रोद्धारहेतुतया गोत्रोद्भेदविरुद्धया गोत्रोद्धारविषयकप्रवृत्त्या गोत्रोद्भेदजनिरुक्ता इति । इत्थञ्च तृतीयासङ्गतिभेदस्य पञ्चमविभावनाभेदान्तर्भावसंभवात्तदुक्तिरयुक्ता ।

एवं ‘नेत्रेषुकङ्कणम्’ इत्यादौ ‘मोहंजगत्त्रय’ इत्यादौच कङ्कणत्वनेत्राभरणत्वयोः मोहनिवर्तकत्वमोहजनकत्वयोश्च विरुद्धयोस्सा-

मानाधिकरण्यवर्णनाच्च विरोधाभासालङ्कारत्वमेवोचितम् नत्वसङ्गतिभेदत्वकथनम् इति ॥

अत्र चन्द्रिकाकारः प्रतिवक्ति । तस्येयमानुपूर्वी ' तदसङ्गतम् उक्तसंबन्धेन चिकीर्षाया हेतुत्वासिद्धेः, नहि यदधिकरणे कार्यचिकीर्षा तदधिकरणमन्तर्भाव्योक्तसंबन्धेन चिकीर्षायाः कार्यहेतुत्वन्तान्त्रिकसंमतं युक्तंवा । अन्यत्र चिकीर्षितस्यापि प्रमादादिना अन्यत्रकरणेन व्यभिचारात् । अतएवैवंविधवैयधिकरण्यस्याविरुद्धत्वादपि नप्राथमिकासङ्गत्यन्तर्भावसंभवः । वस्तुतस्तु ' विषंजलधरैः ' इत्यत्रेव नात्र कार्यकारणवैयधिकरण्यप्रयुक्तो विच्छित्तिविशेषः । अपित्वन्यत्रकर्तव्यस्यान्यत्रकरणप्रयुक्तएवेति स्वहृदयमेव प्रष्टव्यम् ' इति ॥

अत्रैवं प्रत्युच्यतेस्माभिः । ' तदसङ्गतम् , उक्तसंबन्धेन चिकीर्षायाहेतुत्वासिद्धेः ' इत्यस्य प्रतिवचनमिदम् । ' तत्सङ्गतम् , उक्तसंबन्धेन चिकीर्षायाहेतुत्वसिद्धेः ' इति । चिकीर्षाया हेतुत्वासिद्धिः कथमितिचेत्तदुपपादकं ' नही ' त्यादि ' युक्तंवा ' इत्यन्तश्चन्द्रिकाकारवचनम् ॥ तस्येदंप्रतिवचनम् , अधिकरणान्तर्भावंविना कार्यकारणभावएव नसंभवति, समानाधिकरणयोरेवहि कार्यकारणभावः अधिकरणञ्च द्विविधम् , आश्रयो विषयश्च, अतएवात्मनिष्ठप्रत्यासत्त्या विषयनिष्ठप्रत्यासत्त्याच द्वेधा कार्यकारणभावमभ्युपयन्तिनैयायिकाः । अतोस्त्यत्र कार्यकारणभावे तान्त्रिकसंमतिर्युक्तिश्च, अतएव कार्यकारणयोर्भिन्नदेशत्वे ' विरुद्ध ' मिति विशेषणंलक्षणे, इति ॥

यदपि, ' अन्यत्रचिकीर्षितस्यापि प्रमादादिनान्यत्रकरणेन व्यभिचारात् ' इत्युक्तम् , तत्रप्रतिवचनमिदम् । सर्वानुभवसिद्धान्वयव्यतिरेकसहचारयोरेव कार्यकारणभावग्राहकत्वात्ताभ्याञ्च गृहीते कार्यकारणभावे पश्चात्कस्यचित्प्रमादादिनाऽन्यत्रकरणेन व्यभिचारापादनं कार्यकारणभावभञ्जकं नभवत्येव ॥

किञ्च वेदिकारूपाधिकरणे घटचिकीर्षासत्वे प्रमादादिना अपवरकरूपाधिकरणे घटकरणेपि ' समवायसंबन्धेनघटंप्रति विषयतासंबन्धेन चिकीर्षाकारणम् ' इति कार्यकारणभावग्रहंप्रति किमपिबाधकं नास्त्येव, समानविषयकत्वाभावात् । नहि उक्तकार्यकारणभावे वेदिकापवरकयोर्घटकत्वम् इति ॥

यच्च ' वस्तुतस्तु ' विषजलधरैः ' इत्यादि ' स्वहृदयमेव प्रष्टव्यम् ' इत्यन्तेनोक्तम्, तत्रेदं समाधानम्—यदि भवदुक्तप्रथमभेद लक्षणं भवदुक्तलक्षणसमन्वयवाक्यरीत्यैव भवदुक्तद्वितीयभेदोदाहरणेपि समन्वितं भवेत्, तर्हि स्वहृदये पृष्टेपि ' अन्यत्रकरणीयस्यान्यत्रकरणप्रयुक्तएवात्र चमत्कारः, नतु कार्यकारणयोर्वैयधिकरण्यप्रयुक्त इति नसंमन्यतेहृदयम् किंकुर्मोवयम् । कस्यचिल्लक्षणे कर्तव्ये कथञ्चिदप्यन्यलक्षणानाक्रान्तं यथाभवेत्तथाकर्तव्यम्, तदेवहि लक्षणकर्तुर्बुद्धिकौशलम्, नतु शपथमात्रात्परीक्षकास्तृप्यन्ति ॥ ' गोत्रोद्धार ' ' नेत्रेषुकङ्कणम् ' ' मोहञ्जगत्त्रय ' इत्युदाहरणत्रयेपि जगन्नाथोक्तदूषणान्यभ्युपगम्यैव चन्द्रिकाकारेण स्वविवक्षितार्थमात्रग्रहणेन लक्षणसमन्वयसंभवो निरूपितः । अतोऽत्रापि लक्षणकरणकौशलविरहस्सूचितो भवतीति नातितृप्यन्ति लक्षणकरणकुशलाः ॥

एतेन—चन्द्रिकाकारशिष्यो मर्मप्रकाशकृन्नागेशोपि प्रत्युक्तः, यत एतदुक्तमेव सोप्यनुवदति । किन्त्वेकोविशेषः । नागेशस्यात्रेयमानुपूर्वी । ' जन्यत्वेपि चिकीर्षायाः कृत्या अन्यथासिद्धतया कार्यजनकत्वेमानाभावः ' इति ।

अस्यायं भावः, जानाति, इच्छति, यतते, करोति इति क्रमस्य सर्वतान्त्रिकसंमतत्वेन कार्यसामान्यंप्रति यतनशब्दवाच्याकृतिः कारणम् पूर्ववृत्तित्वात् । कृतेरिच्छा कारणम् इच्छायाश्च ततएव ज्ञानं

कारणम् । इत्थञ्च कार्यसामान्यंप्रत्यवश्यक्लृप्तनियतपूर्ववर्तिन्या कृत्यैव कार्यसंभवे तद्भिन्नत्वादिच्छाया अन्यथासिद्धत्वाज्जगन्नाथोक्तः कार्यचिकीर्षयोः कार्यकारणभावएवानुपपन्न इति कृत्वा, 'अपारिजाता' मित्यत्रप्रथमासङ्गतिलक्षणस्य नावकाश इति ॥

अत्रेदं समाधानम् । प्रवृत्तिसामान्यंप्रति इष्टसाधनताज्ञानं कारणमिति सर्वतान्त्रिकसंमतम् । यथा ज्योतिष्टोमादौ स्वेष्टस्वर्गसाधनताज्ञानादेव प्रवृत्तिः, तदभावे सैव नसंभवति । लौकिकेष्वप्येवमेव । अर्थार्थिनो राजकुलगमने प्रवृत्तिः स्वेष्टार्थसाधनताज्ञानादेव, अन्यथा 'निरीहाणामीशास्तृणमिवतिरस्कारविषयाः' ॥ एवं प्रवृत्तीष्टसाधनताज्ञानयोः कार्यकारणभावे सिद्धेपि त्वदुक्तरीत्या प्रवृत्त्या चिकीर्षाया अन्यथासिद्धिवच्चिकीर्षया ज्ञानस्याप्यन्यथासिद्धेर्वक्तुंशक्यत्वादुक्तप्रसिद्धकार्यकारणभावभङ्गप्रसङ्गः । किङ्कुर्मइतिचेत्, 'व्यापारेण व्यापारिणो नान्यथासिद्धिः' इति न्यायशरीरञ्चिन्तय । अतएव 'काशीमरणान्मुक्तिः' इत्यत्र काशीमरणस्य तत्त्वज्ञानद्वारा मुक्तिहेतुत्वेपि पञ्चम्या हेतुत्वं हेतुप्रयोजकोभयसाधारणमेव वर्णितन्तान्त्रिकैः ॥

किञ्च अन्यथासिद्धिलक्षणवक्ता नैयायिकोपि 'पञ्चमोरासभादिस्स्यादेतेष्वावश्यकस्त्वसौ' इति रासभस्यैवान्यथासिद्धत्वमूचे, नतु भ्रमणात्मकव्यापारेण दण्डस्यापि । अन्यथासिद्धिलक्षणेपि 'अवश्यक्लृप्तनियतपूर्ववर्तिना' इत्येवनिविष्टम्, नतु 'अवश्यक्लृप्तनियताव्यवहितपूर्ववर्तिने' ति । तस्मात्कार्यंप्रति कृत्या चिकीर्षाया नान्यथासिद्धिः । नापि कृतिंप्रति चिकीर्षया ज्ञानस्य, इति सुष्ठूक्तञ्जगन्नाथेन कार्यचिकीर्षयोः कार्यकारणभाव इति ॥

॥ इत्यसङ्गतिविचारः ॥



विषयः (५७) अथविषमालङ्कारविचारः (क)

अनुरूपयोर्घटनारूपप्रथमविषमस्य 'क्वेयं शिरीषमृद्वङ्गी क्व तादृङ्मदनज्वरः' इत्युदाहरणं प्रदर्श्य पद्यान्तरमप्युदाहृतं कुवलयानन्दकृता ।

'अभिलषसि यदीन्दो वक्त्रलक्ष्मीं मृगाक्ष्याः
पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम् ।
सुविमलमथबिम्बं पारिजातप्रसूनैस्सुरभय
वद नोचेत्त्वं क्व तस्यामुखं क्व ॥'

इति ॥ अत्रपद्ये यथापाठमन्वयस्तदर्थश्च सुखेनैवगृह्यतेसर्वैः । एवंस्थिते, चन्द्रिकाकारः, 'अभिलषसीति । अङ्कम् कलङ्कम् संक्षालय प्रक्षालय अथप्रक्षालनानन्तरम् नोचेत् तस्यामुखंक्व ? त्वंक्व ? इति वदेत्यन्वयः' इति व्याचख्यौ ॥ अत्रान्वयप्रदर्शनमेवानपेक्षितम् । क्लिष्टत्वेहि स प्रदर्शनीयः इहतु यथापाठमेवान्वयो हृद्यः, तथाहि इदंपद्यं स्वकान्तामुखकान्त्युत्कर्षं प्रकटयतो नायकस्य चन्द्रंप्रति वचनम् । हेइन्दो । मृगाक्ष्यावक्त्रलक्ष्मीं यद्यभिलषसि तर्हि पुनरेकवारं वारिधौ निमज्ज्य कलङ्कं सम्यक्संमृज्य मृगाक्षीमुखवन्निष्कलङ्कत्वं संपाद्य ततस्तन्निश्वासपरिमलतुल्यपरिमलसंपादनाय तव मण्डलं पारिजातकुसुमैस्सुरभीकुरु वद 'इदानीं मृगाक्षीवक्त्रसादृश्यं मया प्राप्त' मितिब्रूहि नोचेत् एवमकरणे त्वंक्व ? तस्यामुखंक्व ? उभयोरत्यन्ताननुरूपत्वमेवेति यथापाठमेव तात्पर्यम् ।

चन्द्रिकोक्तरीत्यान्वयप्रदर्शने अत्यन्तविरोधः स्फुटएव । इन्दो । इति चन्द्रंसंबोध्य, 'त्वंक्व तस्यामुखंक्व इतिवद' इत्युक्ते नायकंप्रति चन्द्रेण वक्तव्यं त्वंक्व तस्यामुखं क्वेति, ततश्च 'चन्द्रोनायकंब्रूते

हे नायक, तवच त्वत्कान्तामुखस्यच सुतरामानुरूप्यं नास्ती ' त्यर्थलाभात्तस्यचोन्मत्तप्रलपितकल्पत्वात् ॥



## विषयः (५८) विषमम् (ख)

विषमालङ्कारतृतीयभेदस्य लक्षणमेवमुक्तङ्कुवलयानन्दकृता ' अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् ' इति ॥

दीक्षिताभिप्रायानुसारेणायं लक्षणवाक्यार्थः । इष्टार्थसमुद्यमात् इष्टार्थे स्वापेक्षितार्थे समुद्यमात् स्वप्रयत्नकृताद्व्यापारात् अनिष्टस्यापि स्वेनानपेक्षितस्य विरुद्धफलस्यापि अवाप्तिः प्राप्तिः अनिष्टस्यापीत्यपिना इष्टस्याप्राप्तिस्समुच्चीयते । इत्थञ्च अपेक्षितफलस्याप्राप्तिः अनपेक्षितस्य विरुद्धफलस्य प्राप्तिरपि । च । इदमपि । तत् । विषमम् । यथा उदाहरणवाक्ये सर्पपेटिकां दन्तैस्सरन्ध्रंकृत्वा प्रविष्टस्य मूषकस्य भक्ष्यरूपस्वेष्टस्याप्राप्तिः, अहिकृतभक्षणेन स्वमरणरूपानिष्टस्य प्राप्तिश्च वर्णितेति विषमत्वमिति ॥

अस्मिन्लक्षणवाक्ये दोष उद्घाटितो रसगङ्गाधरकारेण । तथाहि ' अनिष्टस्याप्यवाप्ति ' रित्यपिना इष्टस्यानवाप्तिस्समुच्चीयतइति यदुक्तम् तन्नसंभवति । पदस्यासामर्थ्यात् अनिष्टस्याप्यवाप्तिरित्युक्ते इष्टस्याप्यवाप्तिरित्येवार्थो ज्ञायते नत्विष्टस्यानवाप्तिरिति । तण्डुलाशया ग्रामं प्रविष्टस्य भिक्षुकस्य तण्डुलस्यापिप्राप्तिरभूदित्युक्ते धनस्यापि प्राप्तिरभूदित्येवार्थस्स्वरसतोज्ञायतेसर्वैः नतु धनस्याप्राप्ति रभूदिति ॥

किञ्च ' अनिष्टस्य ' इत्यस्य ' अवाप्तिः ' इत्यत्रान्वयः अपिशब्दसमुच्चिताया इष्टानवाप्तेस्तु ' तत् ' इत्यनेनान्वयः इतिवैरूप्यम् ॥ अपिशब्दयोगिनो यत्रान्वयः अपिशब्दसमुच्चितस्यापि तत्रैवान्वयोयुक्तः

यथा देवदत्तोपि काशीङ्गतइत्युक्ते अपिशब्दयोगिनो देवदत्तस्य काशी कर्मकगतौ कर्तृतयान्वये अपिशब्दसमुच्चितस्य यज्ञदत्तस्यापि काशी-कर्मकगतौ कर्तृतयान्वयः इति ॥

एतच्च प्रतिक्षिपति चन्द्रिकाकारः । तथाहि । लक्षणवाक्यघट-कस्य अनिष्टस्येतिपदाव्यवहितोत्तरं श्रूयमाणस्य अपेः 'अवाप्ति' रिति पदोत्तरमनुसन्धानंकार्यम् । तथासति 'अनिष्टस्यावाप्तिरपि' इति योजनायां अपिना इष्टस्यानवाप्तिस्समुच्चेतुंशक्यतइति नपूर्वोक्ता-सामर्थ्यमिति ॥

रसगङ्गाधरचन्द्रिकापक्षयोः कस्मिन् स्वारस्यमस्वारस्यंवेतिवि-चारे वयमित्थमुत्पश्यामः ॥

यदि चन्द्रिकोक्तरीत्या अपेर्भिन्नक्रमत्वमङ्गीक्रियते, तदा अस्था-नस्थपदत्वरूपोदोषस्स्यात् अवाप्तिपदोत्तरं वक्तव्यस्यापिशब्दस्य 'अनि-ष्टस्य' इति पदोत्तरं प्रयुक्तत्वात् ॥

वस्तुतस्त्वियमनुपपत्तिर्यदिदीक्षितहृदयमारोहेत् तदा लक्षण कारिकामेवं कुर्यात् 'अवाप्तिरप्यनिष्टस्य तदिष्टार्थसमुद्यमात्' इति । इति ॥ तथायोजनायामपि अपेक्षितार्थलाभःक्लेशेनैव ॥



## विषयः (५९) विषमम् (ग)

पूर्वोक्तलक्षणस्योदाहरणवाक्ये 'भक्ष्याशयाऽहिमञ्जूषां दृष्ट्वाऽऽ-खुस्तेनभक्षितः' इत्यत्रापि रसगङ्गाधरकारेण दोषउद्घाटितः । तथाहि । 'समानकर्तृकयोःपूर्वकाले' इति सूत्रेण एककर्तृकयोः क्रिययो र्मध्ये पूर्वकालिकक्रियावाचकाद्धातोः परतः क्त्वाप्रत्ययस्यविधानात् प्रकृते

' दष्ट्वा ' इति दंशधातोः क्त्वाप्रत्ययेसति दंशनक्रियोत्तरभाविमूषककर्तृकक्रियान्तरस्यानभिधानादावश्यकस्य क्रियान्तरस्याकथनान्न्यूनपदत्वं दोषः । अतएव लक्षणसमन्वयवाक्ये ' सर्पपेटिकांदष्ट्वाप्रविष्टस्य ' इति दीक्षितेन ' प्रविष्टस्ये ' तिपदमध्याहृतम् । तथापि तत्र ' प्रविष्टस्य ' इति पदमेवाध्याहर्तव्यमिति नियमेनाप्रतीतेश्च गम्यत्वमपि नास्तीति न्यूनपदत्वमेवेति ॥

एतदपि प्रतिक्षिप्तश्चन्द्रिकाकारेण, ' यत्तु प्रविष्टइत्यस्यागम्यमानत्वान्न्यूनपदत्वमिति केनचिदुक्तन्तदभिनिवेशदुष्टस्वहृदयानुभवविकत्थनमित्युपेक्षणीयम् ' इति ॥

अत्रापि द्वयोः पक्षयोः कस्मिन् स्वारस्यमितिविचारे रसगङ्गाधरकारेण हेतुनिर्देशपुरस्सरं दोपउद्घाटितः । चन्द्रिकाकारेण हेतुनिरूपणंविनैव ' तदभिनिवेशदुष्टस्वहृदयानुभवविकत्थनम् ' इति केवलोपालंभवाक्यात् स्वस्यतन्निराकरणयुक्त्यस्फूर्तिस्सूचिता ॥ एवमुपालब्धुश्चन्द्रिकाकारस्यायंभावः । वस्तुतः प्रविष्टइतिपदस्य गम्यमानत्वमस्ति तथापि गम्यमानत्वं नास्तीत्युक्तिरभिनिवेशात् इति ॥

अत्रतु वयमित्थमुत्पश्यामः । सर्पपेटिकोपरिस्थितेन मूषकेण दष्टायां पेटिकायां सरन्ध्रायां भक्ष्यगन्धाग्रहणात्सर्पगन्धग्रहणाच्चान्तरप्रविष्टएव मूषकस्तदैव वहिःप्रसारितशिरसा सर्पेण भक्षितइति मूषकप्रवेशस्यानावश्यकत्वान्न्यूनपदत्वमेवेति ॥



विषयः (६०) विपमम् (ग्र)

कुवलयानन्दकृता केवलानिष्टप्रतिलंभरूपविपमोदाहरणतया दर्शितमिदं पद्यम् ।

‘ पद्मातपत्ररसिके सरसीरुहस्य
　　किं वीजमर्पयितुमिच्छसि वापिकायाम् ।
कालःकलि र्जगदिदं नकृतज्ञमज्ञे
　　स्थित्वा हरिष्यति तवैव मुखस्य लक्ष्मीम् ॥ ’

इति ॥ अत्र चन्द्रिकायाम् ‘ पद्मातपत्ररसिके ’ इतिपदस्य, ‘ पद्मस्य आतपत्रम् छत्रम् तत्ररसिके ’ इति विग्रहः प्रदर्शितः ॥

अत्र पद्मपदस्यातपत्रपदेनैव रूढान्वयो वाच्यः अन्यत्रासंभवात् । कृत्प्रत्ययान्तपदसमभिव्याहाराभावात्कर्तरि कर्मणि वा षष्ठी नसंभवति । पद्मस्यातपत्रस्यच यथाकथंचिधया संबन्धाभावात्संबन्धसामान्येपि षष्ठी नभवति । अतष्षष्ठ्यन्तपदेन विग्रहप्रदर्शनमयुक्तम् । पद्ममेवातपत्रमिति मयूरव्यंसकादिसमासाश्रयणे पद्मस्यातपत्रीकरणमप्रसिद्धमनुपपन्नंविरुद्धञ्च । पद्मेनाल्पपरिमाणेन आतपवारणासंभवात् आतपवारणेन पद्मशोषणस्यानुचितत्वाच्च । तस्मात् ‘ पद्मं आतपत्रमिव ’ इत्युपमितसमासस्फोरको विग्रहएवप्रदर्शनीयः । सएवयुक्तः सनालस्यपद्मस्यातपत्रसाम्यात् । तथाच आतपत्रसदृशपद्मग्रहणरसिके इति संबोधनार्थः ॥



## विषयः (६१) विषमम् (ङ)

किञ्च, अत्रश्लोके ‘ सरसीरुहस्य किं बीजमर्पयितुमिच्छसि वापिकायाम् ’ इत्यंशः कुवलयानन्दे ‘ पद्मबीजावापंकृतवत्याः ’ इति वाक्येन विवृतः ॥

चन्द्रिकाकारेणतु ‘ सरसीरुहस्य पद्मस्य कन्दम् अर्पयितुं किमितीच्छसि ’ इति बीजशब्दः कन्दशब्देन विवृतः । तथाविवरणमङ्कुरजनकतावच्छेदकशक्तिमत्त्वेन लक्षणयेत्यङ्गीकरणीयम् । लक्षणां विना

शक्त्यैव निर्वाहस्संभवति । जलोपरिप्लवमानादपि सरसिजबीजादुद्भूतोङ्कुरः अधस्तलं व्याप्य कमलिनी भवतीत्यनुभवात् । अतएवश्लोके 'किंबीजमर्पयितुम्' इति बीजार्पणमात्रमुक्तम् । तच्चार्पणमावापशब्देन-कुवलयानन्देविवृतम् । आवापोनाम बीजस्यपृथिव्यांनिक्षिप्य मृदा स्थगनम् । तदप्यत्रनापेक्षितम् किन्तु सरोजले पद्मबीजप्रक्षेपएव । तस्मात् बीजशब्दार्पणशब्दयोर्वाच्यार्थएव समीचीन इति लक्षणा नाङ्गीकरणीयैव ॥



## विषयः (६२) विषमम् (च)

अपिच—अत्रश्लोके 'हरिष्यतितवैवमुखस्यलक्ष्मीम्' इत्यंशस्य, चन्द्रिकायां 'नत्वन्यस्याः इत्यर्थः' इति व्याख्या कृता । सातु नसङ्गतार्था । कुतइतिचेत् 'नत्वन्यस्या' इत्यनेनान्ययोगव्यवच्छेदकत्वमेवकारस्य ज्ञाप्यते । अन्ययोगव्यवच्छेदस्तु नात्रविवक्षितः । नहि पद्मातपत्र लिप्सया सरसि सरसिजबीजप्रक्षेपकारिण्यास्स्वस्याः स्वान्यमुखशोभाहरणनिषेधः उत्कटानिष्टप्रतिलंभरूपोभवति। केवलानिष्टप्रतिलंभस्य हीदमुदाहरणम् ।

तस्मात् 'यात्वं पद्मग्रहणरसिका सरसि सरसिजं रोपितवती, रोपितं तत्सरसिजं रोपितवत्यास्तवैव मुखशोभां हरिष्यति अहो जगतः कृतघ्नता' इति भावोवर्णनीयः । तथाचायोगव्यवच्छेदपरएवकार इति 'नत्वन्यस्या' इतिव्याख्या अनुपपन्ना ॥



## विषयः (६३) विषमम् (छ)

केवलेष्टानवाप्तिरूपविषमोदाहरणतया पद्यमिदमुपात्तं कुवलयानन्दे ।

' खिन्नोसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नविततबाहुषु गोपेषु हसन् हरिर्जयति ' ॥

इति । अत्र श्लोके ' भरभुग्नवितत ' इत्येव पाठमाश्रित्य चन्द्रिकाकारेण व्याख्यातम् ' भरेण शैलभारेण भुग्नाः वक्राः वितताः विस्तीर्णाः बाहवः येषाम् ' इति । अत्र गोपबाहूनां शैलभारेण वक्रत्वे विस्तीर्णत्वं नसंभवति । विस्तीर्णत्वे वक्रत्वं नसंभवतीति विरोधस्स्फुटएव ॥ प्रथमं भुग्नाः अतएव श्रमासहतया वितताः प्रसारिता अधोलंबमाना बाहव इत्यर्थ उच्यते चेत् तर्हि सर्वेषां शिरस्येव शैलेन भाव्यम् तथातु नोक्तम् ॥ वितताःविशालाः बलवत्वंलक्षयति बलिनोपि गोपबाहवो भरेण भुग्नाआसन् इत्यर्थविवक्षायान्तु विततपदस्यपूर्वनिपातेनभाव्यम् । तस्मात् ' वितते ' ति पाठावलंबनेनव्याख्यानमस्वरसम् ॥

प्राचीनास्मत्तालपत्रकोशेतु ' वितत ' इतिस्थाने ' वितथ ' इतिदृश्यते । इदन्तु पद्यं सुबन्धुना वासवदत्तायां मङ्गलश्लोकतया निबद्धम् । तत्रापि ' वितथे ' त्येवदृश्यते । तद्व्याख्याद्वयेपि ' वितथाः व्यर्थाः ' इति दृश्यते । व्यर्थत्वन्तुप्रकृतोपयोगि । शैलधारणरूपप्रयोजनस्यानिष्पन्नत्वात् । अतएव कुवलयानन्दे समन्वयवाक्ये ' शैलधारणरूपेष्टानवाप्तिमात्रम् ' इत्युक्तम् ॥



## विषयः (६४) विषमम् (ज)

कुवलयानन्दकृता ' खिन्नोसी ' त्यादियद्यं केवलेष्टानवाप्तिरूपविषमस्योदाहरणतयोपात्तम् । रसगङ्गाधरकारेणतु दीक्षितोक्तौ दूषणमुक्तम् । तथाहि । ' अत्रेष्टानवाप्तिमात्रं नभवति किन्त्वनिष्टप्राप्तिश्चवर्तते ' भरभुग्ने ' त्यनेन बाहुगतास्थिसन्धिभङ्गरूपस्यानिष्टस्य शब्दतएव कथनात् सर्वाङ्गचूर्णीभावरूपस्य गर्वभङ्गरूपस्यच अनिष्टस्य गम्यमानत्वाच्च '

इति ॥ एतच्च सर्वं चन्द्रिकाकारेणैव प्रत्युक्तमपि पुनर्विशदंप्रत्युच्यते मया । अत्र गोपबाहूनामस्थिभङ्गोजातइति नसाक्षादुपात्तम् । यद्युपात्तं स्यात्तर्हि 'भरभग्ने' ति पाठेनभाव्यम् । 'भञ्जोआमर्दने' इति हिधातुः नतु तथा, किन्तु 'भुग्ने' ति । 'भुजोकौटिल्ये' इति धातोःक्ते कृते 'भुग्ने' तिरूपम् । तस्माद्भारेण वक्रतामात्रं जातम्, तच्च नानिष्टम् । सर्वाङ्गचूर्णीभावश्च नगम्यते । चूर्णीभावप्रसक्तेरेवाभावात् । स्वाराधनभङ्गप्रकुपितशतमखप्रहित कल्पान्तकालकालमेघप्रवर्षणनिवारणेन गोकुलपरिपालनायैव गोवर्धनोद्धरणात् सप्ताब्दवयसा बालेन पाणिनैवोत्पाट्य निश्चलतया आसप्ताहन्धारणदर्शनात् दृढतरविस्रब्धानां सर्वाङ्गचूर्णीभावसंभावनाया एवाभावात् ॥

एतेन दीक्षितोक्तमप्यपास्तम् 'अत्रयद्यपि शैलस्योपरिपतन रूपानिष्टावाप्तिरपि प्रसक्ता' इतिहि तेनानिष्टावाप्तिः प्रसञ्जिता । पूर्वोक्तहेतुनोक्तप्रसक्त्यभावस्योपपादितत्वात् ॥

एवं गर्वपरिहारोपि नगम्यते । सप्तहायने अतिसुन्दरसुकुमारे बालके महत्याप्रीत्या गिरिधारणे प्रवृत्तानां गोपानां गर्वस्यसुतरामभावात्तत्परिहाररूपानिष्टावाप्तेश्चाभावादिति ॥



## विषयः (६५) विषमम् (झ)

स्वेष्टस्य कस्मिंश्चित्कालएवावाप्तिः नसर्वदा, इत्येतादृशविषमालङ्कारस्योदाहरणतया स्वकृतवरदराजस्तवघटकं पद्यद्वयमुदाजहार कुवलयानन्दकारः । कदाचिदिष्टावाप्तिपूर्वकतदनवाप्तिर्यथा ।

'भानुर्निशासु भवदङ्घ्रिमयूखशोभा
लोभात्प्रताप्य किरणोत्करमाप्रभातम् ।

तत्रोद्धृते हुतवहात्क्षणलुप्तरागो
तापंभजत्यनुदिनं सहि सन्दतापः ' ॥

' त्वद्वक्त्रसाम्यमयमंबुजकोशमुद्रा
भङ्गात्ततत्सुषममित्रकरोपक्लृप्तया ।
लब्ध्वापि पर्वणि विधुः क्रमहीयमानः
शंसत्यनीत्युपचितां श्रियमाशुनाशाम् ' ॥ इति ॥

एतत्पद्यद्वयमप्यतीव क्लेशेनार्थबोधकमिति मत्वा स्वयमेव लक्षणसमन्वयप्रदर्शनव्याजेन व्याचख्यौ । व्याख्यानन्तु तत्रैवद्रष्टव्यम् ग्रन्थविस्तरभिया नलिख्यते । क्लेशप्रकारः परं प्रदर्श्यते ॥ पद्याभ्यां प्राक्तनं वाक्यमिदम् ' कदाचिदिष्टावाप्तिपूर्वकतदनवाप्तिर्यथा ' इति । अत्र कदाचिदित्यस्य इष्टावाप्तिपूर्वकतदनवाप्तावन्वयोभासते उदाहरणानुसारे कृते इष्टावाप्तावन्वयोवाच्यः, कदाचिदिति व्यस्तपदत्वं ज्ञायते समस्तपदत्वं वक्तव्यम् । तदनवाप्तिरित्यत्र तच्छब्दार्थो नज्ञायते । दीक्षितविवक्षितन्तु इष्टावाप्तीत्येतद्धटकमिष्टम् । तथा कुतोनज्ञायतइतिचेत् इष्टावाप्तेरिष्टानवाप्तेश्चापाततोविरोधात् । एवमस्मिन्नेकस्मिन्पदएवैतावान् क्लेशः ॥

(१) आद्यपद्येतु ' भगवत्पादयोररुणिमा भानुना स्वकिरणेष्वपेक्षित ' इति वक्तव्ये भगवत्पादयोर्मयूखान्परिकल्प्य मयूखानामरुणिमा अपेक्ष्यतइत्युच्यते ॥

(२) सचारुणिमात्र शोभाशब्देन विवक्षितः । शोभाशब्दस्यारुणिमवाचकत्वं नास्त्येव । किन्तु लक्षणापरंपरया ।

(३) ' किरणोत्करंप्रताप्य ' इत्युक्तया कुत्र प्रतापितवानिति जिज्ञासाजायते, अतो ' हुतवहे ' इत्यध्याहार्यम् । तदेवाध्याहार्यमित्यत्रच हेतुरुत्तरार्धे ' हुतवहादुद्धृते ' इति पदबलादितिवक्तव्यम् ।

एतावत्सञ्चारानन्तरमेव सूर्यकिरणानां रात्रावग्निप्रवेशप्रतिपादकश्रुतिर्ज्ञाप्यते, नतुपद्यश्रवणसमनन्तरमेव ।

(४) 'तत्रोद्धृते' इत्यत्र तच्छब्देन किरणोत्करएवग्राह्यइतिच नज्ञायते ।

(५) त्रल्प्रत्ययस्य भावलक्षणसप्तमीत्वं नज्ञायते किन्त्वधिकरणार्थत्वम् ।

(६) किरणोत्करस्यहुतवहादुद्धरणमात्रेण मन्दतापत्वं (अल्पमनःक्लेशवत्त्वम्) नसंभवति । किन्तु स्वकिरणानां शोणिमदर्शनादुद्दिष्टलाभान्मन्दतापत्वंवक्तव्यम्, शोणिमदर्शनादित्यध्याहारेणविना तादृशार्थो नलभ्यते ।

(७) हुतवहादुद्धृते किरणोत्करे मन्दतापो भवतीत्यन्वये विवक्षिते, मन्दतापत्वविरुद्धार्थकम् 'क्षणलुप्तरागेतापंभजती' तिवाक्यंमध्ये निविष्टम् । अतः क्लिष्टम् वाक्यान्तरसंकीर्णत्वरूपदोषदुष्टञ्च ।

(८) 'सः' 'हि' इतिपदयोः प्रयोजनं नास्त्येव । तेच केवलपादपूरणार्थे । अत एतावतः क्लेशान्विचिन्त्य पद्यमिदमेवं परिवर्तितं मया ।

'भानुर्निशासु किरणान्दहने प्रताप्य
त्वत्पादशोणिमतृषा वरद प्रभाते ।
दृष्ट्वारुणान् शिथिलताप उपैति तापं
भूयोपिरागरहितानवलोक्य नित्यम्' ॥

इति ॥ द्वितीयश्लोकेपि 'विधुः' इति कर्तृपदस्योत्तरार्धमध्यगतत्वात् 'अम्बुजकोशे' त्यादिविशेषणेन कविविवक्षितार्थस्य शीघ्रोपस्थित्यसंभवात्, सूर्यकिरणेभ्योऽम्बुजानां सुषमाप्राप्तेः प्रसिद्धत्वेपि अंबुजसुष-

मायास्सूर्यकिरणैरात्तत्वकथनात्, 'त्वद्वक्त्रसाम्य' मितिपद्यादिघटक पदस्य 'लब्ध्वे' त्युत्तरार्धादिघटकपदे कर्मतयान्वयस्य बहुदूरत्वाच्च क्लिष्टत्वात्तदप्येवं परिवर्तितं मया ॥

'चन्द्रस्त्वदीयमुखसाम्यमवाप्य मित्रा
　द्रम्याब्जकोशदलनात्परिपूरितश्रीः ।
राकासु केवलमथ क्रमहीयमानः
　शंसत्यनीत्युपचितां श्रियमाशुनाशाम्' इति ॥

॥ इतिविषमविचारः ॥



विषयः (६६) अथसमालङ्कारविचारः (क)

कुवलयानन्दकृता समालङ्कारे एवमुक्तम् । 'किञ्च यत्रातर्कितोत्कटानिष्टसत्त्वेपि श्लेषमहिम्ना इष्टार्थत्वप्रतिपत्तिस्तत्रापि समालङ्कारोऽप्रतिहतएव । यथा ॥

उच्चैर्गजैरटनमर्थयमानएव
　त्वामाश्रयन्निहचिरादुषितोस्मि राजन् ।
उच्चाटनं त्वमपि लंभयसे तदेव
　मामद्य नैवविफला महतांहिसेवा ॥

अत्र यद्यपि व्याजस्तुतौ स्तुत्या निन्दाभिव्यक्ति विवक्षायां विषमालङ्कारः । तथापि प्राथमिकस्तुतिरूपवाच्यविवक्षायां समालङ्कारो ननिवार्यते' इति ॥

दीक्षिताशयोऽयम् । समाळङ्कारोदाहरणतया पद्यमिदमद्यमया-प्रदर्शितम् । अत्रैव विषमालङ्कारोप्यस्ति विरुद्धयोरुभयोस्समविषमयोः

कथमेकत्रस्थितिरितिचेत् ? अंशभेदमवलंब्य । कोयमंशभेदः ? 'नैव विफलामहतांहिसेवा' इत्यर्थान्तरन्यासविधयोक्तो वाच्यार्थस्स्तुतिरूपः, तदनुगुणोच्चाटनशब्दश्लेषलब्धोच्चगजाटनरूपश्च । अयञ्चस्तुति रूपोर्थः ॥ एनमंशमवलंब्य समालङ्कारः । 'उन्नतगजाटनलिप्सया त्वा माश्रितवते मह्य मुच्चाटनं दूरनिरसनमेव दत्तवानसि । नीचसेवा मयाकृता धिक्वाम्' इति व्यज्यमाननिन्दारूपार्थमवलंब्य इष्टार्थसमुद्यमाद्निष्टस्याप्यवाप्तिरूपविषमालङ्कारः । इत्थञ्चोभयोस्सत्त्वेपि स्तुतिरूपवाच्यार्थमात्रमवलंब्य समालङ्कारत्वोपपत्तिरिति ॥

रसगङ्गाधरकारोऽत्र दोषं प्रकटयति । अत्र कुवलयानन्दकृता 'अत्रव्याजस्तुतौ स्तुत्या निन्दाभिव्यक्तिविवक्षायां विषमालङ्कार' इत्युक्तम् तदयुक्तम् कुतः? अत्रपद्ये व्याजस्तुत्यलङ्कार इति तेनैवकण्ठोक्तम् । सच निन्दाभिव्यक्तिमन्तरा नसंभवति । अतोव्याजस्तुत्याक्रान्ता निन्दा विषमालङ्कारस्य कथमवकाशं दद्यात् । निन्दामवलंब्यैवहि विषमालङ्कारस्सत्तां लभेत । व्याजस्तुत्यैवहि पूर्णश्चमत्कारः नतु तथा विषमेणेति ॥

एतत्प्रतिक्रियायै चन्द्रिकामर्मप्रकाशकारौ वैद्यनाथनागेशौ 'उच्चाटनशब्देन यदादूरनिरसनरूपानिष्टार्थग्रहणं तदैव 'अनिष्टस्याप्यवाप्तिश्च' इत्युक्तविषमालङ्कारस्पूर्तिः तदनन्तरञ्च निन्दाव्यज्यते निन्दाभिव्यक्त्यनन्तरं व्याजस्तुतिर्भवति । तथाच विषमालङ्कारस्य व्याजस्तुतिंप्रत्यङ्गत्वादङ्गाङ्गिभावेन सङ्करः तथाच 'विषमालङ्कारोप्यस्ती' त्याहतुः ॥

एतद्वाक्यार्थप्रतिपादकानि दीक्षितप्रभृतीनां सर्वेषामपि वाक्यानि निगूढार्थानि अतिसंग्रहरूपाणिचेति स्ववाक्यैरेवैवं विवृतानिमया ॥



विषयः (६७) समालङ्कारः (ख)

अत्रैवपद्ये जगन्नाथोऽपरन्दूषणमाह । 'मामुच्चाटनंलंभयसे' इति द्विकर्मकत्वं नसंभवति । 'गतिबुद्धी' त्यादिसूत्रस्य प्राचीनमतरीत्या नियमविधिपरत्वे नवीनमतरीत्या अपूर्वविधिपरत्वेच लभधातोर्गत्याद्यर्थकत्वाभावात् । किन्तु 'उच्चाटनं मया लंभयसे' इत्येव भाव्यम् इति ॥

अत्र रसगङ्गाधरव्याख्याकारोनागेशस्तु 'मामित्यत्र कर्मसंज्ञा 'गतिबुद्धी' त्यादिसूत्रेण नभवति । किन्तु 'अकथितञ्च' इति सूत्रेण। केवलस्य लभधातोः प्राप्तिरर्थः । साच संयोगानुकूलव्यापारः ण्यन्त लभधातोस्तु 'वह' धातुसमानार्थकत्वं वहधात्वर्थस्तु संयोगानुकूलव्यापारानुकूलव्यापारः' इत्याह । नागेशभट्टस्यायमाशयः । यथा । 'भृत्यो भारमापणं वहति' इत्यत्र आपणस्य अधिकरणत्वेनरूपेणाकथितत्वादापणस्य गौणकर्मत्वम्, तथा उच्चाटनं प्रधानकर्म मां गौण कर्म, लंभयसे प्रापयसि इत्युपपत्तिः इति ॥

एवंस्थिते, चन्द्रिकाकारः 'उच्चैर्गजैरटनं प्रति मां लंभयसे प्रापयसि' इति व्याचख्यौ ॥

अत्र 'अटनंप्रति' इति प्रतिशब्देन अटनस्य गौणकर्मत्वं ज्ञाप्यते । 'मां लंभयसे' इत्युक्तयाच अस्मच्छब्दनिर्दिष्टस्य प्रधानकर्मत्वं ज्ञाप्यते ॥

इत्थञ्च 'मा' मित्यत्र कर्मत्वे विवादग्रस्ते 'अकथितञ्च' इत्यनेन मामित्यस्य गौणकर्मत्वे साधनीये उच्चाटनंप्रतीति उच्चाटनस्य गौणकर्मत्वे सूचिते रसगङ्गाधरखण्डनप्रवृत्तस्य महान्विरोधः इति सन्तोविमृशन्तु ॥

॥ इति समालङ्कारविचारः ॥



विषयः (६८) अथाधिकालङ्कारविचारः (क)

अस्येदं लक्षणम् 'अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम्' इति । अस्यायमर्थः । पृथुलश्चासावाधारश्च । तस्मात् तदपेक्षया, आधेयस्य वस्तुनः अधिकप्रमाणत्वकथनम् अधिकालङ्कार इति । लक्षण समन्वयश्चेत्थम् यत्र महाजलौघे ब्रह्माण्डानि मान्ति, तत्र महाजले, ते गुणाः नमान्ति । महाजलं पृथुलाधारः । तस्मिन्नाधारे गुणानाममानकथनात् गुणानां महाजलापेक्षया अधिकप्रमाणत्वमुक्तमिति । उदाहरणवाक्ये ब्रह्माण्डानां कथनं ब्रह्माण्डानामप्याधारत्वेन महाजलस्य पृथुलत्वद्योतनाय । नतु लक्षणघटकांशसमन्वयाय, लक्षणवाक्ये तदनुगुणपदाभावात् ।

एवंस्थिते चन्द्रिकाकारः 'पृथुलात् आधेयापेक्षया विशालात् आधारात् आधेयस्याधिक्यवर्णनमेकोऽधिकालङ्कारः' इति लक्षण वाक्यं व्याचख्यौ । अत्र व्याख्याने आधारस्य पृथुलत्वमाधेयापेक्षयेत्युक्तं । आधेयाः प्रस्तुता गुणाश्चेत् तदपेक्षयामहाजलस्य पृथुलत्वमेव नास्तीत्यव्याप्तिः 'तत्रगुणाः नमान्ति' इत्याधेयानामेव गुणानां पृथुलत्वकथनात् ।

यद्याधेयद्वयं परिकल्प्य तत्रैकं पृथुलमन्यदल्पम् तत्राल्पादाधेयात्पृथुलोय आधारस्तदपेक्षया पृथुलाधेयस्याधिक्यवर्णनमित्युच्यते । तदपि नसंभवति । तावदर्थप्रतिपादकाक्षराणामसत्त्वाल्लक्षणवाक्ये । व्याख्यानेपि तादृशार्थसूचकं पदं ननिविष्टम् । किन्तु 'आधेयापेक्षया विशालादाधारादाधेयस्याधिक्यम्' इत्येवोक्तं चन्द्रिकायाम् । एवंतर्हि 'भेकाःकोकाजलेयत्र तत्रमान्तिनतेगुणाः' इत्यत्राप्यधिकालङ्कारस्स्यात् भेककोकरूपाधेयापेक्षया पृथुलाद्वापीरूपाधाराद्गुणानामाधेयानामाधिक्यवर्णनात् । तस्मादत्राधारस्य पृथुलत्वमापेक्षिकं नवक्तव्यम् । किन्तु

पृथुलत्वेन लोकप्रसिद्धत्वम् । तादृशश्च भूमण्डलजलधिगगनमेर्वादिरूपमेव ॥



विषयः (६९) अधिकविचारः (ख)

अत्रैवोदाहृतस्य ' युगान्तकालप्रतिसंहृतात्मनः ' इत्यादिशिशुपालवधप्रथमसर्गत्रयोविंशश्लोकस्य, चन्द्रिकायां ' युगान्तकाले प्रलयकाले प्रतिसंहृतः स्वस्मिन्लयंप्रापितः आत्मा स्वविलासरूपः प्रपञ्चः येन ' इति विग्रहवाक्यार्थः प्रदर्शितः ॥ मल्लिनाथसूरिणातु ' युगान्तकाले प्रतिसंहृतात्मनः आत्मन्युपसंहृताः आत्मानः जीवाः येन ' इति । मल्लिनाथसूरिपक्षे ' क्षेत्रज्ञ आत्मापुरुषः ' इति कोशस्वारस्यम् ॥ चन्द्रिकाकारपक्षे, आत्मशब्दस्य ' मृदात्मकोघट इत्यत्रेव स्वरूपवाचकत्वमङ्गीकृत्य ततश्च जडस्य प्रपञ्चस्य ज्ञानरूपब्रह्मात्मकत्वं कथमिति शङ्कायां ब्रह्मोपादानकत्वाज्जगतः उपादानस्यच द्विविधत्वाज्जगत्प्रति ब्रह्मणो विवर्तोपादानत्वात् इत्येतावन्तोऽर्थाः अद्वैतवेदान्तिपरिभाषिताः कल्पनीयाः इति विशेषः ॥



विषयः (७०) अधिकविचारः (ग)

अत्रैव चन्द्रिकायाम् अधिकालंकारसामान्यलक्षणमुक्तम् ' आधाराधेयान्यतरस्य तनोरप्याधिक्यवर्णनम् ' इति ॥ अत्र लक्षणे ' आधाराधेयान्यतरस्य ' इत्यस्य ' तनोः ' इति विशेषणं दत्तम् । इत्थञ्च ' तनोराधाराधेयान्यतरस्याधिक्यवर्णनम् ' इतिलक्षणं फलितम् ॥

एतच्च लक्षणं पूर्वोक्तोदाहरणेषु कथं समन्वितं भवतीति विचार्यते ॥

तत्र प्रथमभेदस्याद्योदाहरणे ' ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः ' इत्यत्र प्रादेशिकत्वात्तनुभूतानामाधेयत्वेन वर्णितानाञ्च

गुणानां 'नमान्ति' इति महाजलापेक्षया आधिक्यं वर्णितमिति समन्वयः ॥

द्वितीयोदाहरणे 'युगान्तकाल' इत्यत्र परिमितानां कृष्णमुदां जगदुपसंहाराधिकरणत्वेन महत्यपि कृष्णशरीरे 'नममुः' इत्यमान कथनात्तनोराधेयस्याधिक्यं वर्णितमिति लक्षणसमन्वयः ॥

द्वितीयभेदस्याद्योदाहरणे 'कियद्वाग्ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव' इत्यत्र, 'एते इति प्रत्यक्षदृष्टमहावैभवत्वेनोक्तानाङ्गुणानां 'विश्राम्यन्ति' इति असंबाधावस्थानोक्त्या आधारस्यवाग्ब्रह्मण आधिक्यंवर्णितम्' इति दीक्षितवाक्याद्गुणानामाधारभूतस्य वाग्ब्रह्मण आधिक्ये वर्णनीये तस्य तनुत्वं वक्तव्यम् । चन्द्रिकोक्तसामान्यलक्षणे 'तनोः' इत्याधारविशेषणात् । वाग्ब्रह्मणि तनुत्वं वस्तुतो नास्ति । स्फोटवादिवैयाकरणादिमतानुसारेणालङ्कारिकैरपि शब्दस्यनित्यत्वव्यापकत्वाद्यङ्गीकारस्य काव्यप्रकाशे ध्वनिप्रस्तावे स्थापितत्वात् । अतएव 'कियद्वाक्' इत्येतावन्मात्रमनुक्त्वा 'कियद्वाग्ब्रह्म' इति ब्रह्मपदमुक्तम् । ब्रह्मशब्दस्य 'बृहबृहिवृद्धौ' इति धातुबलाद्व्यापकवाचकत्वात् । इत्थञ्च तनोराधारस्याधिक्यवर्णनं नास्ति । किन्तु महतएवेत्यव्याप्तिः । 'अहो विशालं भूपाल भुवनत्रितयोदरम्' इत्युदाहरणेपि प्रादेशिक यशोराश्यपेक्षया महतो भुवनत्रितयोदरस्य महत्त्वं प्रत्यक्षसिद्धमेवेति तत्रापि तनुत्वं नास्तीत्यव्याप्तिः ॥

इदञ्चसामान्यलक्षणं चन्द्रिकाकारेण नस्वतः कल्पितम् । किन्तु रसगङ्गाधरकारेणोक्तमेव किञ्चित्परिवर्तनेन लिखितम् । तत्रैवं लक्षण वाक्यम् 'आधाराधेययोरन्यतरस्यातिविस्तृतत्वसिद्धिफलकमितरस्यातिन्यूनत्वकल्पनमधिकम्' इति ॥ अस्यायमर्थः । आधारस्यातिविस्तृतत्वसिद्ध्यै आधेयस्यातिन्यूनत्वकल्पनमेकमधिकम् । आधेयस्यातिविस्तृतत्वसिद्ध्यै आधारस्यातिन्यूनत्वकल्पनमपरमधिकमिति ॥

अत्र किञ्चिदस्वारस्यं गृहीतश्चन्द्रिकाकारेणेत्यहंमन्ये । किन्तदिति चेत् । अधिकसंज्ञकस्यालङ्कारस्यातिन्यूनत्वकल्पनमिति लक्षणकल्पनमयुक्तमिति ॥

अतोऽधिकालङ्कारस्य आधिक्यवर्णनमेव लक्षणमुचितमिति मत्वा जगन्नाथेन लक्षणे विधेयकोटिनिविष्टमतिन्यूनत्वं 'तयोः' इति पदेनोद्देश्यकोटौ निवेश्य, 'अन्यतरस्यातिविस्तृतत्वफलक' मित्युद्देश्य कोटिनिविष्टमाधिक्यं 'आधिक्यवर्णनमधिक' मितिविधेयकोटौ निवेशयामास चन्द्रिकाकारः ॥

परन्तु चन्द्रिकोक्तं लक्षणं दीक्षितोक्तलक्षणविरुद्धम् । तथाहि । दीक्षितोक्तद्विविधाधिकालङ्कारयोरप्याधिक्यवर्णनमेव लक्षणम् । आद्ये आधारापेक्षया आधेयस्याधिक्यम् । द्वितीयस्मिन् आधेयापेक्षया आधारस्याधिक्यम् । आद्ये आधारस्य पृथुलत्वम् । द्वितीयस्मिन्नाधेयस्य पृथुलत्वमुक्तम् । इत्थञ्चोभयोरपि लक्षणयोः पृथुलत्वमेव घटकम् , नतु तनुत्वम् । 'आधेयाधिक्यवर्णनम्' 'यदाधाराधिक्यं तदपि तन्मतं' इतिच तदुभयलक्षणात् । एतस्मादेव कारणादेतल्लक्षणस्य द्वितीयाधिकालङ्कारोदाहरणे अव्याप्तिरुक्तरीत्या प्रसक्ता । किञ्च दीक्षितलक्षणे 'आधिक्यवर्णन' मितिवर्णनं स्थितस्य कथनम् । जगन्नाथलक्षणे 'अतिन्यूनत्वकल्पन' मिति असतोप्याहार्यत्वेन कथनमिति महान्भेदः । तत्तदुदाहरणयोरप्येवम् । 'अहो विशालं भूपाल भुवनत्रितयोदरम्' इत्यत्र विशालस्यैव भुवनत्रितयोदरस्य 'अहोविशाल' मिति विशालत्वं स्थितमेव कथितम् । जगन्नाथोदाहरणेतु 'लघुतरब्रह्माण्ड सद्मोदरे' इति ब्रह्माण्डस्यातिविशालत्वेन प्रसिद्धस्यैव 'लघुतरे' ति विशेषणेनातिन्यूनत्वमाहार्यतया कल्पितमिति महदन्तरमुभयोर्लक्षणयोरुदाहरणयोश्च ॥

एवंस्थिते चन्द्रिकाकारस्स्वविरोधिनोजगन्नाथादपहृत्य सामान्यलक्षणं स्वयमनुगमभट्टाचार्यइव निवेशयन्स्वग्रन्थे स्वमूलभूतदीक्षितग्रन्थमेव दूरतस्तत्याजेति सुधियो विभावयन्तु ॥

इदन्तु दीक्षितग्रन्थानुसारि सामान्यलक्षणम् । 'आधाराधेयान्यतरस्य पृथुलात्तदन्यतरस्मादाधिक्यवर्णन' मिति ॥

॥ इति अधिकालङ्कारविचारः ॥



विषयः (७१) अथान्योन्यालङ्कारविचारः

यत्र परस्परमुभयोरुपकारो वर्ण्यते तत्रान्योन्यालङ्कारः । शशिना त्रियामा भाति । त्रियामया शशी भाति । दिवा शशिनो भानं नास्ति । अमारात्रिः पूर्णिमारात्रिवन्नभातीति रात्रिशशिनोः परस्परोपकाराद्भान मित्यन्योन्यालङ्कार इति भावः । तथोदाहरणान्तरन्दर्शितं कुवलयानन्दे,

'यथोर्ध्वाक्षः पिबत्यंभः पथिको विरलाङ्गुलिः ।
तथा प्रपापालिकापि धारां वितनुते तनूम् ॥'

इति ॥ अस्येदं तात्पर्यम् । कश्चित्पथिकः पिपासितः पानीयशालां गत्वा प्रपापालिकया करकापवर्जिताञ्जलधारामञ्जलिना पिबन् पानेन सौहित्ये सति पुनस्तन्मुखावलोकनावकाशो नभवेदिति विचिन्त्य चिरतरतन्मुखावलोकनाय स्वाङ्गुलीर्विरलीचकार अञ्जलिगतजलस्य बहिर्निस्सारणाय । सापि चिरतरतन्मुखावलोकनाय जलधारां सूक्ष्माञ्चकार । तथाचोभावपि चिरतरमुखावलोकनरूपं स्वस्वमनोरथं निरवर्तयेताम् ॥

नन्वत्र स्वस्वोपकारएवोक्तः नपरस्परोपकार इति नान्योन्यालङ्कारइतिचेन्न । चिरतरप्रपापालिकामुखावलोकनरूपः पथिकस्य मनो-

रथः प्रपापालिकया धारातनूकरणेन संपादितः पथिकेनापि स्वाङ्गुली विरलीकरणेन प्रपापालिकायाश्चिरतर पथिकमुखावलोकनरूपमनोरथ स्संपादितइति परस्परोपकारोप्यस्तीति अन्योन्यालङ्कारोपपत्तेः । इति ॥

अत्र कुवलयानन्दलक्षणसमन्वयवाक्ये 'अत्र प्रपापालिकायाः' इत्यादावव्युत्पत्तिदोषं रसगङ्गाधरकार उद्घाटयामास, तत्प्रकारश्चैवम् । कुवलयानन्दे वाक्यद्वयमेवं दृश्यते । 'प्रपापालिकायाः स्वमुखावलोकनमभिलषन्त्याः पथिकेनोपकारः कृतः' इति । 'स्वमुखावलोकनमभिलषतः पथिकस्य प्रपापालिकयोपकारः कृतः' इतिच ॥ अत्र प्रपापालिकाविशेषणे एकं स्वपदम्, पथिकविशेषणेचैकं स्वपदं घटकम्, स्वपदं किं वोधयतीति चेत्? यस्य विशेषणे स्वपदं घटकं तं विशेष्यं बोधयतीति व्युत्पत्तिः ॥ यथा 'स्वदाररतानां विप्राणामहं भक्तः' इत्यत्र 'विप्राणा' मित्यस्य विशेषणे 'स्वदाररताना' मिति पदे घटकं स्वपदम्, तच्च विशेष्यभूतान्विप्रान्वोधयति विप्रास्स्वदाररता इति । नतु 'मद्दाररताविप्रा' इति ॥ एवं 'देवदत्तपुत्रस्स्वमातृभक्तः' इत्यत्र देवदत्तपुत्रस्य विशेषणं 'स्वमातृभक्त' इति । तद्घटकं स्वपदं देवदत्तपुत्रं बोधयति, 'देवदत्तपुत्रः देवदत्तपत्न्यां (पुत्रोमातरि) भक्त' इति । नतु 'देवदत्तपुत्रो देवदत्तमातरि भक्त इति ॥

एवं प्रकृतेपि प्रपापालिकाया विशेषणे 'स्वमुखावलोकनमभिलषन्त्याः' इत्यत्र स्वपदेन विशेष्यभूतायाः प्रपापालिकायाएव बोधो न्याय्यः, दीक्षितविवक्षितस्तु पथिकः । एवं द्वितीयवाक्येपि 'स्वमुखावलोकनमभिलषतः पथिकस्य' इत्यत्र पथिकविशेषण घटकस्य स्वपदस्य पथिकवाचकत्वं न्याय्यम्, दीक्षितविवक्षितातु प्रपापालिका । इत्यव्युत्पत्तिः ॥

एवं विशेषणघटकस्वपदस्य विशेष्यबोधकत्वंविना तदन्यवोधकत्वे अभवन्मतयोगत्वरूपः काव्यदोष उदाहृतः काव्यप्रकाशे, 'निज

तनुस्वच्छलावण्यवापीसंभूतांभोजशोभां विदधदभिनवो दण्डपादो भवान्याः ' इत्यत्र । अत्र निजपदं दण्डपादविशेषणघटकम् । तेनच दण्डपादएव बोधनीयः, भवानीतु बोध्यते । निजपदेन दण्डपादस्यैव बोधने बाधकन्दृश्यते । पादस्य शरीरं नास्ति शरीरैकदेशावयवभूतत्वात् । भवान्यास्तु शरीरं वर्तते तल्लावण्यवापीसंभूतांभोजशोभातु पादस्योपपन्ना । तथाचोक्तनियमानुसारेण स्वपदस्य पादबोधकत्वे वक्तव्ये भवानीबोधकत्वादत्रपद्ये दोषइति ॥

अत्र चन्द्रिकाकारः ' नायंनियमः, ' यद्विशेषणघटकं स्वपदम् तद्विशेष्यबोधकम् ' इति । किन्तु नियमशरीरमेवम्, ' मुख्यविशेष्यविशेषणघटकः स्वनिजादिशब्दो मुख्यविशेष्यं बोधयति ' इति । अस्य नियमस्य कुत्र प्रसक्तिरितिचेत् । भवदुक्तएव ' देवदत्तपुत्रस्स्वमातृभक्त ' इत्यत्र । तथाहि ' स्वमातृभक्त ' इति देवदत्तपुत्रे विशेषणम् विशेष्येष्यंशद्वयं वर्तते । पुत्रो मुख्यविशेष्यम् । देवदत्तसंबन्धित्वं पुत्रे विशेषणम् । मुख्यविशेष्यविशेषणघटकमत्रस्वपदम् । तच्च मुख्यविशेष्यभूतं पुत्रमेव बोधयति नतु गौणं देवदत्तम् ॥

काव्यप्रकाशोदाहृतदोषस्तु उक्तनियमविरुद्धत्वप्रयोज्यः तथाहि । तत्र भवानीसंबन्धित्वविशिष्टदण्डपादो विशेष्यम् । दण्डपादो मुख्यविशेष्यम् । भवानीतु न । निजेत्यादितु मुख्यविशेष्यभूतदण्डपादविशेषणम् । तद्घटकं निजपदम् । निजपदेन मुख्यविशेष्यभूतो दण्डपादएवोक्तनियमानुसारेण ग्राह्यः, भवानीतु गृह्यत इति दोषत्वम् ॥

' यद्विशेषणघटकं स्वनिजादिपदं तद्विशेष्यबोधक ' मिति रसगङ्गाधरकारोक्तनियमस्यतु व्यभिचारो दृश्यते । तथाहि । ' स्वाश्रितानां विप्राणामयं पालकः ' इत्यत्र ' स्वाश्रिताना ' मिति ' विप्राणा ' मित्यस्य विशेषणम्, विशेषणघटकञ्चस्वपदम् तस्य तदुक्तनियमानु-

सारेण विशेष्यभूतविप्रबोधकत्वं वक्तव्यम् । तत्तु नास्ति । ' अयम् ' इति मुख्यविशेष्यभूतेदंपदवाच्यबोधकत्वात् । एवं ' स्वाज्ञाकारिणां भृत्यानामयं कल्पवृक्षः ' इत्यादावपि ॥ प्रकृतेतु ' स्वमुखावलोकनमभिलषन्त्याः प्रपापालिकायाः पथिकेनोपकारः कृतः ' इत्यत्र प्रपापालिकाविशेषणगतमपि स्वपदं न मुख्यविशेष्यविशेषणगतमित्यस्मदुक्तनियमस्यात्राप्रसक्त्या पथिकबोधकमपि भवति ॥

ननु—एवंसति ' स्वदाररतानां विप्राणामहं भक्तः ' इत्यत्र विप्रविशेषणघटकस्य स्वपदस्य भवदुक्तरीत्या विप्रबोधकत्वनियमाभावेन ' मदीयदाररतानां विप्राणामहंभक्तः ' इत्येवार्थप्रतीतिस्स्यात् इतिचेत् । मैवम् । तात्पर्यस्यैव नियामकत्वेनापत्त्यभावात् इत्याह ॥

वयमत्रैवमुत्पश्यामः । ' यद्विशेषणघटकत्वेन स्वनिजादिशब्दा उपात्तास्तद्बोधकाः ' इति नियमस्य ' स्वाश्रितानां विप्राणा मयं पालकः' इत्यादौ विप्रविशेषणघटकस्य स्वपदस्य विप्रवाचकत्वाभावेन व्यभिचारात् , ' मुख्यविशेष्यविशेषणघटकस्यैव स्वनिजादिशब्दस्य मुख्यविशेष्यमात्रबोधकत्व ' मिति नियमस्यापि ' स्वदाररतानां विप्राणामहं भक्तः ' इत्यत्र स्वपदस्य मुख्यविशेष्यभूतास्मच्छब्दविशेषणाघटकत्वेनाप्रसक्त्या ' मदीयदाररतानां विप्राणा महं भक्त ' इत्यस्यार्थस्यापत्तौ तद्वारणाय ' यद्विशेषणघटके ' त्यादिजगन्नाथोक्तनियमस्यावश्यमङ्गीकार्यत्वाच्च परस्परव्याघातः । अन्ततोगत्वा चन्द्रिकाकारेण नियामकं तात्पर्यमेवेत्यभिहितम् । तात्पर्यस्यैव नियामकत्वे ' निजतनुस्वच्छे ' त्यादिकाव्यप्रकाशोदाहरणेपि भवानीतात्पर्येणैव निजपदप्रयोगोपपत्त्या अभवन्मतयोगत्वरूपदोषाप्रसक्त्या तद्दोषस्थापकस्वोक्तिविरोधस्स्फुटएव । इत्थञ्च जगन्नाथवैद्यनाथपक्षयोरुभयोरपि अनिर्वाहादन्ययैव रीत्या स्वपदस्य शक्तिर्निर्णेया ॥

तदुक्तं शक्तिवादे स्वपदशक्तिनिरूपणावसरे गदाधरभट्टाचार्यैः 'साक्षात्परम्परयावा यः स्वार्थस्यविशेष्यः, यश्च समभिव्याहृतक्रिया कारकः तदुभयत्र स्वपदस्य शक्तिः' इति ॥ एवमङ्गीकारे 'स्वदाररतानां विप्राणामहं भक्तः' इत्यत्र स्वपदार्थविशेष्यत्वाद्विप्राणां स्वपदस्य विप्रबोधकत्वम् । 'स्वाश्रितानां विप्राणामयं पालकः' इत्यत्र समभिव्याहृता क्रिया पालनरूपा, तत्कारकः, पालनेकर्तृभूतःकारकः 'अय' मितीदंपदार्थः तद्बोधकत्वं स्वपदस्य इत्युभयत्र निर्वाहः ॥

'निजतनुस्वच्छे' त्यादिकाव्यप्रकाशोदाहरणेतु निजपदविवक्षिताया भवान्या निजपदार्थविशेष्यत्वं नास्ति, निजेत्यादेर्दण्डपादविशेषणत्वात् । समभिव्याहृतक्रियाकारकत्वमपिनास्ति, 'भवान्या' इति षष्ठ्याः कारकत्वाभावात् । तस्मादुक्तनियमानाक्रान्तत्वाद्दोषत्वम् ॥

प्रकृते दीक्षितवाक्ये 'स्वमुखावलोकनमभिलषन्त्याः प्रपापालिकायाः पथिकेनोपकारः कृतः' इत्यत्र प्रपापालिकायाः स्वपदार्थविशेष्यत्वात्स्वपदेन प्रपापालिकैव बोध्यत इति जगन्नाथपक्षोप्युपपन्नः । पथिकस्य समभिव्याहृतोपकारक्रियाकर्तृत्वात्समभिव्याहृतक्रियाकारकत्वमिति स्वपदबोध्यत्वं संपाद्य दीक्षितपक्षोपिसमर्थनीयः इति ॥

॥ इत्यन्योन्यविचारः ॥



विषयः (७२) विशेषालङ्कारविचारः

आद्यविशेषालङ्कारोदाहरणमिदं पद्यम् ।

'कमलमनम्भसि कमले कुवलयमेतानि कनकलतिकायाम् ।
साच सुकुमारसुभगेत्युत्पातपरंपरा केयम् ॥'

इति ॥ आन्ध्रलिपिपुस्तके, संस्कृताक्षरपुस्तके, प्राचीनतालपत्रपुस्तकेच ' कुवलयमेतानि ' इत्येव पाठो दृश्यते, रसिकरञ्जनीपुस्तकेतु ' कुवलयमेतेच ' इति ॥

अत्र चन्द्रिकायाम् ' कुवलये नेत्रे एतानि कमलकुवलयानि ' इति व्याख्यातम् ॥ एतद्व्याख्यानुसरणे ' कुवलयमेतानि ' इति पाठस्त्याज्यः ' कुवलये नेत्रे ' इति द्विवचनान्ततयोपात्तत्वादेकवचनांत पाठविरोधात् ॥ किञ्च अंभोभिन्ने अधिकरणे कमलं वर्तते कमले कुवलयं वर्तते इति कमलकुवलययोर्द्वयोरेव निर्देशादेतानीति बहुवचनमनुपपन्नं भवेत् ॥ चन्द्रिकापाठाङ्गीकारेण ' कुवलये एतानी ' त्युक्तौ आर्यावृत्तद्वितीयपादापेक्षिताः अष्टादशमात्रा न भवन्ति किन्त्वेकोनविंशतिः ॥

अतः ' कुवलयएतानी ' त्युक्तौ व्याकरणविरोधः । ' कुवलये ' इत्यस्य द्विवचनान्तत्वात् ' ईदूदेद्द्विवचनं प्रगृह्यम् ' ' प्लुतप्रगृह्या अचिनित्यम् ' इति प्रकृतिभावसन्धेरावश्यकत्वेन तदभावात् ॥ तस्मात् ' कुवलयेएतानी ' त्यत्र एतच्छब्दं विहाय ' तानि ' इति तच्छब्दनिवेशे सप्तदशैवमात्रा भवन्ति । तदापि छन्दोभङ्गः । नचात्र पादान्तस्थो लघुः, येन सप्तदशमात्राभिरेवनिर्वाहस्स्यात् । किन्तु ' कनकलतिकायाम् ' इत्यत्र ' या ' सितिगुरुरेववर्तते ॥

' कुवलयमेतेच ' इति रसिकरञ्जनीपाठाङ्गीकारेतु ' एतेच ' इति द्विवचनान्तैतच्छब्देन कमलकुवलययोर्द्वयोर्ग्रहणसामञ्जस्येपि ' कुवलय ' मित्येकवचनान्तकुवलयशब्देन द्वयोर्नेत्रयोर्निगरणमस्वरसम् । ' पश्यनीलोत्पलद्वन्द्वान्निस्सरन्तिशिताश्शराः ' इति नीलोत्पलद्वन्द्वशब्देन नेत्रयोर्निगरणात्, कटाक्षाणां बहुवचनान्तशरशब्देन निगरणाच्च ॥

किञ्च 'कमलमनम्भसि' इत्यत्रापि कमलशब्देनैव नेत्रयोर्निगरणमपि स्यात् एकवचनान्तकुवलयशब्देन द्वयोर्नेत्रयोर्निगरणमिव एकवचनान्तकमलशब्देनापि द्वयोर्नेत्रयोर्निगरणसम्भवात् 'अम्भोरुहाक्षि' 'सरसिजाक्षि' इत्यादौ नेत्रयोरपि कमलसादृश्यसत्त्वाच्च ॥

अतः एकवचनान्तत्वात्कमलशब्देन मुखस्यैव निगरणम्, द्विवचनान्तेन 'कुवलये' इति शब्देन लोचनयोर्निगरणमेवोचितम् तस्माद्रसिकरञ्जनीपाठेप्यस्वारस्यम् ॥

काव्यप्रकाशप्रदीपयोस्तु 'चकुवलयेतानि' इति दृश्यते । तत्र छन्दस्सामञ्जस्येपि 'नपादादौ खल्वादयः' इति वामनसूत्रात्पादादौ चकारस्य दुष्टत्वात्प्रयोजनाभावात्पादपूरणमात्रार्थत्वाच्चास्वारस्यम् ॥

ननु—'कुवलयमेतानि' 'कुवलयएतानि' 'कुवलयेएतानि' 'कुवलयेतानि' 'कुवलयमेतेच' 'चकुवलयेतानि' इति षण्णामपि पाठानामर्थतात्पर्यच्छन्दो व्याकरणालङ्कारिक मर्यादाविरोधाद्दूरीकरणे कथं निर्वाह इति चेत्?

इत्थम्—'कमलमनंभसि कमले कुवले एतानि कनकलतिकायाम्' इत्येव पाठआदरणीयः । 'कुवले' इत्यस्य 'कुवलये' इत्येवार्थः । 'कुवालयं कुवलयं कुवालं कुवलं कुवम्' इति द्विरूपकोशात् ॥

अस्मिन्पाठेतु 'कुवले' इति द्विवचनान्तेन कुवलशब्देन नेत्रद्वयस्य निगरणमुपपन्नम् । कमलस्य कुवलययोश्च त्रयाणां ग्रहणादेतानीति बहुवचनमुपपन्नम् । 'कुवलेएतानि' इति प्रकृतिभावसन्धिरुपपन्नः । आर्याद्वितीयपादस्याष्टादशमात्रावत्त्वमुपपन्नम् । तस्मा 'त्कुवलेएतानी' त्येवपाठस्साधीयान् ॥

॥ इति विशेषालङ्कारविचारः ॥



विषयः (७३) अथव्याघातालङ्कारविचारः (क)

व्याघातालङ्कारोदाहरणवाक्यस्य 'यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः' इत्यस्य चन्द्रिकायामेवं व्याख्या ।

'यैः कटाक्षविभ्रमादिभिः जगत् प्रीयते सन्तुष्यति । तैरेव कुसुमायुधोहन्तीत्यन्वयः' इति ॥ अत्र 'यैः' इत्यस्य 'कटाक्षविभ्रमादिभि' इति व्याख्यानं नतावतीं मुदमावहति सहृदयानाम् । 'जगद्धन्ती' ति लोकहिंसन मुक्तम् । कोहन्तीतिचेत् 'कुसुमायुध इति कर्ता निर्दिष्टः । हननसाधनत्वमायुधस्य सिद्धम् । कुसुमान्येव मन्मथस्यायुधमितिच प्रसिद्धम् । 'तैरेवकुसुमायुधोहन्ती' त्यत्र 'तै' रिति करणतृतीयया हननसाधनत्वं कुसुमानामेवोचितमिति तच्छब्दवाच्यत्वं कुसुमानामेव । यत्तच्छब्दयोरेकार्थकत्वाच्च यैरित्यस्य 'कुसुमैः' इत्येवार्थस्साधुः । कुसुमानाञ्जगत्प्रीतिजनकत्वं लोकानुभवसिद्धम् । उक्तञ्चकालिदासेन, 'कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्' इति । यैरित्यस्यकुसुमार्थकत्वस्फोरणायैव कुसुमायुध इति साभिप्रायं विशेष्यमुक्तम् नतु 'विषमायुधः' इति ॥

कटाक्षविभ्रमादीनान्तु लोकसामान्यप्रीतिजनकत्वं नास्ति, विरक्तानां वृद्धानां षण्डानाञ्च कटाक्षविभ्रमादिभिः प्रीत्यजननात् । कुसुमानान्तु भगवदाराधनोपकरणत्वेनसुगन्धसौन्दर्यादिगुणैश्च विरक्तादीनामपि सन्तोषजनकत्वं संभवतीति 'यै' रित्यस्य 'कुसुमै' रित्येवार्थोयुक्ततमः नतु 'कटाक्षविभ्रमादिभिः' इति ॥



विषयः (७४) व्याघातः (ख)

'सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी' इति लक्षण

लक्षितद्वितीयव्याघातोदाहरणवाक्यस्य 'दयाचेद्वाल इति मय्यपरित्याज्यएव ते' इत्यस्य व्याख्या चन्द्रिकायामेवं दृश्यते ॥

'दयेति दिग्विजयाय प्रस्थितं राजानं प्रति युवराजस्योक्तिः । बाल इत्यतो मयि दया यौवराज्येस्थापनरूपा चेत् तदा तस्मादेवहेतोरहन्तवापरित्याज्यएव किन्तु स्वेन सह नेतव्य इत्यर्थः' इति ॥

अत्र 'दया यौवराज्ये स्थापनरूपा' इति यल्लिखितं तदनुचितम् । दयानाम परदुःखासहिष्णुत्वमन्तःकरणधर्मः । (यौवराज्ये) स्थापनं नाम गतिनिवृत्तिप्रयोजकव्यापारः 'अत्रैवतिष्ठ' इत्याज्ञारूपो वाग्व्यापारः । इत्थञ्च तयोर्भिन्नत्वाद्दया यौवराज्ये स्थापनरूपा न भवति किन्तु दयाकार्यं यौवराज्यस्थापनमिति ॥

॥ इति व्याघातालङ्कारविचारः ॥



विषयः (७५) अथएकावलीविचारः

'गृहीतमुक्तरीत्याऽर्थश्रेणिरेकावलीमता' इत्येकावलीलक्षणम् । अस्यार्थः । अर्थानां श्रेणिः परम्परा साच गृहीतमुक्तरीत्यावक्तव्या । गृहीतमुक्तरीतिर्नाम, प्रथमं विशेष्यनिर्देशः प्रथमं प्रति द्वितीयस्य विशेषणत्वेन निर्देशः, द्वितीयंप्रति तृतीयस्येत्यादिरूपेणैकारीतिः । प्रथमं विशेषणनिर्देशः, द्वितीयस्य विशेष्यतया निर्देशः द्वितीयनिरूपितविशेष्यतया तृतीयस्य इत्यपरा रीतिः तत्र प्रथमरीत्योदाहरणं 'नेत्रेकर्णान्तविश्रान्ते' इत्यादि ॥

अत्र 'नेत्रे' इति प्रथमं विशेष्यं निर्दिष्टम् ततस्तद्विशेषणं 'कर्णान्तविश्रान्ते' इति । कर्णयोस्ततोदोस्तंभदोलिनाविति विशेषणम् इत्यादिरीत्यासमन्वयः । द्वितीयरीत्यायथा ।

'दिक्कालात्मसमैव यस्य विभुता यस्तत्र विद्योतते
यत्रामुष्य सुधीभवन्ति किरणा राशे स्स यासामभूत् ।
यस्तत्पित्त मुपस्सु योऽस्य हविषे यस्तस्य जीवातवे
वोढा यद्गुणमेष मन्मथरिपोस्ताः पान्तु नो मूर्तयः' ॥

इति ॥ अत्र 'दिक्कालात्मसमा' इति प्रथमं विशेषणनिर्देशः कृतः ततो 'यस्यविभुता' इति विशेष्यनिर्देशः यच्छब्देनाकाशो विवक्षितः । 'यस्तत्र विद्योतते' इत्यत्र 'तत्रे' ति तच्छब्देनाकाशः, यच्छब्देन सूर्यश्च विवक्षितः, 'आकाशाधिकरणकत्वविशिष्टद्योतनाश्रयस्सूर्यः' इति बोधे उत्तरस्सूर्यो विशेष्यम्, पूर्व आकाशो विशेषणम् ॥

एवंरीत्या 'यस्तत्पित्त' मित्यत्र तच्छब्देन पूर्वोक्ता आप उच्यन्ते यच्छब्देनाग्निरुच्यते । उत्तरस्य यच्छब्दवाच्यस्याग्नेः पूर्वोक्तानामपां पित्तत्वं विशेषणम् । 'उपस्सुयोस्यहविषे' इत्यत्र अस्य हविषे अग्निसंबन्धिहविःप्रदानाय यः यजमानः प्रभवतीत्यर्थः । 'अस्ये' तीदंशब्दवाच्यस्याग्नेर्विशेषणकोटिप्रवेशः यच्छब्दवाच्यस्योत्तरस्य यजमानस्य विशेष्यत्वम् । 'यस्तस्यजीवातवे' इत्यत्र तच्छब्दवाच्यः पूर्वोक्तो यजमानः यच्छब्दवाच्य उत्तरो वायुः पूर्वस्य यजमानस्य विशेषणकोटिप्रवेश इति द्वितीयरीत्या समन्वयः ॥

एवं समन्वयेपि 'यत्रामुष्य सुधीभवन्तिकिरणाः' 'राशेस्स यासामभूत्' 'वोढा यद्गुणमेषः' इति वाक्यत्रयेपि प्रथमरीत्यैव समन्वयो भवति, नतु द्वितीयरीत्या । तथाहि ॥ अमुष्य किरणा यत्र सुधीभवन्ति इत्यन्वयः । अमुष्यकिरणाः पूर्वोक्तसूर्यसंबन्धिकिरणा इति विशेष्यवाचकं पदम् । यत्र सुधीभवन्ति यदधिकरणकसुधात्वाश्रयाः इति विशेषणवाचकं पदम् । चन्द्रमण्डलपतितानां सूर्यकिरणाना ममृतत्वं भवतीति भावः । अत्र पूर्वस्य सूर्यस्य विशेष्यकोटिप्रविष्टत्वाद्विशेष्यत्वम् । उत्तरस्य चन्द्रस्य विशेषणकोटिप्रविष्टत्वाद्वि-

शेषणत्वमिति वैपरीत्यम् ॥ एवं 'राशेस्सयासामभूत्' इत्यत्रापि सः पूर्वोक्तश्चन्द्रः इति पूर्वस्य चन्द्रस्य विशेष्यत्वम् । यासां राशे रभूत् यच्छब्दवाच्यजलराशिभूतसमुद्रजातः इत्युत्तरासामपां विशेषणकोटिप्रविष्टत्व मिति वैपरीत्यम् ॥

एवम् 'वोढा यद्गुणमेषः' इत्यत्र एष इति पूर्वोक्तोवायुर्विशेष्य तयैव गृह्यते । यद्गुणं वोढा-यच्छब्दवाच्यपृथिवीसंबन्धिगन्धवहनकर्ता । अत्रानन्तरभूतायाः पृथिव्याः विशेषणकोटिप्रविष्टत्वाद्विशेषणत्वमेवेति वैपरीत्यम् ॥ तथाच—'दिक्काले' त्यादिपद्य मुभयविधाया अपि एकावल्या उदाहरणं भवतीति 'द्वितीयोयथा' इत्युक्त्वा पद्यस्यास्य प्रदर्शनं कुवलयानन्दकृतश्चिन्त्यम् ॥ नच—पद्ये यस्मिन्नंशे लक्षणं दृश्यते तमंश मादाय लक्षणसमन्वयः क्रियते, यथा अन्योन्यालङ्कारोदाहरणे 'यथोर्ध्वाक्षः पिबत्यंभः पथिको विरलाङ्गुलिः । तथा प्रपापालिकापि धारां वितनुते तनूम्' इत्यत्र पथिकप्रपापालिकयोस्स्वस्वोपकारसत्वेऽपि परस्परोपकारमादाय लक्षणसमन्वयः कृत इति वाच्यम् । भवद्विवक्षितांशमादाय द्वितीयरीत्या लक्षणसमन्वयवत्तद्व्यतिरिक्तांश मादाय प्रथमरीत्यापि लक्षणसमन्वयसंभवाद्विनिगमनाविरहात् ॥ किञ्च—अस्मिन्पद्ये विवक्षितांशमादाय लक्षणसमन्वयोपि कर्तुं नशक्यते । कुतइतिचेत्? अर्थश्रेणिरेवह्येकावल्यलङ्कारः अर्थश्रेणिः वस्तुपरंपरा, साच, 'ताः पान्तु नो मूर्तयः' इति पृथिव्यग्नेजोवाय्वाकाशसूर्यचन्द्रयजमानात्मकाष्टवस्तुपङ्क्तिरेव, अष्टानामपि कथने सत्येवार्थश्रेणिस्सिद्ध्यति नत्वेकदेशमात्रकथनेन, इत्थञ्च एकश्रेणिघटकानां यावतां पदार्थाना मेकरूपविशेष्यविशेषणभावे सत्येवैकावल्यलङ्कारो भवतीति कुवलयानन्दकृत्तदेतत्पद्योदाहरणकरणश्चिन्त्यमेव ॥

॥ इति एकावलीविचारः ॥



विषयः (७६) सारालङ्कारः

सारालङ्कारोदाहरणे ' अन्तर्विष्णोस्त्रिलोकी निवसति ' इत्यादि पद्ये पञ्चवाक्यानि सन्ति । तत्र पञ्चानां वाक्यानां प्रत्येकं क्रियापदानि सन्ति (१) निवसति, (२) शेते, (३) चकार, (४) धत्ते, (५) विभाति । इति । तृतीयवाक्येपरं क्रियापदं नास्ति । तच्चवाक्यम् ' सिन्धोस्सोप्येकदेशे ' इति ॥

अत्र चन्द्रिकाकारः, ' सोपि शेषोपि सिन्धोरेकदेशे तिष्ठतीति शेषः ' इति व्याचख्यौ ॥

अत्र ' इतिशेषः ' इत्यनेन शेषपूरणं कर्तव्यमित्यर्थो लभ्यते । शेषपूरणं नामाध्याहारः । अध्याहारश्च अविद्यमानपदयोजना । अध्याहारापेक्षया एतद्वाक्यपूर्ववाक्यस्थितस्य ' शेते ' इति पदस्यानुषङ्गो न्याय्यः । अनुषङ्गोनाम विद्यमानपदस्य योजना । अविद्यमानपदयोजनापेक्षया विद्यमानपदयोजना युक्ता । अर्थसामञ्जस्यमपिनर्हीयते ॥

ननु ' कृभ्वस्तयःक्रियासामान्यवचनाः ' इति न्यायेन ' तिष्ठति ' इत्यस्य क्रियापदाभावस्थले स्वत उपस्थित्या नाध्याहारप्रयुक्तदोषावकाश इतिचेत् ? न ॥

स्थाधातोर्गतिनिवृत्त्यर्थकत्वादुक्त धातुत्रयव्यतिरिक्तत्वाच्च । तस्मात् ' शेते ' इत्यस्यैवानुषङ्गो युक्ततमः ॥

॥ इति सारालङ्कारविचारः ॥



विषयः (७७) अथपर्यायालङ्कारविचारः (क)

एकस्य वस्तुनोऽनेकेष्वधिकरणेषु क्रमेण संश्रयवर्णने पर्याय इति ' पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः ' इति कुवलयानन्दका-

रिकायां लक्षणमुक्तम् । उदाहरणञ्च ‘ पद्मं मुक्त्वा गता चन्द्रं कामिनी वदनप्रभा ’ इति । अत्र कामिनीवदनप्रभारूपस्यैकस्य वस्तुनः पद्म चन्द्ररूपानेकाधिकरणयोः क्रमेण संश्रयणं वर्णितमिति लक्षणसमन्वयः ॥

ननु—अत्रोदाहरणे कामिनीवदनप्रभायाः ‘ गताचन्द्र ’ मित्यनेन चन्द्राश्रयणमुक्तम् । ‘ पद्मंमुक्त्वा ’ इति पद्मत्यागएवोक्तः, नतु पद्म समाश्रयणम् । इत्यनेकाधाराश्रयणं नोक्तमित्यव्याप्तिरितिचेत् ? न ॥ पद्मत्यागे शब्दतः कथिते पद्मसमाश्रयणं विना पद्मत्यागो नसंभवतीति पद्मत्यागान्यथानुपपत्त्या पद्माश्रयणमर्थाल्लभ्यत इति नाव्याप्तिः ॥ एवं प्रथमाधिकरणसमाश्रयणस्यार्थलभ्यत्वे द्वितीयाधिकरणसमाश्रयणस्य शाब्दत्वेपि पर्यायत्वमस्तीत्यभिप्रायेणैव काव्यप्रकाशकार एतत्पद्य मुदाजहार,

‘ श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतय स्संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवता मद्वितीयन्तु वक्त्रम्
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ ’

इति ॥ एतावानर्थः कुवलयानन्दोक्तएव मयाद्य विशदीकृतः ॥ ‘ श्रोणीबन्ध ’ इत्यादिपद्यं चन्द्रिकायामेवं व्याख्यातम्, ‘ श्रोणीति । जघन बन्धः तनुतां कृशतां त्यजति । मध्यभागस्तां सेवते आश्रयति वक्ष स्स्थलं कुचसचिवतां कुचसहितत्वं धत्ते वक्त्रन्त्वद्वितीयम् । अत्र पूर्वं वक्षसोऽद्वितीयत्वावगमात्पर्यायसंभवो ज्ञेयः अद्वितीयत्वं द्वितीयरहितत्वमनुपमत्वञ्चैकत्वेनाध्यवसितम् एवञ्चोदाहरणद्वयेपि पूर्वाधारसमाश्रयणं गम्यम् उत्तराधारसमाश्रयणं शाब्दमिति ’ इति ॥

अत्र विचार्यते । अस्मिन् पद्ये 'श्रोणीबन्ध' इति, 'पद्भ्यां मुक्ता' इतिच पादद्वयेपि 'पद्मं मुक्ता' इत्यत्रैव पर्यायत्वं स्पष्टम् । 'धत्तेवक्ष' इत्यादितृतीयपादेतु कथं पर्यायत्व ? मिति ॥

यत्तु—अत्र चन्द्रिकाकारेण समन्वयवाक्यं लिखितम् 'अत्र पूर्वं वक्षसोऽद्वितीयत्वावगमात्पर्यायसंभवो ज्ञेय' इति । तत्तु न संगतम् तथाहि । पूर्वं वक्षसोऽद्वितीयत्वं नकेनाप्यवगतम् । कुतइतिचेत् ? 'धत्ते' इति वर्तमाननिर्देशादिदानीं वक्षः कुचसचिवं वर्तते इत्येव शब्दशक्त्या अर्थलाभः । अर्थबलात्तु पूर्वं वक्षः कुचसचिवं नाभूदित्येव । नत्वद्वितीयमभूदिति, कुचसचिवताद्वितीयत्वयोराक्षेप्याक्षेपकभावाभावात् । इदानीं वक्षसि कुचसचिवतोक्त्या पूर्वं वक्षसोऽद्वितीयत्वस्याक्षेपलभ्यत्वे 'इदानीं भूतले घटोऽस्ती' त्युक्ते, 'पूर्वं भूतले पटोऽभूत्' इत्यर्थस्याक्षेपलभ्यत्वं स्यात् नतु पूर्वं भूतले घटो नाभूदिति ॥

ननु शब्दशक्त्या आक्षेपाद्वा वक्षसि पूर्वमद्वितीयत्वानवगमेपि तात्पर्यवशाद्वक्षसि पूर्वमद्वितीयत्वमवगम्यते । तात्पर्यग्राहकश्च 'अद्वितीयंतुवक्त्र' मिति इदानीं वक्त्रगतमद्वितीयत्वम् । तथाच पूर्वं वक्षोगतमद्वितीयत्वं तत्परित्यज्येदानीं वक्त्रमुपगतमिति पर्यायेणैकस्यानेकसंश्रयणरूपपर्यायत्वमुपपन्नमितिचेन्न ॥ तर्हि 'अद्वितीयन्तुवक्त्रम्' इत्येतावन्मात्रेणैव पर्यायनिर्वाहे 'कुचसचिवताम्' 'धत्ते' इति पदद्वयमजागलगतकुचायते । कुत्राप्यनुपयोगात् । किञ्च—कवेस्तावन्मात्रेण पर्यायनिर्वाहतात्पर्ये तृतीयपादोप्येवं निर्मीयेत, 'वक्षस्त्यक्तं वहति वदनन्त्वद्वितीयत्व मद्य' इति ॥

अतः 'कुचसचिवताम्' 'धत्ते' इति पदद्वयसार्थक्याय तद्वाच्यार्थस्यैव मुख्यतया ग्रहणे, इदानीं वक्षोगता कुचसचिवता पूर्वं

कुत्राधिकरणेऽभूत् ? किं त्यक्त्वा इदानीं वक्षोगतम् ? इतिचेत्, पूर्वाधिकरणं तत्त्यागश्च शब्दतोऽर्थतोवा नावगम्यते । एवमपि वक्त्रपद समभिव्याहाररूपतात्पर्यग्राहकात्तात्पर्यवशात्पूर्वाधिकरणं वक्त्रं त्यक्त्वा कुचसचिवतेदानीं वक्षस्समाश्रिता, इति पर्यायनिर्वाहे अद्वितीयपदं सुतरां निरर्थकम् । तदा तृतीयपादेनचैवं भाव्यम्, 'धत्तेवक्षःकुचसचिवतां वक्त्रमुक्तामिदानीम्' इति ॥

अतः 'कुचसचिवताम्' 'धत्ते' 'अद्वितीयम्' इति पदत्रय सार्थक्याय 'धत्तेवक्षः कुचसचिवताम्' इत्यत्रैकः पर्यायः, 'अद्वितीयन्तुवक्त्रम्' इत्यत्रैकः पर्याय इति पर्यायद्वयं वक्तव्यम् । एवञ्च इदानीं वक्षोगता कुचसचिवता पूर्वं कुत्राभूत्, किं त्यक्त्वा वक्षः प्रत्यागता ? इदानीं वक्त्रगतमद्वितीयत्वं पूर्वं कुत्राभूत् ? किंत्यक्त्वा वक्त्रं प्रत्यागतम् ? इति जिज्ञासायां 'पद्म' 'श्रोणीबन्ध' पाद रूपपूर्वाधिकरणानां निर्देशवदत्र पूर्वाधिकरणनिर्देशाभावात्, 'मुक्त्वा' 'त्यजति' 'मुक्ताः' इतिवत् त्यागस्यच निर्देशाभावादेकत्यागेकसंश्रयणरूपपर्यायत्वं न संभवत्येवेति ॥

एतेन—'एवञ्चोदाहरणद्वयेपि पूर्वाधारसमाश्रयणं गम्यमुत्तराधारसमाश्रयणं शाब्द' मितिचन्द्रिकोक्तिरपिनिरस्ता, 'धत्तेवक्ष' इत्यादि तृतीयपादे पूर्वाधारसमाश्रयणस्य गम्यत्वाभावस्य समर्थितत्वात् ॥

रसिकरञ्जनीकारेणापि 'पूर्वाधारसमाश्रयणस्य गम्यत्वं स्पष्टमेव इत्युक्त्वा पलायितम् । झलकीकरोपनामा वामनभट्टोपि, 'बहवः काव्यप्रकाशव्याख्यातारः पद्यमिदं ग्रन्थाघटकमिति नव्याचख्युः । इत्युक्त्वा 'चक्रवर्तिनापि नव्याख्यातमिदंपद्य' मितिलिलेख ॥

अस्माभिस्तु चक्रवर्तिव्याख्या कचिन्मुद्रितपुस्तके पद्यस्यास्य दृष्टा । तेनतु पूर्वोक्तरीत्या अनुपपत्तिं विचिन्त्य पूर्वाधाराश्रयणसंपादनाय अद्वितीयपदं वक्षःपदविशेषणं कृत्वा 'पूर्वमद्वितीयंवक्षः इदानीं कुचसचिवतान्धत्ते' इति व्याख्याय 'चवक्रं' इति भागश्च 'वक्रञ्च मातृकुचसचिवतां विहायाद्वितीयमभूत्' इति व्याख्यातः ॥

अस्यामपि व्याख्यायां 'धत्ते' इति वर्तमाननिर्देशाद्वक्षोरूपोत्तराधारे विद्यमाना कुचसचिवता कस्मिन्पूर्वाधारेऽभूत्? किन्त्यत्याज? इति जिज्ञासायां पूर्वाधारोवा, तत्त्यागोवा नार्थाल्लभ्यते नैवशब्दात् । किन्तु एकस्मिन्वक्षोरूपाधिकरणे प्रथममद्वितीयत्वमासीत् । इदानीं कुचसचिवता वर्तते इत्यर्थस्यस्फुटत्वात् 'अधुना पुलिनं तत्र यत्र स्रोतः पुराऽजनि' इत्यत्रेव 'एकस्मिन्यद्यनेकंवा' इति लक्षणलक्षित द्वितीयपर्यायसंपत्त्या प्रथमपर्यायत्वं न संभवत्येव ॥

किञ्च 'चवक्रम्' इति तृतीयपादावशिष्टांशेन 'वक्रञ्च मातृ कुचसचिवतां विहायाद्वितीयमभूत्' इत्यर्थलाभस्तु अत्यन्तासङ्गतः । कुतइतिचेत्? इतः ॥

'अद्वितीयं वक्षः कुचसचिवतान्धत्ते' इत्युक्त्वा, 'वक्रञ्च' इत्युक्ते चकारस्य समुच्चयार्थकत्वादद्वितीयत्वरूपं विशेषणम्, कुचसचिवतारूपं कर्मकारकम्, 'धत्ते' इति क्रियाविशेषश्च चकारस्समुच्चिनोतीति 'अद्वितीयं वक्रञ्च कुचसचिवतां धत्ते' इत्यस्यैवार्थस्य लाभात् 'कुचसचिवं वक्रमद्वितीयतान्धत्ते' इत्यस्यार्थस्यालाभाच्च ॥ यथा 'दरिद्रो देवदत्तः पद्भ्यामेव काशीङ्गतः, यज्ञदत्तश्च' इत्युक्ते 'दरिद्रो यज्ञदत्तश्च पद्भ्यामेवकाशीङ्गतः' इत्यर्थोलभ्यते, नतु 'धनीयज्ञदत्तोरथेनायोध्याङ्गतः' इति ॥

वक्त्रस्य मातृकुचसचिवताच शैशवएव नतु कौमारान्ते यौवनारंभेवा, ततश्च तादृशार्थकथनमत्यन्तापहसनीयम् ॥

किञ्च—यद्येवं पूर्वाधाराश्रयणलाभाय 'अद्वितीयं वक्षः कुचसचिवतान्धत्ते, कुचसाचिवं वक्त्रमद्वितीयतान्धत्ते' इत्यनुचितोन्वयोऽर्थश्चाङ्गीक्रियते, तदापि वक्षोगतमद्वितीयत्वं मुखेन गृहीतम्, मुखगतं कुचसाचिव्यं वक्षसा गृहीतम् । इति 'परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः' इति लक्षणलक्षितपरिवृत्त्यलङ्कारोदाहरणत्वमेवास्य पादस्योचितम्, नतु पर्यायोदाहरणत्वम् ॥

ननु—अत्र पद्यतृतीयपादे अद्वितीयताकुचसचिवतयोर्मिथो विनिमयसत्वेपि तयोर्न्यूनाभ्यधिकभावो नास्तीति नपरिवृत्त्यलङ्कार इतिचेन्न । न्यूनाभ्यधिकभावस्य परिवृत्त्यलङ्कारता प्रयोजकत्वाभावात् किन्तु मिथोविनिमयस्यैव तत्प्रयोजकत्वात् । अतएव रसगङ्गाधरे प्राचीनाभिप्रायानुसारेण परिवृत्तिशब्दस्वारस्याच्च मिथोविनिमयमात्रस्य परिवृत्त्यलङ्कारत्वमुक्त्वा परिवर्त्यमानानां समन्यूनाधिकभावे तदवान्तरभेदत्वमुक्तम् । अतएव कुवलयानन्दकृतापि न्यूनाभ्यधिकयोर्मिथः परिवृत्तिरूपस्यैकस्यैव भेदस्य लक्षणमुदाहरणञ्चोक्तम् । तथाच सर्वथात्र परिवृत्तिरेव । नतु पर्यायः ॥

झलकीकरोपनाम्ना वामनभट्टेन तु बालबोधिन्याख्यव्याख्यायाम् 'धत्तइत्यनेन वक्षसि प्रागद्वितीयता यास्थिता सा वक्त्रेणगृहीता' इति बोधितम्, मुखे अद्वितीयत्वं निरुपमत्वम्, वक्षसि द्वितीयराहित्यम्, तयोश्चाभेदाध्यवसायः । कुचसचिववक्षस्त्वेनैव मुखस्य निरुपमत्वम्' इति लिखितम् ॥ एतदपि चन्द्रिकासमानार्थकत्वात्पूर्वोक्तदूषणेनैव दूषितप्रायमिति नपृथक्प्रयत्नमपेक्षते ॥

अयन्त्वपरोविशेषः । यत् ' कुचसचिवक्षस्त्वेनैव मुखस्य निरुपमत्व ' मित्युक्तम्, तदनुभवरसिकाएव जानन्तु । यदि काचिदतिसुन्दरमुखी शुष्कस्तनीच स्यात् तर्हि नकश्चित्तां सुन्दरवदनेति ब्रूयात् तथा रूपलावण्ययोर्भेदएव नस्यात् ' रूपंप्रत्यवयवशोभा, लावण्यं समुदायशोभा ' इतिहि सार्वजनीनो व्यवहारः ॥

ननु तर्हि कथमिदं पद्यं काव्यप्रकाशादौ मम्मटभट्टादिभिः पर्यायोदाहरणतया प्रदर्शितमितिचेत् ॥

इत्थम्—अस्मिन्पद्ये ' श्रोणीबन्धः ' ' पद्भ्यांमुक्ताः ' इतिच पादद्वयमेव पर्यायोदाहरणतया विवक्षितम् नतूत्तरार्धमपि । तृतीयपादे ' धत्तेवक्षः ' इत्यादौ चन्द्रिकाद्युक्तरीत्या निर्वाहविवक्षायां द्वितीय पर्यायः । चक्रवर्तिव्याख्यारीत्या परिवृत्तिः नतु पर्यायः ॥

एतत्पद्यकर्तुः कवेस्तु मुख्यतया विवक्षितः काव्यलिङ्गालङ्कारः, कथमितिचेत्? द्रौपद्या यौवनप्रादुर्भाववर्णनप्रकरणात् ' तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ' इत्युक्तम् । यौवनेन कथं गात्राणां गुणविनिमयः कृतः ? इति जिज्ञासायां तस्यार्थस्य समर्थनीयतया पूर्वपादत्रयेण तत्समर्थनात्काव्यलिङ्गं प्रधानम् । तत्राद्यपादद्वये पर्यायालङ्कारोऽङ्गम् । तृतीये गुणविनिमयमात्रमुक्तमवयवयोः । नतु पर्यायरीत्या । गुणविनिमयो नाम गुणव्यत्यासः, सचैकस्यैव धर्मिणः पूर्वं गुणत्यागमात्रेणवा भवति, अन्यगुणोत्पत्तिमात्रेणवा भवति, तथाच वक्षसि पूर्वंकुचसचिवतानासीत् इदानीं कुचसचिवतावर्तते । वक्त्रमपि पूर्वमनुपमं नासीत् इदानीमनुपमं जातमित्येवार्थस्स्वरसः । तेन गुण विनिमयश्चोपपादितो भवतीति । काव्यलिङ्गत्वञ्चोपपादितं भवति । अत्र द्वयोर्धर्मिणोः परस्परगुणविनिमयो नगुणविनिमयशब्देन विवक्षितः सतु परिवृत्त्यलङ्कारविषयः । अत एवपरिवृत्त्यलङ्कारलक्षणे ' मिथ ' इति

पदं निविष्टम् । परस्परविनिमयएव विनिमयशब्दवाच्यश्चेत्तदा ‘मिथः’ इति पदं व्यर्थं स्यात् ॥

एवं स्थिते तृतीयपादेपि पर्यायसमर्थनाय व्याख्यातॄणां प्रयास आयासयति मानसं सुमनसामित्यलमतिवचसा ॥

ननु—अत्र पद्ये काव्यलिङ्गमङ्गिचेत् कथमङ्गभूतपर्यायोदाहरणत्वमितिचेत्? ‘यत्त्वन्नेत्र’ इत्यादिपद्यस्य यथाङ्गिभूतकाव्यलिङ्गवत्त्वेपि अङ्गभूतप्रतीपोदाहरणत्वमिति निर्मत्सरास्सहृदयास्तुष्यन्तु ॥*



विषयः (७८) पर्यायः (ख)

कुवलयानन्दकृता पर्यायालङ्कारे ‘सङ्कोचपर्यायोयथा ॥

प्रायश्चरित्वा वसुधामशेषां छायासु विश्रम्य ततस्तरूणाम् ।
प्रौढिङ्गते संप्रति तिग्मभानौ शैत्यं शनैरन्तरपामयासीत् ॥

अत्र शैत्यस्योत्तरोत्तरमाधारसङ्कोचात्सङ्कोचपर्यायः’ इत्युक्तम् ॥ अस्य पद्यस्य चन्द्रिकायामेवं व्याख्या, ‘प्रायइति शैत्यं प्रायः अशेषां वसुधां

---

* अर्धसंमुद्र्यमाणे अस्मिन् ग्रन्थे अतिप्राचीनां माणिक्यचन्द्रकृतां सङ्केताख्यां काव्यप्रकाशव्याख्यां कदाचित् व्यलोकयम्। तत्रैवमदृश्यत। ‘श्रोणीबन्ध इति । अत्रैकस्य तनुत्वादेः द्वये वृत्तिः । पूर्वमुपमानसद्भावात्सद्वितीयत्वमिति विनिमयो घटते । पूर्वार्धमत्रोदाहरणम्’ इति । ततश्चागाधे न्यमज्ज मानन्दसागरे । तत्रचेदमाद्यं कारणम् । यन्मदुक्तार्थस्य प्रामाणिकत्वज्ञानम् । द्वितीयमिदम् । यन्मत्कृतमेतावन्तं विचारं स्वयं सर्वं मनसि कृत्वा वाक्यत्रयेणातिसंग्रहेण व्यलिखदिति । संग्रहलेखनेच कारणं तत्पूर्वमेतादृशासंबद्धव्याख्यानाभाव एव ॥

हेमन्ते चरित्वा ततो वसन्ते तरूणां छायासु विश्रम्य संप्रति ग्रीष्मे तिग्मभानौ सूर्ये प्रौढिं प्रागल्भ्यं गते सति शनैः अपां जलानां अन्तः अभ्यन्तरे अयासीत् गच्छतिस्मेत्यर्थः ।' इति ॥

अत्र चन्द्रिकाकारेण शैत्यस्याशेषवसुधाचरणं हेमन्ते, च्छायासु विश्रमो वसन्ते, ग्रीष्मे जलानामन्तर्गमनमित्युक्तम् । अनेन ग्रीष्मर्तु वर्णनपरमिदं पद्यमिति वैद्यनाथतात्पर्यमवगम्यते । एवं शैत्यस्य ऋतु त्रयकालिकसञ्चारकथने बहवो दोषास्संभवन्ति । एकस्मिन्नेव ग्रीष्म दिवसे संचारकथनेत्वौचित्यं वर्तते ॥ तथाहि ग्रीष्मर्तौ मध्याह्नवर्णन परमिदं पद्यम् । शैत्यमपररात्रेषु बहुशस्सर्वत्रवर्तते । तदानीमेवतापाभावात् । सूर्योदयानन्तरन्तु सर्वत्रान्तर्गृहादिष्वपि तापाद्वृक्षच्छायासु परं शैत्यं वर्तते । तत्र तदा तापाभावात् । संप्रति मध्याह्ने चण्डभानौ चण्डताङ्गतेसति शैत्यं सरोवरादिजलस्यान्तःप्रदेशमगात् । मध्याह्ने वृक्षच्छाय स्थितस्यापि ताप एव भवति । परितो वायुनोष्मणो विकिरणात् । जलेप्युपरिभागे उष्णोदकइव तापएव । तदुक्तं कालिदासेन विक्रमोर्वशीये मध्याह्नवर्णनप्रस्तावे ' तप्तं वारि विहाय तीरनलिनङ्कारण्डवस्सेवते ' इति ॥ किन्तु जलस्याधोभागएवशैत्यं, तदप्युक्तमन्यत्र तस्मिन्नेवप्रकरणे ' मूलं याति सरोजलस्य जडता ग्लानेव मीनैस्सह ' इति ॥

किञ्च—' संप्रति ' इत्यस्य चन्द्रिकोक्तरीत्या ' ग्रीष्मे ' इत्यर्थाङ्गीकारे ग्रीष्मेपि प्रत्यूषे जलस्योपरिभागेपि शैत्यदर्शना त्तदन्तर्गमनस्यानावश्यकतैव । अपिच–मध्याह्नवर्णनं विना ग्रीष्मर्तुमात्रवर्णन परत्वे ग्रीष्मस्य रात्रौ तत्प्रत्यूषेच तिग्मभानोः कानामप्रौढिः ? तदा सूर्यस्यैवादर्शनात् अतस्तन्मध्यन्दिनएव तस्य प्रौढिः । अन्यच्च–वसन्ते तरुच्छायास्वेव शैत्यमित्यप्यनुभवोनास्ति ॥ अपरञ्च–अस्मिन्पद्ये हेमन्त वसन्तादिकालविशेषज्ञापकं नकिञ्चिदपि पदन्दृश्यते । तस्माद्ग्रीष्ममध्याह्नवर्णनपरमेवेदंपद्यम् ॥

विषयः (७९) पर्यायः (ग)

कुवलयानन्दे, सङ्कोचपर्यायं 'प्रायश्चरित्वा' इत्युदाहृत्य विकासपर्यायोप्युदाहृतः 'विकासपर्यायोयथा—

बिम्बोष्ठएव रागस्ते तन्वि पूर्वमदृश्यत ।
अधुना हृदयेप्येष मृगशावाक्षि लक्ष्यते ॥

अत्र रागस्य पूर्वाधारापरित्यागेनाधारान्तर संक्रमणमिति विकासपर्यायः' इति ॥ अत्र रसगङ्गाधरकारो ब्रूते, उक्तोदाहरणे 'बिम्बोष्ठएव' इत्यादिपद्ये पर्यायो न भवति । एकस्य वस्तुनोऽनेकेष्वधिकरणेषु क्रमेण समाश्रयणे खलु पर्यायः क्रमेणेत्युक्त्या पूर्वाधिकरणसंबन्धं त्यक्त्वैवोत्तराधिकरणाश्रयणं वक्तव्यम् । तथैवोक्तं काव्यप्रकाशे 'श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः' इत्यादौ । अलङ्कार सर्वस्वेच 'प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथकण्ठे' इत्यादौ ॥ 'बिम्बोष्ठ' इत्यादौतु रागात्मकं वस्तु पूर्वाधिकरणं बिम्बोष्ठं विहाय हृदयं नाश्रितम् किन्तूभयत्रवर्तते । तस्मात्पर्यायत्वं न संभवाति । किन्त्वत्रएकवस्तुविषयकस्सारालङ्कारउचितः । इममेव रत्नाकरादयो वर्धमानकालङ्कारमुदाहरन्ति । इति ॥

अत्र चन्द्रिकाकारस्तु—काव्यप्रकाशएव 'बिम्बोष्ठ' इति पद्यं पर्यायोदाहरणतया प्रदर्श्य, ततः बिम्बोष्ठे रागोऽरुणिमा, हृदयेस्नेहः, इत्यनेकत्वादेकस्यानेकसंश्रयो नोक्त इति पर्यायानुपपत्तिमाशङ्क्य उभयोरेकत्वाध्यवसानादेकत्वं संपाद्य पर्यायत्वं समर्थितमिति काव्य प्रकाशविरोधोद्भावनन्तवैव, नतु दीक्षितस्येति त्वदुक्तं भ्रान्तप्रलपितमिवोपेक्षणीयमिति प्रोवाच ॥

रसगङ्गाधरव्याख्यामर्मप्रकाशकृन्नागेशस्तु जगन्नाथोक्तस्साराल-

ङ्कारो नात्रभवति, काव्यप्रकाशे 'उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः' इति लक्षणमुक्त्वा—

'राज्ये सारं वसुधा वसुन्धरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम्' ॥

इत्युदाहृतम् । अत्र बहूनामेव पदार्थानामुत्तरोत्तरमुत्कर्षउक्तः । नत्वेकस्य । भवतापरं सारस्यैकविषयत्वमुक्तम् नतु प्राचीनैः तस्मात्पर्यायत्वमेवोचितं नतु सारत्वमित्याह । एतावतोक्तास्सर्वेपि पक्षाः निगूढार्थातिसंक्षिप्ततत्तत्पङ्क्तिलब्धार्थानादाय सुविशदं स्वाक्षरैर्निरूपितामया । नतु तत्तदानुपूर्वी लिखिता ॥

अत्रायमस्मदीयोऽभिसन्धिः । बिम्बोष्ठगतारुणिम्नः हृदयगत स्नेहस्यच रागशब्दवाच्यत्वेनाभेदाध्यवसानेनैक्यं मम्मटादिनागेशान्तानांसर्वेषांसंमतम् । एवंसति

'विशेषस्सोपि यद्येकं वस्त्वनेकत्र वर्ण्यते ।
अन्तः पुरो बहिः पश्चात्सर्वदिक्ष्वपि सैवमे ॥
हृदयान्नापयातोसि दिक्षु सर्वासु दृश्यसे ॥'

इत्यादिवदेकस्य वस्तुनोऽनेकाधिकरणावस्थितिवर्णनरूपद्वितीयविशेष भेदत्वमेवस्यात् । एकस्य रागस्य बिम्बोष्ठे हृदयेचैकदैवावस्थितेर्वर्णनात् ॥ द्वितीयविशेषालङ्कारव्यावर्तनायैव खलु पर्यायलक्षणे 'पर्यायेणे' त्युक्तं कुवलयानन्दे ॥ काव्यप्रकाशेपि 'क्रमेणे' त्युक्तम् । क्रमश्च पूर्वाधिकरणं त्यक्त्वोत्तराधिकरणाश्रयणम् । अतएव लक्षणे एकस्यानेकसंश्रये उक्तेपि तदुदाहरणे तदनुगुणतया 'पद्मंश्रिता' इत्यनुक्त्वा 'पद्मंमुक्त्वा' इति पद्मत्यागएवोक्तः नतु पद्मसमाश्रयणम् ॥ मम्मटेनापि द्वितीयविशेषव्यावृत्तिः क्रमपदविवक्षिता । 'अलङ्कारसर्वस्व

कारेणतु कण्ठोक्ता । एवंहि तद्वाक्यम् । 'नन्वेकमनेकगोचरमिति प्राक्तनेन लक्षणेन विशेषालङ्कारोऽत्रोक्तः । तत्किमर्थमिदमुच्यते ? इत्याशंक्योक्तं । क्रमेणेति । इहच क्रमोपादानादर्थात्तत्र यौगपद्यप्रतीतिः । तेनास्य ततोविविक्तविषयत्वम्' इति ॥ 'बिम्बोष्ठ' इत्यत्रतु क्रमो नास्त्येव । क्रमाङ्गीकारेतु अधरेरागो नास्तीत्यङ्गीकरणीयं भवेत् । विकासपर्यायत्वंच नस्यात्, 'अत्र रागस्य पूर्वाधारापरित्यागेनाधारान्तर संक्रमणम्' इति दीक्षितोक्तिविरोधश्च स्यात् । तस्माज्जगन्नाथोक्तं दीक्षितदूषणं मम्मटभट्टमपि स्पृशति ॥ यद्यपि जगन्नाथेनात्र सारालङ्कार उचित इत्युक्तम्, तथापि एकवस्तुविषयकसारालङ्कारस्यमम्मटादिभिरलक्षितत्वादनुदाहृतत्वाज्जगन्नाथमात्रकल्पितत्वाच्च सारालंकारोऽत्र माभूत् मम्मटोक्तलक्षणरीत्यैव द्वितीयविशेषालंकारोदाहरणत्वन्तु नकथञ्चिदपि परिहर्तुं शक्यत इति पर्यायत्वकथनमनुचितमिति ॥

ननु सर्वालङ्कारिकमार्गदर्शिनो मम्मटभट्टस्य दूषणं कथं तदुपजीवकानां युक्तमितिचेन्न । विरोधस्य स्फुटत्वे कोवा निमीलयेत्स्वलोचनम् अवलम्बेतच मूकताम् ॥

दृश्यन्तेहि तर्कव्याकरणादिषु सर्वेष्वपि शास्त्रेषु प्राचां नव्यानाञ्च पक्षाः । नव्यपक्षैः प्रतिक्षिप्ताश्च प्राचीनपक्षाः । यथाचित्रमीमांसायामुपमा लक्षणकथनप्रस्तावे

'नपद्मं मुखमेवेदं नभृङ्गौ चक्षुषीइमे ।
इतिविस्पष्टसादृश्यात्तत्त्वाख्यानोपमा मता'

इत्यतिप्राचीनेन दण्डिनोक्तामुपमां निराचकार तद्ग्रन्थकृत् '' नपद्म ' मित्यादौनोपमा, किन्तु ' इत्यादिनेति ॥



विषयः (८०) पर्यायः (ख)

कुवलयानन्दप्रदर्शितं द्वितीयपर्यायस्य लक्षणमुदाहरणञ्चेदम् ।

' एकस्मिन्यद्यनेकंवा पर्यायस्सोपि संमतः ।

अधुना पुलिनं तत्र यत्र स्रोतः पुराऽजनि ॥ मथावा ॥

पुराभूदस्माकं प्रथममविभिन्ना तनुरियं

ततोनु त्वं प्रेयान्वयमपि हताशाः प्रियतमाः ।

इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं

हतानां प्राणानां कुलिशकठिनानां फलमिदम् ॥

अत्र दम्पत्योः प्रथममभेदः, ततः प्रेयसीप्रियतमभावः, ततो भार्यापतिभावः, इत्याधेयपर्यायः ' इति ॥

अत्र पद्यद्वितीयपादे ' ततोनुत्वंप्रेयान् ' इत्यत्र चन्द्रिका, ' नु-वितर्के ' इति ॥

अत्र कोनाम वितर्कः ? विविधस्तर्क इति संशयोवा ? विशेषेणतर्क ऊहोवा ? उभयधापि नसंभवति; दम्पत्योः प्रेयसीप्रियतमभावस्योभयानुभवसिद्धस्य प्रेयसीसंशयविषयत्वोहाविषयत्वयोरसंभवात् । तथाङ्गीकारेतु दम्पत्यात्मके एकस्मिन्वस्तुनि अभेद प्रेयसीप्रियतमभाव भार्यापतिभावानां संदेहादूहाद्वा वस्तुतोऽभावादलंकारस्यैव मूलोच्छेदापत्तेः । अपितु ' नु ' इत्यस्यातीतार्थकत्वं वक्तव्यम् । तदर्थकत्वन्तु ' नु स्यात्प्रश्ने विकल्पार्थे प्यतीतानुनयार्थयोः ' इति विश्व कोशसिद्धम् । इत्थञ्च आवयोः प्रेयस्त्वप्रियतमात्वे अप्यतीते इत्यर्थः । अतीतत्वमेव विशदयति, ' इदानींनाथस्त्वमित्यादिना इति ॥



## विषयः (८१) पर्यायः (ङ)

अत्रैव पद्ये द्वितीयपादस्य 'ततो नु त्वं प्रेयान्वयमपि हताशाः प्रियतमाः' इत्यस्य चन्द्रिकाकारेणैवं व्यंग्यार्थो वर्णितः । 'अत्र त्वं प्रेयानित्येकवचनेन एकरूपप्रेमपात्रत्वं व्यज्यते । 'प्रियतमाः' इत्यादि बहुवचनेन एकरूपतद्यतिरेक इति बोध्यम्' इति । अस्य चन्द्रिकावाक्यस्येदं तात्पर्यम् । 'प्रेयान्' इत्येकवचनम् पत्नीसमवेतैकरूपप्रीतिविषयत्वं पत्युर्व्यञ्जनया बोधयति । 'प्रियतमाः' इति बहुबचनम् पतिसमवेतैकरूपप्रीतिविषयत्वाभावं पत्न्याः व्यञ्जनया बोधयति । एवञ्च पत्न्याः पत्यौ प्रीतिरधिका वर्तते, पत्युस्तु पत्न्यां तादृशी प्रीतिर्नास्तीति ॥

अत्रेदं विचार्यते । एकवचनबहुवचनाभ्यां कथं प्रीत्यप्रीती व्यज्येते इति । एकवचनस्य स्वप्रकृत्यर्थगतैकत्व संख्याबोधकत्वं बहुवचनस्य स्वप्रकृत्यर्थगतबहुत्वसंख्याबोधकत्वञ्च, 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति व्याकरणसूत्रसिद्धम् । एकरूपप्रीतिपात्रत्वस्य एक वचनस्यच व्यंग्यव्यञ्जकभावं कोवा सहृदयः प्रत्येतु । तथा एकरूप प्रीतिविषयत्वाभावस्य बहुवचनस्यच व्यंग्यव्यञ्जकभावोवा कथम्? परन्तु प्रकृतिभूतप्रेयःप्रियतमाशब्दाभ्यामेवैकरूप प्रीतिपात्रत्वमेव शक्त्यालभ्यते ॥

तथाहि 'प्रेयान्' इत्यत्र 'प्रीञ्तर्पणे' इति धातोः 'इगुपध ज्ञाप्रीकिरःकः' इति सूत्रेण कप्रत्यये प्रीणातीति विग्रहे प्रिय इति रूपम् । ततः प्रियशब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति सूत्रात् द्वयोरेकस्यातिशये विवक्षिते ईयसुन् प्रत्यये परे 'प्रियस्थिरे' त्यादिसूत्रेण प्रियशब्दस्थाने 'प्र' इत्यादेशे 'प्रेयस्' इतिरूपे सुप्रत्यये 'प्रेयान्' इति रूपम् । अत्र प्रियशब्देनैव प्रीतिपात्रत्वं ईयसुन् प्रत्ययेन तदतिशयश्च शक्त्या प्रतिपाद्यत इति शक्तिलभ्यस्य एकरूपप्रीतिपात्र-

त्वस्य एकत्वरूपसंख्यामात्रवाचकेनैकवचनेन व्यञ्जनया कथं लाभः ? शक्तिलक्षणाद्यलभ्यस्यैवार्थस्य व्यञ्जनालभ्यत्वसंप्रदायात् ॥

एवं 'वयमपि हताशाः प्रियतमाः' इत्यत्रापि प्रियशब्देनैव प्रीतिपात्रत्वमुक्तम् । ततः प्रियशब्दात् 'आतिशायने तमबिष्ठनौ' इति विहितेनातिशयार्थकेन तमपा नायकसमवेतातिशयितप्रीतिविषयत्वस्यैव नायिकायामपि शक्त्यैव लाभात्तद्विरुद्धः प्रीतिविषयत्वाभावो बहुत्वमात्रबोधकेन बहुवचनेन कथमपिनलभ्यते । चन्द्रिकोक्तरीत्या नायिकाया नायकसमवेतप्रीतिविषयत्वाभावोक्तौ मूलग्रन्थविरोधः, अलङ्कारमूलोच्छेदापत्तिश्च । कुवलयानन्देहि 'अत्र दम्पत्योः प्रथमं अभेदः ततः प्रेयसीप्रियतमभावः ततोभार्यापतिभावः इत्याधेयपर्यायः' इत्यनेन अन्योन्यसमानातिशयितप्रीतिविषयत्वमेवोक्तम् । चन्द्रिकायांतु नायिकायाः नायकप्रीतिविषयत्वाभाव उच्यते । तस्माद्विरोधः । अस्यालङ्कारभेदस्य एकस्मिन्वस्तुन्यनेकवस्तूनां क्रमेण संश्रयणरूपत्वात् प्रकृते दम्पत्यात्मके एकस्मिन्वस्तुनि प्रेयसीप्रियतमभावरूपवस्तुनोऽभावापत्त्या अलङ्कारलक्षणस्यैवासंभवश्च ॥

ननु—इदं पद्यं नायकं प्रति नायिकाया वंचनरूपम् । अत्र प्रथमपादे 'अस्माकम्' इति, द्वितीयतृतीयपादयोः 'वयम्' इतिच बहुवचनस्य कथं निर्वाहः ? इतिचेदित्थम् । 'अस्माक' मित्यत्र 'अस्मदोद्वयोश्च' इति सूत्रेण अस्मच्छब्दात् द्वयोर्व्यक्तयोरपि बोध्ययोर्बहुवचनं भवतीत्यर्थकेन बहुवचनम् । आवयोरित्येवार्थः । 'वयमपि हताशाः प्रियतमाः' इत्यत्र 'वय' मिति पूजायां बहुवचनम् । पत्युरग्रे पत्न्याः कानाम पूजेति चेत् 'हताशाः' इति विशेषणेन मनःक्लेशसूचकेनात्मनि पूजाया बाधितत्वेन व्यतिरेकलक्षणया हीनत्वं बोध्यते । ततश्च प्रथममेकीभूतयो र्दम्पत्योस्ततः प्रेयसीप्रियतमभावोप्यतीवक्लेशा-

वहः इति व्यंग्यम् । अत्रैव सहकरोति चतुर्थपादार्थः ' हतानां प्राणानां कुलिशकठिनानां फलमिद ' मिति । एकशरीरतादशायामेव यदि नः प्राणा निरगमिष्य न्नैते क्लेशा अन्वभविष्यन्त इति भावः ॥

तथाच—प्रियतमाः इति बहुवचनेन पत्युः पत्न्यामेकरूपप्रीत्यभावो न व्यज्यतएव ॥ किञ्च—प्रियतमाः इति पदं वयमित्यस्य विशेषणम् । विशेषणविभक्तेरनर्थकत्वात्तस्य व्यञ्जकत्वकथनमेवायुक्तम् । अयमपरोत्रविचारः ; प्रेयःप्रियतमशब्दयोरर्थः किं प्रीतिविषयः ? आहोस्वित्प्रीत्याश्रय इति । प्रीत्याश्रय इति युक्तम् । ' प्रीङ्तर्पणे ' इति धातुः, तर्पणं तृप्तिः, ' सौहित्यं तर्पणं तृप्तिः ' इति कोशात् । ततश्च तृप्तिप्रीत्योः पर्यायत्वं सिद्धम् । प्रीतिर्नामानुकूलं ज्ञानम् । तदाश्रयस्तत्समवायिकारणमात्मा, तादृशज्ञानविषयस्तु स्रक्चन्दनवनितादिः ॥ तदुभयवाचकोपि प्रियशब्दश्श्रूयते कोशे, ' धवः प्रियः पति र्भर्ता ' इति प्रीतिसमवायिकारणं पतिः । ' अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ' इति प्रीतिविषयः स्रगादिः, ' अभीष्टे ' इतीच्छाविषयस्यैव प्रियशब्दार्थत्वात् ॥

अमरसुधाकारेणोभयत्र ' प्रीणातीतिप्रियः ' इति विग्रहं प्रदर्श्य, ' इगुपधज्ञाप्रीकिरःकः ' इति सूत्रेण कप्रत्ययो निरूपितः ' कर्तरिकृत् ' इति कृत्सामान्यस्य कर्तृवाचकत्वात्प्रीत्याश्रयएवोच्यते, नतु प्रीतिविषयः । प्रयोगस्तु प्रीतिविषयेपि दृश्यते । कथमत्रोपपत्तिः ?

अयमत्र समाधिः, रोगविशेषवाचकः क्षयशब्दः ' क्षिक्षये ' इति भ्वादिधातोरच्प्रत्ययान्तो निष्पन्नः । ' क्षयतीतिक्षयः ' इति व्युत्पत्तिः । नाशाश्रय इति तदर्थः । यद्येवं क्षयस्य स्वयमेवनाशाश्रयत्वं स्यात्तर्हि तस्य रोगेषु प्रबलत्वासाध्यत्वादिप्रतिपादकशास्त्राणां तन्निवर्तकौषधादिप्रतिपादकानाञ्च नैरर्थक्यं स्यात् । अतो नाशाश्रय

इति नार्थः । किन्तु 'नाशयति देह' मिति णिजर्थमन्तर्भाव्य व्युत्पत्तिः कल्पनीया ॥ तथाच—'क्षयती' त्यस्य नाशयतीत्यर्थकल्पनवत् 'प्रीणाती' त्यस्य तृप्यतीत्यर्थं विहाय तर्पयतीति व्युत्पत्तिकल्पनया प्रीतिविषयवाचकत्वं प्रियशब्दस्य इति ॥

॥ इति पर्यायविचारः ॥



विषयः (८२) अथपरिवृत्तिविचारः

इदमस्य लक्षणमुदाहरणञ्च ।

'परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः ।
जग्राहैकं शरं मुक्त्वा कटाक्षात्सरिपुश्रियम्' ॥

इति । अत्र चन्द्रिका । 'जग्राहेति कटाक्षपूर्वकं एकं शरं मुक्त्वा रिपोः श्रियं जग्राह इत्यर्थः' इति ॥ अत्र 'कटाक्षपूर्वकम्' इत्यनेन 'कटाक्षात्' इति पञ्चम्यर्थो विवृतः । कटाक्षोनाम अपाङ्गदर्शनम् । अपाङ्गस्तु नेत्रयोरन्तभागः । 'अपाङ्गौ नेत्रयोरन्तौ कटाक्षो ऽपाङ्गदर्शने' इत्यमरसिंहः । तथाच नेत्रान्तदर्शनपूर्वकमेकं शरं मुमोचेत्यर्थः ॥ अत्र 'कटाक्षादि' ति पञ्चम्या 'कटाक्षपूर्वकम्' इत्यर्थः कथमपि नलभ्यते, कटाक्षस्य शरं प्रत्यपादानत्वं हेतुत्व मवधित्व मन्यद्वा पञ्चमीविधायकशास्त्रप्रतिपाद्यं नकिमप्यस्ति । इति ॥

किञ्च यद्यपि शरप्रयोगे लक्ष्यदर्शनं पूर्वमावश्यकम् । तथापि कटाक्षेण लक्ष्यदर्शनं नानुभवसिद्धम् । कटाक्षेण लक्ष्यदर्शनन्तु दृष्टिदोषवतएव । नतु समीचीनदृष्टेः । अपिच—कटाक्षः शृङ्गारानुभावः । अत्रापेक्षितस्तु वीररसानुभावः । सच भ्रुकुटिभीषणा सरोषा दृष्टिरेव । अन्यच्च—'एकं शरं मुक्त्वा' इति शरे एकत्वविशेषणात् न्यूनत्वमुक्तम्

तत्प्रतिकोटौ ‘ रिपोश्श्रियंजग्राह ’ इत्यत्र बहुवचनेनाभ्यधिकत्वे वक्तव्ये ‘ श्रिय ’ मित्येकवचननिर्देशान्न्यूनाभ्यधिकयोर्मिथोविनिमयासंभवात्परिवृत्त्यनुपपत्तिः उभयत्रैकत्वनिर्देशात् । अतएव रसिकरञ्जनीपुस्तके प्राचीनास्मत्तालपत्रकोशेच ‘ कटाक्षान्सरिपुश्रियाम् ’ इति बहुवचनान्तपाठएवादृतः ॥ अस्मिन्बहुवचनान्तपाठे एकं शरं मुक्त्वा बह्वीनां रिपुश्रियां बहून्कटाक्षान् जग्राह इत्युक्तत्वात् एकं दत्वा बहूनां ग्रहणे न्यूनाभ्यधिकयोर्मिथोविनिमयः कृतो भवतीति परिवृत्तिरसंभवति ॥

एतत्पाठापेक्षया ‘ कटाक्षान् सरिपुश्रियः ’ इत्येकवचनान्तश्रीशब्दयुक्तः पाठस्साधीयान् । कथमितिचेत् ? तत्तद्देशभेदेन रिपुभेदः रिपुभेदेन श्रीभेदः प्रसिद्धः, सर्वदेशस्थितानामपि रिपूणामेकशरत्यागेन वशीकरणासंभवादेकस्य रिपोरेकस्याश्श्रियो बहून्कटाक्षाञ्जग्राह एकं शरं प्रयुज्यैकं रिपुं संहृत्य जित्वावा तद्राज्यश्रियः कटाक्षकार्याणि [illegible]नुरङ्गवलाद्दीन्यादृत इति भावः, इति ॥



विषयः (८३) विकल्पः

इयमानुपूर्वी कुवलयानन्दे ।

‘ विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता ।
सद्यश्शिरांसि चापान्वा नमयन्तु महीभुजः ॥

अत्र सन्धिविग्रहप्रमाणायोश्शिरश्चापनमनयोर्युगपदुपस्थितयोर्युगपत्कर्तुमशक्ययोर्विकल्पः ॥ यथावा ॥

पतत्यविरतं वारि नृत्यन्तिच कलापिनः ।
अद्य कान्तः कृतान्तोवा दुःखस्यान्तं करिष्यति ॥

प्रियसमागमश्चेन्नमरणमाशंसनीयम् । मरणेतु नप्रियसमागमसंभवः इति तयोराशंसायां विकल्पः ’ इति ॥ अत्र पूर्वोदाहरणसमन्वयवाक्यस्याय

मर्थः । सन्धिप्रमाणं 'द्विषदपेक्षया स्वस्य दुर्बलत्वे रिपुणासह मैत्री कार्या' इति नीतिशास्त्रम् । विग्रहप्रमाणन्तु 'स्वापेक्षया रिपोर्दुर्बलत्वे तेन सह युद्धं कार्यम्' इति नीतिशास्त्रम् । एतच्छास्त्रद्वयेन क्रमात्प्राप्तं शिरोनमनं चापनमनञ्च, शरणागतिः, युद्धञ्च, तदुभयमेकदाकर्तु नशक्यम्, शरणागतौ युद्धं नास्ति युद्धे सतिशरणागतिर्नास्ति' इति तयोर्विकल्पः ॥ इत्थञ्च अन्यतरस्य सद्योऽवश्यानुष्ठेयत्वात्तुल्यबलत्वम् । युगपत्कर्तुमशक्यत्वाद्विरोधः । 'वा' इत्यनेन तयोर्विकल्पउक्त इति लक्षणसमन्वयः ॥

एवमेव द्वितीयोदाहरणेऽपि लक्षणसमन्वयस्संभवति । द्वितीयोदाहरणस्येदं तात्पर्यम् । विरहिण्या उक्तिरियम् । पूर्वार्धेन वर्षर्तुकार्यमुक्तम् । वर्षाकाले प्रियविरहो दुस्सहः । एतावता कालेनानुभूयमानस्य मद्दुःखस्यास्मिन्नहनि पर्यवसानं भविष्यति । नेतःपरं दुःखमनुभाव्यम् । अहमिव विरहतमः कान्तोऽस्मिन्नहनि नियतमागमिष्यति । तदा कान्तो दुःखान्तं करिष्यति । यदि नागमिष्यति तदा कृतान्तो यमएव दुःखान्तं करिष्यति । कान्तस्यानागमनेऽद्यैवमरणं भविष्यतीति तदापि न दुःखमिति ॥

अत्र अद्यतनभविष्यत्कालिक कान्तकर्तृक दुःखान्तकरण तादृश कृतान्तकर्तृक दुःखान्तकरणयोरन्यतरस्यावश्यंभावित्वात्तुल्यबलत्वम् । तयोर्युगपदसंभवाद्विरोधः । 'वा' इति तयोर्विकल्प इति प्रथमोदाहरणइव द्वितीयोदाहरणेपिलक्षणसमन्वयस्संभवति ॥

एवं स्थिते कुवलयानन्दकृता 'प्रियसमागमश्चेन्नमरणमाशंसनीयम्, मरणेतु न प्रियसमागमसंभव इति तयोराशंसायां विकल्पः' इति तयोराशंसापर्यन्तानुधावनं किमर्थं कृतमिति नजानीमः, आशंसा नाम अभिलषितस्याप्राप्तस्य प्राप्तीच्छा, प्रियसमागमे सति मरणेच्छा

न भवतीति वक्तुं यद्यपि युक्तम् । मरणे सति प्रियसमागमेच्छा नास्तीति वक्तुं कथंनाम युज्यताम् ? मरणानन्तरमपि यदि प्रियसमागमेच्छा जायेत, तर्हि सा नास्तीति तन्निषेधो युज्येत, निषेधंप्रति प्रतियोगिप्रसिद्धिरावश्यकीखलु । सैवतुन । नचैवमुन्मत्तोपि कथयेत् ॥

किञ्च–' आशंसायां भूतवच्च' इति व्याकरणसूत्रोदाहरणतयेमानि वाक्यान्युपात्तानि ' देवश्चेदवर्षीद्धान्यमवाप्स्म, देवश्चेद्वर्षति धान्यं वपामः । देवश्चेद्वर्षिष्यति धान्यं वप्स्यामः ' इति । अत्र देवकर्तृकवर्षणधान्यावापयोरुभयोराशंसाविषयत्वं लोकानुभवसिद्धम् । तथा प्रकृतपद्येपि प्रियसमागमाशंसामरणाभावाशंसयोर्विवक्षितत्वे, तदा पद्यार्धेनैवं भाव्यम् ' आगमिष्यति चेत्कान्तो न मरिष्यामि हेसखि ' इति । नतु तथा । किन्तु अस्मिन्नेवदिवसे दुःखध्वंसो निश्चीयते, तत्प्रयोजकत्वं च कान्तागमनमरणयोरन्यतरस्य निश्चीयते । तस्मादत्राशंसायाः नैव प्रसक्तिः ॥ अतएवामुं क्लेशं विचिन्त्य रसिकरञ्जनीकारो यथा कथञ्चिदेव व्याचख्याविदं समन्वयवाक्यम् । तथाहि ॥

' ननु कान्तकृतान्तयोर्दुःखान्तकारित्वेकथंविरोधः ? येन विकल्पस्स्यादित्यतआह । प्रियसमागम इति । तथाच प्रियसमागममरणाशंसयोः परस्परविरुद्धयोर्विकल्पः । सच नयद्यपि आहत्य शब्देन प्रतिपादितः, तथापि कान्तकृतान्तयोः पाक्षिकदुःखान्तकारित्वोक्त्या गम्यतइति भावः ' इति ॥

अस्यां व्याख्यायां यद्यपेतथापिग्रन्थाभ्यामेतदुक्तं भवति । आशंसा वाच्यार्थोनभवति । किन्तु तल्लभ्योव्यंग्यार्थ इति । एवञ्च व्यंग्यस्य वाच्यालङ्कारत्वमत्र कोवा ब्रूयात् इत्यतिसूक्ष्मधियो विभावयन्तु । आशंसायाः प्रसक्तिरेवनास्तीतिप्रतिपादितमेव ॥



विषयः (८४) समाधिः

कुवलयानन्दे दृश्यतइयमानुपूर्वी

‘ समाधिः कार्यसौकर्यं कारणान्तरसन्निधेः ।
उत्कण्ठिताच तरुणी जगामास्तञ्च भानुमान् ॥

द्वितीयसमुच्चयप्रतिद्वन्द्वी अयं समाधिः । तत्रहि बहूनां प्रत्येकं समर्थानां खलेकपोतन्यायेन युगपत्कार्यसाधनार्थमवतारः । अत्रत्वेकेन कार्ये समारिप्सिते अन्यस्य काकतालीयन्यायेनापतितस्यैकस्य तत्सौकर्याधायकत्वमात्रम् ’ इति ॥ अनेन वाक्येन द्वितीयसमुच्चयात्समाध्यलंकारस्य भेदः प्रदर्शितो भवति । द्वितीयसमुच्चयलक्षणञ्चेदम् ‘ अहं प्रथमिकाभाजामेक कार्यान्वयोपि सः । कुलं रूपं वयो विद्या धनञ्च मदयन्त्यमुम् ’ इति । तथाच द्वितीयसमुच्चये प्रकृतकार्यसिद्धये बहवो ऽहमहमिकया युगपत्प्रवर्तन्ते । समाधौ प्रकृतकार्यं कर्तुमेकस्मिन्प्रवृत्ते तदन्येनैकेनाकस्मात्साह्यकरणम् । इति तयोर्भेदः फलितः ॥

एवं स्थिते चन्द्रिकाकारः ‘ समुच्चये कारणानां तुल्यकक्षत्वम्, इहतु तद्विपरीतमतुल्यकक्षत्वमिति प्रतिद्वन्द्वित्वम् ’ इत्याह ॥ अनेन वाक्येन द्वितीयसमुच्चयसमाध्योर्भेदः कुवलयानन्दोक्तप्रकारादन्येनैव प्रकारेण कथितो भवति । सचप्रकारोत्यन्तविरुद्धएव ॥ तथाहि । द्वितीयसमुच्चयसमाध्योरुभयोरपि बहूनामेव कारणानां कार्यसौकर्यापादकत्वम् किन्तु समुच्चये कारणानां तुल्यबलत्वम् समाधौपुनस्तेषामेव परस्परं प्राबल्यदौर्बल्ये इति चन्द्रिकाकारपक्षः, एकैनैकस्य प्रकृतकार्यसौकर्यापादनमिति दीक्षितपक्षविरुद्ध इति स्पष्टमेव ॥

नच बहूनां तुल्यकक्षत्वनिषेधादेकस्य तुल्यकक्षत्वमर्थसिद्धं भवतीति वाच्यम् । तदा तुल्यकक्षत्वं कस्यकेनसह ? बहूनांसत्वे खलु तुल्यत्वं नत्वेकस्य । तुल्यत्वस्यानेकपदार्थवृत्तित्वात् । किञ्च

'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते ।
असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम्'

इति हेत्वलङ्कारे सुभ्रूमानच्छेदरूपैककार्यं प्रति शीतांशूदयरूपकारणस्यैकस्यैव प्रतिपादनात्तत्रापि कारणानां तुल्यकक्षत्वाभावस्य विद्यमानत्वात्समाधिहेत्वलङ्कारयोरविशेषापत्तिः ॥ अपि च—कारणानि बहूनि कल्पयित्वा तेषां तुल्यकक्षत्वाभावकथनद्वारा 'एकस्ये' त्यस्यार्थसिद्धत्वकल्पनापेक्षया 'एकस्ये' त्येव प्रयोगे लाघवादविरोधादक्लेशाच्च तथैव भाव्यम् ॥



विषयः (८५) प्रत्यनीकम् (क)

प्रत्यनीकस्यलक्षणोदाहरणे इमे

'प्रत्यनीकं बलवतः शत्रोःपक्षेपराक्रमः ।
जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ ॥'

इति ॥ उदाहरणान्तरञ्चप्रदर्शितंकुवलयानन्दे ।

'मम रूपकीर्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयमिति ।
त्वयि मत्सरादिव निरस्तदयस्सुतरां क्षिणोति खलु तां मदनः ॥'

इति ॥

अत्र रसगङ्गाधरकारेणैवमुक्तम् 'कुवलयानन्दोदाहृतेऽस्मिन्पद्ये हेत्वंशः उत्प्रेक्षांशश्चेत्युभयमपि शाब्दमिति कथङ्कारमस्यालङ्कारस्योदाहरणतां नीतमिदमायुष्मतेति नविद्मः । प्रतिपक्षगतबलवत्त्व स्वात्मगत-दुर्बलत्वयोः प्रतीतेर्हेतूत्प्रेक्षान्तराद्वैलक्षण्यम् । नैतावता हेतूत्प्रेक्षाया बहिर्भवितुमिदमीष्टे । तदविनाभावात् । किन्तु तदवान्तरविशेषीभवितुम् । नहि पृथिव्यवान्तरभेदाद्घटात्पटोविलक्षणइति पृथिव्या बहिर्भवति'

इति ॥ अस्यायं भावः । पद्येऽस्मिन् 'त्वयि मत्सरादिव' इत्यत्र पञ्चम्यन्तमत्सरशब्देन मत्सरस्य हेतुत्वं शब्दशक्त्यैव प्रतिपादितम् । 'इव' इत्यनेनोत्प्रेक्षाचोक्ता । तस्मादत्र हेतूत्प्रेक्षा स्फुटैव । मात्सर्योपपादनमात्रपरं पूर्वार्धम् । तत्र शत्रोः प्रबलत्वं स्वस्य दुर्बलत्वञ्चावगम्यतइति तावन्मात्रेणैव प्रत्यनीकत्वं नसंभवति । किन्तु हेतूत्प्रेक्षैव इति ॥

चन्द्रिकाकारस्त्वत्रप्रतिब्रूते । 'अत्र मत्सरादिवेति हेत्वंशे उत्प्रेक्षासत्वेपि तद्धेतुकप्रतिपक्षसंबन्धिबाधनं प्रत्यनीकालङ्कारस्य विविक्तो विषय इति बोध्यम् । अतएव मम्मटभट्टैरपि ।

त्वं विनिर्जितमनोभवरूपस्साच सुन्दर भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः ॥

इत्युदाहृतम् । एवञ्च 'हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलङ्कारान्तरं भवितुमर्हति' इति कस्यचिद्वचनमनादेयम्' इति ॥ नागेशभट्टोप्यमुमेवार्थं संक्षिप्याह 'हेतूत्प्रेक्षासत्वेपि तद्धेतुकप्रतिपक्षीयबाधेनतद्विषयत्वाच्चिन्त्यमिदम्' इति ॥ अनयोरिदंतात्पर्यम् । 'त्वयिमत्सरादिवे' त्यस्मिन्नंशे हेतूत्प्रेक्षासत्वेपि 'ममरूपकीर्तिम्' इत्यादिपद्यावशिष्टांशे नायकस्य मदनापेक्षया प्रबलशत्रुत्वं, मदनस्य दुर्बलत्वं, नायकसंबन्धिन्यां नायिकायां स्वपराक्रमश्च प्रदर्शित इति प्रत्यनीकालङ्कारोप्यस्तीति तमंशमादाय लक्षणसमन्वय इति । अत्र चन्द्रिकाकारेण पद्येस्मिन्नुत्प्रेक्षावत्प्रत्यनीकालङ्कारोपि वर्तत इत्यत्र काव्यप्रकाशसंवादो दर्शितः, 'अतएव मम्मटभट्टैरपि' इत्यादिना ॥

अत्रायमस्मदीयोऽभिसन्धिः—दीक्षितोदाहृतम् 'ममरूपकीर्ति महरत्' इत्यादिपद्यम्, मम्मटोदाहृतं 'त्वंविनिर्जितमनोभवरूपः'

इत्यादिपद्यञ्च यद्यप्यापाततःसमानार्थकमिव भाति । नतु समानार्थकम् । महतोऽर्थवैलक्षण्यस्य सद्भावात् । तथाहि—मम्मटोदाहृतपद्ये ‘ त्वंविनिर्जितमनोभवरूपः ’ इत्यत्र ‘ विनिर्जितपदेन नायकस्य मदनापेक्षया प्रबलत्वं शत्रुत्वंच वाच्यतयैवोक्तम् । ‘ साच सुन्दर भवत्यनुरक्ता ’ इत्यनेन नायिकायाः नायके सौन्दर्यप्रयुक्तानुरागकथनान्नायकपक्षीयत्वमुक्तम् । अनुशयादिव, द्वेषादिव, भवाद्विषयकादितिशेषः— ‘ भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः ’ इति विश्वकोशात् । कामः पञ्चभिःशरैर्युगपत्तां तापयतीत्युक्त्या शत्रोः पक्षे पराक्रमउक्तः इति प्रत्यनीकत्वं युज्यते ॥

दीक्षितोदाहृतपद्येतु ‘ रूपकीर्तिमहरदि ’ त्युक्त्या ‘ अहरदि ’ ति चौर्यमुक्तं नायकस्य । नतुबलवत्त्वम् । ‘ तदनुप्रविष्टहृदया ’ इत्यनेन यथा चोरो यत्किञ्चिदपहृत्य यत्रकुत्रचित्कक्षादिषु निगूढो वसति तथा नायकोपि मदनरूपकीर्तिमपहृत्य नायिकाया हृदये रहसि प्रविश्य निगूढो वसतिस्म । अतएव ‘ तदनुप्रविष्टहृदयेत्युक्तम्, तेन नायकेन कर्त्रा, अनु, आनुगुण्येन चौर्यानुकूलतया प्रविष्टं प्रवेशाकर्मीकृतं हृदयं यस्याः इति । नत्वनुरक्तेत्यादि नायकपक्षीयत्वप्रतिपादकं पदं किञ्चिन्निविष्टम् । तत्र स्थितं चोरं ज्ञात्वा मत्सरादिवतां क्षिणोति, क्षीणाङ्करोति । तत्प्रहारे को लाभइतिचेत् ? नायिकाहननतात्पर्येण नप्रहरति मदनस्ताम् । अपितु नायिकान्तःप्रविश्यस्थितं नायकं हन्तु मयमारंभः । यथा कश्चन मृगयुरनुधावन्मृगं कक्षान्तःप्रविष्टं तं ज्ञात्वा कक्षे बाणं प्रयुङ्क्ते तथा । अतएव निरस्तदय इति मदनस्य विशेषणम् । अस्य विशेषणस्यायं भावः, कीर्तिमतोमदनस्यातिसुकुमारतनूं तन्वङ्गीमबलां प्रहर्तु मसांप्रतमिति महती दयाऽभूत्, तामपि दयां निरस्य तदन्तस्थितनायकमत्सरात्तथा तां प्रहरतीति । इदन्तु सर्वं तत्तत्पदतदर्थतत्प्रयोजनाभिज्ञानां सहृदयानामतिरोहितमेव ॥

इत्थञ्चात्र पद्ये शत्रुर्नोक्तः । तस्यबलवत्वञ्चनोक्तम् । तत्पक्षीयत्वंच नकस्याप्युक्तम् । इति प्रत्यनीकालङ्कारस्य प्रसक्तिरेव नास्ति । किन्तु हेतूत्प्रेक्षामात्रम् । प्रत्यनीकोदाहरणत्वन्तु सुतरामस्य न संभवति । 'प्रतिपक्षगतबलवत्वस्वात्मगतदुर्बलत्वयोः प्रतीतेः' इति लिखन् रसगङ्गाधरकारोपि अनवधानेन भ्रान्तः । उक्तरीत्या तयोरप्रतीतेः ॥

'त्वंविनिर्जिते' ति मम्मटोदाहरणेतु प्रत्यनीकलक्षणस्यासदुक्तरीत्या समन्वयस्स्वरसः । एतेन चन्द्रिकामर्मप्रकाशयोरुक्तं सर्वमपास्तम् । चन्द्रिकायां तदनुप्रविष्टहृदयेत्यस्य क्लिष्टानन्वितविग्रहद्वयप्रदर्शनमपि तथा । 'तस्मिन्ननुप्रविष्टमनुरक्तं हृदयं यस्याः' 'तस्यानुप्रविष्टं हृदयं यस्यां वा' इति हि तत्प्रदर्शितं विग्रहद्वयम् ॥



विषयः (८६) प्रत्यनीकम् (ख)

प्रत्यनीकोदाहरणतया प्रदर्शितमिदमपि पद्यं कुवलयानन्दे । तत्रेयमानुपूर्वी । 'एवंबलवतिप्रतिपक्षेप्रतिकर्तुमशक्तस्यतदीयबाधनं प्रत्यनीकमितिस्थिते साक्षात्प्रतिपक्षे पराक्रमः प्रत्यनीकमिति कैमुतिकन्यायेनफलति । यथा ।

मधुव्रतौघः कुपितस्स्वकीयमधुप्रपापद्मनिमीलनेन ।
बिम्बं समाक्रम्य बलात्सुधांशोः कलङ्कमङ्कं ध्रुवमातनोति ॥' इति ॥

अत्रेदं विचार्यते, कोस्मिन्पद्येऽलंकारो वाच्यः? को व्यंग्यः? कश्चाङ्गम्? कोवाङ्गीति । मधुव्रतौघः कर्ता सुधांशोर्बिम्बं बलात्समाक्रम्य अङ्के तन्मध्ये कलङ्कं मलिनताम् तनोति ध्रुवम् । अत्र ध्रुवमिति वाचकप्रयोगाद्वाच्योत्प्रेक्षा । कलङ्को विषयः मधुव्रतौघो विषयी नीलिमा निमित्तभूतो धर्मः । तथाचोक्तविषया वस्तूत्प्रेक्षा । 'बिम्बंसमाक्रम्य'

इत्यनेनकलङ्कस्याधिकरणमात्रमुक्तम् । कुतः कलङ्कं तनोतीत्यत्र हेतुरुक्तः 'स्वकीयमधुप्रपापद्मनिमीलनेनकुपितः' इति । अयं भावः । मधुव्रतानां प्रपा पानीयशाला पद्मान्येव । तन्निमीलनेन कुपितास्ते तन्निमीलनकारिणं चन्द्रं कलङ्किनं चक्रुः । लोके धार्मिकाः प्रपाः स्थापयन्ति तत्प्रतिबन्धकारिणस्तु कलुषमपवादञ्च भजन्ति । तथा मधुव्रतप्रपानिमीलनकरणाच्चन्द्रः कलङ्की जातइति । 'कलङ्कोऽङ्कापवादयोः' इति कोशः । तयोरभेदाध्यवसानम् । इत्थञ्च—वाच्या उक्तविषया वस्तूत्प्रेक्षा । व्यंग्यस्त्वपह्नुत्यलङ्कारः 'चन्द्रमध्ये नायं कलङ्कः किन्तूक्तहेतोः कुपितो मधुव्रतौघः' इति ॥

अत्र भ्रमरान्प्रति प्रबलशत्रुत्वं नोक्तं चन्द्रस्य । किन्तु 'अगारदाही गरदः' इत्यादिवत्पापकारित्वमेवोक्तम् । मधुव्रतानां चन्द्रे पराक्रमश्चनोक्तः । किन्तु चन्द्रः स्वकृतपापकर्मणा अपवादवान्कलुषवान्वा बभूवेति । अतःप्रत्यनीकत्वं नास्त्येव ॥

यदि स्वविरोधकरणमात्राच्छत्रुत्वञ्चन्द्रस्य, पद्मनिमीलनस्याप्रतीकार्यत्वाच्च प्रबलत्वम् समाक्रम्यकलङ्ककरणमेव पराक्रमः, इत्यपि कविहृदयमिष्येत, तदापि 'बलवतश्शत्रोः पक्षे पराक्रमः' इति प्रत्यनीकलक्षणस्य सर्वैरालंकारिकैः स्वेनचोक्तस्य कथमत्र समन्वयस्स्यात्? उदाहृतपद्ये प्रबलशत्रावेवपराक्रमात् तत्पक्षेतदभावात् । अत्रापि तथापि यदि प्रत्यनीकमिष्टं, तदा 'पराक्रमोबलवति शत्रौ साक्षाच्च तद्भवेत्' इति द्वितीयप्रत्यनीकस्यापि लक्षणकरणे प्रेक्षावतां सुखप्रतिपत्तिस्स्यात् । इदानीन्तु प्राचीनप्रत्यनीकलक्षणज्ञानां दीक्षितोक्तलक्षणज्ञानाञ्च 'मधुव्रतौघ' इत्यादिपद्ये नकथञ्चिदपि प्रत्यनीकालङ्कारस्फूर्तिर्भवति, कैमुत्यन्यायसञ्चारस्य लक्षणवाक्याघटकत्वादसूचनाच्च ॥

॥ इति प्रत्यनीकम् ॥



## विषयः (८७) काव्यलिङ्गम् (क)

अस्य लक्षणमुदाहरणञ्चेदम्

' समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ।
जितोसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः ॥ '

इति ॥ अत्र लक्षणसमन्वयप्रतिपादकं दीक्षितवाक्यमिदम् । ' अत्र कन्दर्पजयोपन्यासो दुष्करविषयत्वात्समर्थनसापेक्षः, तस्य ' मच्चित्तेस्ति-त्रिलोचनः ' इति स्वान्तःकरणे शिवसन्निधानप्रदर्शनेन समर्थनं काव्य-लिङ्ग ' मिति । अस्य वाक्यस्य व्याख्या चान्द्रिकायाम्, ' दुष्करविषय-त्वात् दुष्करविषयरूपत्वात् । समर्थनापेक्षस्य इत्यनन्तरमर्थस्येतिशेषः ' इति पङ्क्तिर्दृश्यते । एतन्मूलवाक्येतु ' समर्थनापेक्षस्य ' इतिपदमेव नास्ति । अर्थस्येति शेषपूरणं कुत्र कर्तव्यमित्येतदपि नज्ञायते । तस्मा-देतद्व्याख्यासंमतो मूलपाठः कीदृशइतिच नज्ञायते । रसिकरञ्जनी-पुस्तके प्राचीनास्मत्तालपत्रकोशेच पूर्वोक्तएव मूलपाठो दृश्यते ॥

किञ्च—दुष्करविषयत्वादित्यस्य दुष्करविषयरूपत्वात् इति व्याख्या ऽनुपपन्ना । दुष्करविषयत्वं समर्थनसापेक्षत्वञ्च कन्दर्पजयो-पन्यासस्य विशेषणम् उपन्यासश्शब्दप्रयोगः ' जितोसि ' इत्यादिरूपः तस्य विषयः कर्मीभूतः कन्दर्पजयः दुष्करः कष्टसाध्यः । अतएव समर्थ-नसापेक्षः । इति तदर्थः । तथाच दुष्करो विषयो यस्येति बहुव्रीहिः तस्यभावः दुष्करविषयत्वमिति विग्रहः । उक्तचन्द्रिकायान्तु ' दुष्क-रविषयरूपत्वादिति रूपशब्दयोगेन विवरणाद्बहुव्रीहिं विहाय दुष्कर-श्चासौ विषयश्च तस्यभाव इति बोधनादुपन्यासस्यैव दुष्करत्वं ज्ञायते नतुकन्दर्पजयस्य । उपन्यासस्य दुष्करत्वं किं श्लेष्मादिना कण्ठरोधा-दन्यस्माद्वेति नजानीमः ॥



विषयः (८८) काव्यलिङ्गम् (ख)

काव्यलिङ्गएव 'क्वचित्पदार्थवाक्यार्थौ परस्परसापेक्षौ हेतुभावं भजतः । यथावा ॥

चिकुरप्रकरा जयन्ति ते विदुषी मूर्धनि यान्बिभर्ति सा ।
पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छतु चामरेण कः ॥

अत्र चामरस्य दमयन्तीकुन्तलभारसाम्याभावे 'विदुषीमूर्धनियान्बिभर्तिसा' इति वाक्यार्थः 'पशुनाप्यपुरस्कृतेन' इति पदार्थश्चेत्युभयं मिलितं हेतुः' इत्युक्तं कुवलयानन्दे ॥

अत्रेदं विचार्यते 'विदुषी मूर्धनि यान्बिभर्ति सा' इत्यस्य वाक्यत्वमुपपन्नम्, सुप्तिङन्तपदचयरूपत्वात्कारकान्वितक्रियारूपत्वाच्च । तदर्थस्तु वाक्यार्थः । तस्य दमयन्तीकुन्तलभारसाम्याभावे हेतुत्वञ्चोपपन्नम् । यत्तु "'पशुनाप्यपुरस्कृतेने' ति पदार्थश्चे" त्युक्तं तत्र 'पशुना' इत्येकं पदम् । 'अपि' इत्यन्यत् । 'अपुरस्कृतेन' इत्यपरं पदमिति पदत्रयरूपत्वान्नैकपदत्वम् । अपितु वाक्यत्वमेव । नच—अस्या आनुपूर्व्याश्चामरेणेत्यस्य विशेषणत्वाद्वाक्यार्थस्यापूर्णत्वात्तिङन्तपदघटितत्वाभावाच्च न वाक्यत्वम् इति वाच्यं । नागेशभट्टेन शेखरे 'सुप्तिङन्तचयोवाक्यम्' इति नामलिङ्गानुशासनवचनमादाय 'सुबन्तचयस्तिङन्तचयस्सुबन्ततिङन्तचयश्चवाक्य' मिति व्याख्याय, 'चैत्रेणशयितव्य' मिति सुबन्तचयस्य 'पचति तिष्ठती' ति तिङन्तचयस्य, 'चैत्रः पचति' इति सुबन्ततिङन्तचयस्यच वाक्यत्वमुदाहृत्य भाष्यसंमतिश्चात्र प्रदर्शिता । प्रकृते 'पशुनाप्यपुरस्कृतेन' इत्यस्य सुबन्तचयरूपत्वाद्वाक्यत्वमेव । किञ्च—पशुकर्तृक चामरकर्मक तिरस्काररूपकारकान्वित क्रियायास्सत्वाद्वाक्यत्वमेव । नैयायिकमतानुसारेणतु 'शक्तं पदम्' 'वाक्यन्तु पदसमूहः' इति वाक्यत्वमश-

ङ्कितसमाधेयमेव । तस्मात्कथमत्र ' पशुनाप्यपुरस्कृतेन इति पदार्थ ' इति दीक्षितोक्तमिति । चन्द्रिकारसिकरञ्जन्योरयमंशोनोपात्तोव्याख्यातश्च ॥



विषयः (८९) काव्यलिङ्गम् (ग)

अत्र कुवलयानन्दे ' क्वचित्परस्परविरुद्धयोरुभयोस्समर्थनीययोरेकएवहेतुः । यथा ।

जीयादम्बुधितनयाऽधररसमास्वादयन्मुरारिरयम् ।
अंबुधिमथनक्लेशं कलयन्सफलञ्च विफलञ्च ॥

अत्र सफलत्वविफलत्वकलनयोरुभयोर्विरुद्धयोरेकएवाम्बुधितनयाधररसास्वादोहेतुः ' इत्युक्तम् ॥ इदञ्च पद्यञ्चन्द्रिकायामेवं व्याख्यातम्, ' जीयादिति । अंबुधेस्तनयाया लक्ष्म्याः अधररसमास्वादयन्नयं मुरारिः जीयात् सर्वोत्कर्षेण वर्तताम् कीदृशः समुद्रमथनक्लेशम् एवंविधाङ्गनालाभात्सफलङ्कलयन् जानन् एतदधरमाधुर्येसति अमृतस्य वैयर्थ्याद्विफलञ्च कलयन्नित्यर्थः ' इति ॥

अत्रेदं विचार्यते । एकएव मुरारिकर्तृको रमाधररसास्वादः अंबुधिमथनक्लेशस्य सफलत्वविफलत्वज्ञानयोर्विरुद्धयोः कथं हेतुरिति। यद्यपि रमाधररसास्वादेन जलधिमथनक्लेशसाफल्यज्ञानं संभवति । तदास्वादस्य निरतिशयसुखरूपत्वादनितरसाधारणत्वान्मथनक्लेशाभावे तादृशास्वादस्यासंभवाच्च । मथनक्लेशस्य विफलत्वज्ञानन्तु नकथंचिदपि संभवति । तथाहि । अमृतलाभायहि मथनम् । तच्चामृतं रमाधरामृतेनैव चरितार्थमिति तदनन्तरभाविमथनक्लेशनैष्फल्यं वक्तव्यम् । तन्न-संभवति । रमाधरपानं देवानां नास्ति । देवामृतपानं मुरारेर्नास्तीति देवोपकारायैव रमोत्पत्त्यनन्तरभाविमथनक्लेशस्याङ्गीकृतत्वात् रमाधर

रसेन प्रसिद्धामृतस्य नचरितार्थता नापिनिष्फलता ॥ नच–रमाधररसप्रसिद्धामृतरसयोरभेदाध्यवसानाङ्गीकारात्प्रसिद्धामृतस्यापि रमालाभकालएव सिद्धत्वात्तदनन्तरभाविमथनस्य नैष्फल्यमिति वाच्यम् । तयोरभेदाध्यवसानांगीकारादेव रमाधररसस्यापि मथनक्लेशैकलभ्यत्वान्ननिष्फलत्वज्ञानं मथनक्लेशस्य ॥

पद्येतु अमृतवाचकपदमपि नास्ति। येनाभेदाध्यवसायस्यावश्यकता स्यात् । मथनक्लेशस्यच रमालाभानन्तरभावित्वं पूर्वभावित्वंवा नोक्तम् । यदि रमाधररसामृतरसयोर्भिन्नसामग्रीजन्यत्वंस्यात् तयोरभेदाध्यवसायश्चाङ्गीक्रियेत तर्हि अभिन्नस्य तस्य एकया सामग्रया निष्पत्तौ तदन्यसामग्रया निष्फलत्वं वक्तुं शक्येत ॥ यथा मुक्तिमेकां प्रति काशीमरणतत्वज्ञानयोर्भिन्नयोः कारणत्वाङ्गीकारे काशीमरणान्मुक्तौ तत्वज्ञानस्य निष्फलत्वं, तत्वज्ञानान्मुक्तौ काशीमरणस्य निष्फलत्वम् । प्रकृतेतु मथनक्लेशस्यैकत्वात्तस्यैवोभयकारणत्वात्तस्य निष्फलत्वज्ञानं नसंभवत्येव । पद्यकर्तुः कवेस्तु रमाधरे अमृतसादृश्यद्योतनमात्रे तात्पर्यम् अर्थस्त्वनुपपन्नएव ॥

एवमप्यस्य पद्यस्य काव्यलिङ्गोदाहरणतया प्रदर्शनं विवादविषयता प्रदर्शनायैव । नत्वत्र कुवलयानन्दकृतो नैर्भर्यम् । अतएवानुपदमेव वक्ष्यति ‘ इदं काव्यलिङ्गं हेत्वलङ्कारइति केचिद्व्याजह्रुः ’ इति, ‘ एवंजातीयकेषु श्लेषाख्यो गुणएव । नालङ्कार इति जयदेवेनोक्तम् ’ इतिच ॥ एतेन चन्द्रिकोक्तव्याख्यातु कुत्रचित्कोणे निलीना । नैषा दर्शयतिमुखम् ॥



विषयः (९०) काव्यलिङ्गम् (घ)

जयदेवेन श्लेषगुणोदाहरणतया विवक्षितं पद्यमुदाहृतं कुवलयानन्दे तत्कृता ।

'हे गोदावरि देवि तावकतटोद्देशे कलिङ्गः कविः
वाग्देवीं बहुदेशदर्शनसखीं त्यक्त्वा विरक्तिङ्गतः ।
एनामर्णवमध्यसुप्तमुरभिन्नाभीसरोजासनं
ब्रह्माणं गमय क्षितौ कथमसावेकाकिनी स्थास्यति ॥' इति ॥

अत्र पद्ये 'विरक्तिम्' इति पदस्य, 'मुक्तिम्' इति चन्द्रिकायां व्याख्या कृता ॥ साचानुपपन्ना । विरक्तिमित्यत्र 'रञ्जरागे' इति धातुः, ततोभावेक्तिन् । विरभावार्थः तथाच रागाभावो वैराग्यमिति यावत् । मुक्तिमित्यत्रतु 'मुच्लृमोक्षणे' इति धातोर्भावेक्तिन् मोचनमिति तदर्थः । कस्मान्मोचनमितिचेत्? प्रकृतेस्सकाशात्पुरुषस्य; यत्कैवल्यमाचक्षते सांख्याः । नैयायिकास्तु एकविंशतिदुःखध्वंसो मुक्तिरिति । दुःखेषु शरीरस्यापि घटकत्वाच्छरीराद्विमोचनमात्मनः । अद्वैतिमतरीत्या अविद्यानिवृत्तिर्मुक्तिः । इति विरक्तिमुक्त्योरत्यन्तभेदात् । नच–विरक्तिकार्यत्वान्मुक्तेः, 'आयुर्घृत' मितिवत् कारणभूतया विरक्तया कार्यभूता मुक्तिर्लक्ष्यत इति वाच्यम् । मुक्तेर्विरक्तिकार्यत्वाभावात् 'ज्ञानान्मुक्तिः' 'अज्ञानात्संसारः' इति सर्वतान्त्रिकाङ्गीकारात् । वैराग्यस्यतु प्रकृतिलयएव फलम् नतु मुक्तिः । तदुक्तम् 'वैराग्यात्प्रकृतिलयस्संसारो भवति राजसाद्रागात्' इति । अविद्यानिवृत्तिरपि तत्त्वज्ञानादेव । नतु वैराग्यात् । किञ्च–अस्मिन्पद्ये 'हेदेवि गोदावरि कलिङ्गः कविः बहुदेशदर्शनसखीं वाग्देवीं तावकतटोद्देशे त्यक्त्वा विरक्तिं गतः' इत्युक्तया, कश्चित्कलिङ्गाख्यः कलिङ्गदेशीयोवा कविस्स्वकवितावलात् 'विद्वान् सर्वत्र पूज्यते' इति रीत्या बहुषु देशेषु तत्तदधिपतिभिः पूजितस्तत्तत्सहायेन तत्तद्देशान्दृष्ट्वा अन्ततो गोदावरीतीरे 'तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ । अमृतस्यैष सेतुः' इति श्रुत्युक्तरीत्या इतरस्तुत्यादिरूपवाग्व्यापारं विहायध्यान-

परो बभूवेति तात्पर्यं लभ्यते। नतु मृतइति। अतोविरक्तिं गत इत्यस्य रागाभावाद्वाकूसन्यासं कृत्वा मौनमालम्बे इति भावः॥



## विषयः (९१) काव्यलिङ्गम् (ङ)

'हेगोदावरि' इति पद्ये 'श्लेषो विघटमानार्थघटकार्थस्य वर्णनम्' इति लक्षणलक्षितः श्लेषाख्यो गुणएव नतु काव्यलिङ्गालङ्कारः इति जयदेवेनोक्तम्। वस्तुतस्तु अत्रापि पदार्थहेतुकं काव्यलिङ्गमेव इति कुवलयानन्दकृतोक्तम्। अत्र श्लेषाख्यगुणलक्षणपरस्य वाक्यस्य चन्द्रिकायामेवं व्याख्या 'श्लेषोविघटमानार्थेत्यत्र अकारप्रश्लेषः अविघटमानस्य अनुपपद्यमानस्यार्थस्य घटकः उपपादकः योर्थः तस्य वर्णनं श्लेषाख्यो गुणः इत्यर्थः' इति॥

अत्र 'अकारप्रश्लेषः अविघटमानस्य अनुपपद्यमानस्य' इति व्याख्यानमनुपपन्नम्। कुतइतिचेत् 'अयमर्थो घटते' इत्युक्ते 'उपपद्यते' इत्यर्थस्सुप्रसिद्धः। 'अयमर्थो विघटितः' इत्युक्ते 'अनुपपन्नः' इत्यर्थोपि तथैव। 'वि' इत्युपसर्गस्य विरुद्धार्थकत्वात्। अकारप्रश्लेषे कृते 'उपपद्यमानस्यार्थस्योपपादको योर्थस्तस्य वर्णनम्' इत्येवार्थस्य लाभात् स्वाभिप्रायविरुद्धाभिप्रायबोधकएव शब्दः प्रयुक्तस्स्यात्। जयदेवकृत चन्द्रालोकग्रन्थे पञ्चमयूखात्मके चतुर्थस्य गुणमयूखस्यारंभे 'श्लेषोविघटमानार्थघटमानत्ववर्णनम्' इति दृश्यते। तस्य व्याख्या पायगुण्डोपाह्ववैद्यनाथविरचिता एवं दृश्यते, 'योर्थो न घटते संपद्यते तस्य केनचिन्निमित्तेन घटमानत्ववर्णनं यत्सोर्थश्लेषः' इति। तत्राकारप्रश्लेषो नकृतः, विघटमान घटमानपदयोरेव प्रयोगात्तयोरेव विरोधस्स्फुटो ऽवगम्यते। नतु अविघटमानघटमानपदयोः॥

ननु–'विघटमाने' त्यत्र 'विः' विरोधार्थकोन । किन्तु विशेषार्थकः । तथाच 'उपपद्यमानोर्थः' इत्येवार्थः । तत्पूर्व नञर्थस्य अकारस्य योगादनुपपद्यमानार्थकत्वमुच्यत इति चेत्? न । नथासति 'अविघटमानार्थविघटमानत्ववर्णनंश्लेष' इति तल्लक्षणवाक्येन भाव्यम् । अविघटमानविघटमानयोरेव विरोधात् । यदा 'घटकः' इत्यस्य 'उपपादकः' इत्यर्थो वर्णितश्चन्द्रिकाकारेण, तदा अकारप्रश्लेषंविना 'विघटमानपदस्यैव अनुपपद्यमानत्वमर्थो वक्तुं शक्यो युक्तश्च । विघटमान शब्दस्यैवानुपपद्यमानार्थकत्वं सर्वत्र प्रयोगेषु दृश्यते । यथा—कादम्बर्यां 'ग्रासीकृत सामान्य मृणाल लता विवर संक्रामितानीव परस्परहृदयान्यादाय विघटमानेषु रथांगनाम्नां युगलेषु' इति । तथा– तत्रैव 'तटगत विघटित शुक्ति संपुट विप्रकीर्ण मुक्ताफलनिकरमुद्वहति' इति । तत्रैवान्यत्र 'विघटमान कमलषण्ड मधुशीकरासार वर्षिणि' इति । अन्यत्रापि 'घोषैस्स्वैः क्षोभयन्ती विघटितभगवद्योगनिद्रान्समुद्रान्' इति । अत्र सर्वत्र 'विघटमाना' दिपदैर्विश्लेषएवोच्यते, नतु 'घटमान' पदसमानार्थकत्वमिति शब्दस्वभावाभिज्ञैर्विज्ञेयम् । सिद्धान्तकौमुद्याञ्च 'घटचेष्टायां' इति धातुरूपनिरूपणावसरे. 'घटयति' 'विघटयति' इति णिजन्तप्रयोगः मित्वांद्ध्रस्वः इत्युक्तम् । बालमनोरमायामत्र 'घटयति, विघटयती' ति, संश्लेषयति, विश्लेषयतीत्यर्थः' इति व्याख्यातम् । इत्थञ्च—उक्तजयदेवकारिकायां 'अविघटमाने' त्यकारप्रश्लेषश्च नावश्यकः । अविघटमानेत्यस्य अनुपपद्यमानेत्यर्थोप्यनुपपन्नः । किन्तु—'श्लेषःविघटमानार्थघटमानत्ववर्णनम्' इत्येवसाधीयान्पाठः, व्याख्याचास्मदुक्तैव ॥

॥ इति काव्यलिङ्गविचारः ॥



विषयः (९२) विकस्वरः

'यस्मिन्विशेषसामान्यविशेषास्सविकस्वरः' इति लक्षणम् । कुवलयानन्दकृता स्वकृतवरदराजस्तवघटकमिदमुदाहरणतया प्रादर्शि पद्यम् ॥

'मालिन्यमब्जशशिनोर्मधुलिट्कलङ्कौ
धत्तो मुखेतु तव दृक्तिलकाञ्जनाभाम् ।
दोषावितः क्वचन मेलनतो गुणत्वं
वक्तुर्गुणो हि वचने भ्रमविप्रलंभौ' ॥ इति ॥

अत्र पद्ये द्वितीयपादान्ते 'दृक्तिलकाञ्जनाभाम्' इत्येव मुद्रित-कोशेषु सर्वत्र पाठो दृश्यते । अस्मत्तातपादलिखितग्रन्थाक्षरमयप्राचीनतालपत्रकोशे 'दृक्तिलकात्मनाभाम्' इति पाठोदृश्यते । अयमेव पाठस्तुसमीचीनः । विशदीकरिष्यतेचैतत् । चन्द्रिकाकारेणतु–' दृक्ति-लकाञ्जनाभा' मिति पाठमङ्गीकृत्य व्याख्यातम् । इयञ्च तत्रानुपूर्वी । 'मालिन्यमिति मधुलिट् भ्रमरः कलङ्कश्च एतौ अब्जशशिनोः मालिन्यं धत्तः कुरुतः तव मुखेतु दृक्च तिलकाञ्जनश्च तयोराभां शोभां धत्त इत्यनुषज्यते, 'अञ्जनाभे' इति पाठे द्वितीयाद्विवचनम् । उक्तमर्थं सामान्येन समर्थयति' इत्यादि ॥

अस्यां व्याख्यायां दोषोद्भावनाय पद्यं व्याख्यायते मया । अयमभिसन्धिः । भ्रमरः पद्मे मालिन्यञ्जनयति, कलङ्कश्चन्द्रे, एवं प्रत्येकं तत्तदधिकरणे दोषभूतयोस्त्वन्मुखात्मके एकस्मिन्नधिकरणे मिलित्वा स्थितयो श्शोभाजनकत्वरूपं गुणत्वमेव वर्तते । भ्रमरकलङ्कौ कथं मुखे मिलित्वा स्थिताविति चेत्? दृगात्मना भ्रमरः तिलका-त्मना कलंकश्च स्थितौ । तौच तव मुखस्य शोभामेव जनयतः । प्रत्येकं दोषभूतावपि द्वावेकस्मिन्नधिकरणे मिलितौचेद्गुणत्वमुपगच्छतः । यथा

प्रत्येकं दोषभूतो भ्रमः विप्रलम्भश्च कस्मिंश्चिदेकस्मिन्वक्तरि वचनहेतुतया मिलित्वा गुणत्वं भजतः । यथा देवदत्ते गृहस्थितेऽपि नास्तीति भ्रान्तो यज्ञदत्तः प्रष्टारं ब्रह्मदत्तं वञ्चयितुं 'देवदत्तो गृहएव वर्तते' इति यदि ब्रूयात्तदा यज्ञदत्तस्य भ्रमविप्रलम्भौ मिलित्वा देवदत्तगृहस्थितिरूपयथावस्थितवस्तुबोधनाद्गुणत्वं भजतः इति । अत्र पूर्वार्धे विशेषस्य निर्देशः, तृतीयपादे सामान्यस्य, चतुर्थपादे पुनर्विशेषस्येति विकस्वरत्वमिति समन्वयः ॥

यत्तु—'दृक्च तिलकाञ्जनञ्च तयोराभां शोभां धत्तः' इति चन्द्रिकाकारोक्तं, तत्र दृशः तिलकभूताञ्जनस्यच या शोभा तां भ्रमरकलङ्कौ तव मुखे कुरुतः, इत्यर्थे विवक्षिते भ्रमरकलङ्कयोर्मुखे स्थितिरप्रसिद्धा । दृक्तिलकाञ्जनस्थितशोभाधारणमात्रेण मधुलिट्कलङ्कयोः दृक्तिलकाञ्जनाभ्यां सहाभेदाध्यवसायोपि नसिद्ध्यति तेन तयोर्गुणरूपत्वंच नसिद्ध्यति । ततश्च तृतीयपादोक्तस्य 'दोषावितःस्ववचनमेलनतोगुणत्व' मिति सामान्यस्य पूर्वार्धोक्तविशेषस्यच नैकरूपता । यदि चोक्ताभेदाध्यवसायसिद्ध्यर्थमाभापदस्य तद्वृत्त्यसाधारणधर्मे लक्षणामङ्गीकृत्य 'दृक्तिलकाञ्जनतां धत्ते' इत्यर्थो विवक्ष्यते तदापि स्वस्वाधिकरणे प्रत्येकं दोषभूतयोर्मधुलिट्कलङ्कयोर्मुखरूपे एकस्मिन्नधिकरणे दृक्तिलकाञ्जनरूपेण स्थितिमात्रमुक्तं भवति नतु गुणत्वमिति पुनश्च सामान्यविशेषयोर्नैकरूपता । 'तिलकाञ्जनाभे' इति द्वितीयाद्विवचनपाठेपि सएवार्थः । अनुपपत्तिश्च सैव । अतः 'दृक्तिलकात्मनाऽऽभा' मिति पाठेनैवभाव्यम् । 'तिलकात्मने' त्यत्र 'आत्मन्' शब्दस्य 'मृदात्मकोघटः' इत्यत्रेव अभेदार्थकत्वम् । तात्पर्यन्तु पूर्वमेववर्णितम् ॥

रसिकरञ्जनीकारस्त्वत्र ब्रूते, 'मालिन्यमित्यादिपूर्वार्धोक्तार्थस्याप्रसिद्धस्य बुद्ध्यारोहाय प्रयुज्यमानस्य तत्समर्थकस्य 'दोषावितः'

इति तृतीयपादार्थस्य सामान्यस्यापि स्वयमसर्वगोचरतया समर्थकतद्विशेषापेक्षायां तेन विशेषेण सुप्रसिद्धेनैव भाव्यम्। नचोक्तविधया तुरीयपादार्थकथने तत्संभवति । देवदत्तान्वेष्टुरन्योक्तभ्रान्तिपूर्वकाविप्रलंभवचनस्य तत्त्वार्थविषयकतया गुणीभवनरूपस्य विशेषस्य सुतरामप्रसिद्धतया तत्कथनं, सागरमथनस्य प्रस्तरपोतीकरणवदसांप्रतमिति तुरीयपादस्यान्यएवार्थौ वर्णनीयः । तद्यथा—हि यस्मात् वचसि सुभाषिते सुकविप्रयोजिते इति यावत् । भ्रमः सादृश्यनिबन्धनान्यत्वबुद्धिः विप्रलंभः निह्नवः । द्वाविमौ कविना प्रयोजिताविति भावः । वक्तुः तथाविधभ्रान्तिमदपह्नवाद्यलंकातिविन्यसनशीलस्य कवेः कविनिबद्धस्यान्यस्यवा गुणः श्लाघापदमित्यर्थः । तथाविधोक्तेरेव चमत्कारकारित्वादिति भावः । तदुक्तम् ॥

'वक्रोक्तयो यत्र विभूषणानि वाच्यार्थबाधः परमः प्रकर्षः ।
अर्थेषु वोध्येष्वभिधैव दोषस्सा काचिदन्या सरणिः कवीनाम्' ॥

इति । अत्रानेनैव ग्रन्थकृता छेकापह्नुतिविशेषोदाहरणतया प्रपञ्चितार्थं 'पश्चेत्वद्भयने' इत्यादि पद्यमुदाहर्तव्यम्। तत्रहि भगवतो हरेर्लक्ष्म्यादिगोचरतया प्रवर्तितवचोमूलभूतस्य स्वाप्निकस्य भ्रमस्य राधानिर्भर्त्सनानन्तरप्रवर्तितस्य तस्यैव राधापरतया प्रपञ्चनरूपस्य विप्रलम्भस्यच स्वप्नेपि स्वीयगुणानन्दनोद्भावितानवरतस्वानुसन्धानावगतिजनितभगवद्विषयकराधागतप्रेमातिशयरूपो भगवतो गुणएव भवति। तथा तादृशप्रवक्तृपरिकल्पनपूर्वकचमत्कृतार्थस्य कवेश्च सहृदयहृदयाह्लादकः प्रतिभागुणश्च भवतः। इति तत्रच गुणीभवनं भ्रमविप्रलम्भयोर्मिलितयोरेव। नपुनः केवलस्य भ्रमस्यवा विप्रलम्भस्यवेति। अत इत्थं सुप्रसिद्धस्य दोषयोर्मिलितयोर्गुणीभावविशेषस्य युक्तं सामान्यसमर्थकत्वमित्यलं पल्लवितेन' इति ॥

अत्र ' वक्तुर्गुणोहि वचसि भ्रमविप्रलम्भौ ' इति चतुर्थपादस्य चन्द्रिकोक्तरीत्या भाववर्णनं सागरमग्नस्य प्रस्तरपोतीकरणतुल्यमिति यद्रसिकरञ्जनीकारेणोक्तं तदतीवमोदावहं सहृदयानाम्, तादृशार्थस्य कथञ्चिदपि व्युत्पन्नहृदयानारोहात् । किन्तु ' तुरीयपादस्यान्यएवार्थो वर्णनीयः ' इत्युक्त्वा ' तद्यथे ' त्यादिना यद्व्याख्यानं कृतं तन्नु चन्द्रिकापेक्षया क्लिष्टम् विरुद्धञ्च । तथाहि ॥ ' वक्तुः ' इत्यस्य ' भ्रान्तिमदपह्नवाद्यलङ्कारविन्यसनशीलस्य कवेः ' इति, ' वचसि ' इत्यस्य, ' सुकविप्रयोजिते सुभाषिते ' इति, ' भ्रम ' शब्दस्य ' भ्रान्तिमदलङ्कारे ' इति, ' विप्रलम्भ ' शब्दस्य ' अपह्नुत्यलङ्कारे ' इति चार्थः कस्यवा धिषणतुल्यधिषणस्यापि धिषणामारोहतु । चन्द्रिकारीत्या व्याख्यानेतु सर्वेषां पदानां शक्त्यैव सुप्रसिद्धार्थकत्वादतीवस्वारस्यं दृश्यते । तुष्यतुन्यायेन तादृशार्थाङ्गीकारेपि प्रबलमन्यद्बाधकमापतति । प्रत्येकं तत्तदधिकरणे दोषभूतयोरेकत्राधिकरणे गुणत्वं हि वक्तव्यम् । भ्रान्तिमदपह्नवालङ्कारयोरेकत्र काव्ये संभवएव नास्ति, सादृश्यमूलकभ्रान्तेः निषेधपूर्वकाहार्यारोपनिश्चयस्यच विरोधात् ॥

भ्रमविप्रलंभयोरेकत्र संभवस्थानं यत्तेनैव प्रदर्शितं ' पद्मेत्वन्नयने ' इत्यादिपद्यम्, तत्र भ्रान्तिमदलंकारोनास्ति । भ्रान्तेरेवाभावात् । तदङ्गीकारेपि तस्यास्सादृश्यमूलकत्वाभावात् चमत्कारित्वाभावाच्च । ' पद्मे ' ' नीले ' ' महि ' इत्यादिवचसां लक्ष्म्यादिगोचराणां स्वामिकभ्रममूलकत्वमपि नास्ति । अपितु जाग्रद्दशाकालिकतद्विषयकानवरत भावनाकार्यत्वं । यदिच–तादृशवचसां भ्रमकार्यत्वं सुदृढं भवेत्तर्हि राधया निर्भर्त्सनमनुचितमेव । यतो राधापि जानात्येव कृष्णं भ्रान्तम् । भ्रान्तवचसि विवेकिनां कोपो नजायतएव । एवमपह्नुतिरपि नास्ति । अपह्नुतिर्निषेधः विप्रलंभस्तु प्रलोभनं वञ्चना । सात्वत्र वर्तते, वस्तुतोलक्ष्म्यादिपरतयोक्तस्य वचसो राधापरतया परिवर्तनात् । यद्यत्र पद्ये

भ्रान्तिमदपह्नवालंकारौ स्यातां तर्हि संकरस्योदाहरणं स्यात् नतु छेकापह्नुतेः, अन्यस्य शंकायां सत्यां तत्परिहाराय यथावस्थितांशस्य च्छादने कृतेहि च्छेकापह्नुतिः । तत्र 'पद्मे' इत्याद्युत्स्वप्नवचसा कृष्णसमवेतलक्ष्म्यादिविषयकानुरागशंका राधाया जाता । तादृशवचसो राधापरतया अर्थवर्णनात्तथ्यनिह्नवः कृत इतिहि च्छेकापह्नुतित्वम् । 'उत्स्वप्नवचः' इत्यनेन भ्रान्तिरेव यदि विवक्षिता, तर्हि भ्रान्तापह्नुतेरेवोदाहरणं स्यादेतत्पद्यम्' इत्थञ्च दीक्षितवचनविरोधः स्फुटएव । अपिच–प्रत्येकं तत्तदधिकरणे दोषभूतयोरेकत्राधिकरणे मिलितयोर्गुणत्वं हीदानीं प्रतिपादनीयम् । 'पद्मे' इत्यादिपद्ये यदि भ्रान्तिमदपह्नुत्योर्मिलितयोर्गुणत्वंस्यात् तदा केवलभ्रान्तिमदलंकारस्य केवलापह्नुत्यलंकारस्यच दोषत्वंस्यात् । अलंकारस्यापि दोषत्वं कोवाऽऽलंकारिकोऽभ्युपैति ? 'स्याद्वपुस्सुन्दरमपि श्वित्रेणैकेन दुर्भगम्' इति दोषाणां श्वित्रस्थानीयत्वं, 'हारादिवदलंकाराः' इत्यलंकाराणांहारादिभूषणस्थानीयत्वंच सर्वैरालंकारिकैरभ्युपगतमिति श्वित्रभूषणयोरेकत्वं कोवा मन्दोऽभ्युपेयादिति ॥

अत्रेदं चिन्तनीयम् । इदञ्चपद्यं दीक्षितकृतवरदराजस्तवघटकम् । अत्र वरदराजदृशो भ्रमरसादृश्यंकथम् ? 'रामो रक्तान्तलोचनः' 'रामः कमलपत्राक्षः' 'रामो राजीवलोचनः' तंपद्मदलपत्राक्षम्' इत्यादिना भगवतो लोचनस्य कमलसादृश्यावगमात् । 'तञ्चेयमसितेक्षणा' 'तोरणमालिकाविरचितादृष्ट्यैवनेन्दीवरैः' 'पश्यनीलोत्पलद्वन्द्वात्' इत्यादिना स्त्रीलोचनस्यैव नीलत्ववर्णनाच्चेति । नच —दृक्शब्दस्य दृगेकदेशभूतकनीनिकायां लक्षणाङ्गीकारात्कनीनिकाया भ्रमरसादृश्यमुपपद्यतइति वाच्यम् । नारीलोचनेपि कनीनिकामात्रे नीलत्वदर्शनान्नीलोत्पलस्य स्त्रीपुरुषोभयलोचनसाधारण्येनोपमानत्वं स्यात् तथाच कविसमयविरोधःप्रसजेत् ॥

श्रीमन्महीशूरनगरवास्तव्य श्रीमन्महाराज संस्कृतशास्त्र महा पाठशाला प्रकटीक्रियमाण त्रैमासिकपत्रिकायाः १९३० तमक्रिस्ताब्दे प्रथममासे (जनवरि) षष्ठसंपुट प्रथमसंचिकायाष्पष्ठपार्श्वे ‘ कुवलयानन्दपाठसंशोधन ’ नाम्निलेखने ‘ मालिन्यमब्जशशिनो ’ रिति पद्ये चतुर्थपादारंभे ‘ वक्तुर्गुणोही ’ ति स्थाने ‘ वक्तुर्यथेश ’ इति पाठेन भाव्यमिति पाठं संशोध्य ‘ अयमेवपाठो रसिकरञ्जनीकारस्यापि संमतइति भाति ’ इत्युक्त्वा तदीयेच व्याख्याने ‘ यथा विप्रलंभकः ’ इत्यादि रसिकरञ्जनीपङ्क्तिस्तत्र प्रमाणतयोपन्यस्ता । अत्र पाठसंशोधनकाराः कश्चित्कांतान्यायमश्रिश्रयन् । यतस्तृतीयचतुर्थपादयोस्संगतिप्रदर्शनपूर्वकं तात्पर्यवर्णनपरे रसिकरञ्जनीवाक्ये प्रथमघटकं ‘ यथा ’ इति पदंदृष्ट्वा विप्रलब्धाः । व्याख्यास्यतेह्युत्तरत्र प्रतिपदं चतुर्थपादः, ‘ हि यस्मात् वचसि सुभाषिते सुकविप्रयोजिते इतियावत् भ्रमः सादृश्यनिबन्धनान्यत्वबुद्धिः विप्रलंभः निह्नवः द्वाविमौ कविनाप्रयोजिताविितिभावः वक्तुः तथाविधभ्रान्तिमदपह्नवाद्यलंकृतिविन्यसनशीलस्य कवेः कविनिबद्धस्यान्यस्यवा गुणः श्लाघापदमित्यर्थः ’ इति ॥

अत्र व्याख्यायां ‘ वक्तुः ’ ‘ गुणः ’ ‘ हि ’ इति पदत्रयं प्रतीकग्रहणपूर्वकं यदा व्याख्यातं तदा ‘ वक्तुर्यथेश ’ इति पाठस्य कुत्रावकाशः ? एतादृशभ्रमजनकं यथापदञ्च रसिकरञ्जनीकारेण चन्द्रिकाकारपक्षमत्र खण्डयितुं तत्पक्षानुवादारंभे प्रतिपादितम् ॥ रसिकरञ्जनीकारस्याप्येतादृशासंबद्धव्याख्यामूलम् कुवलयानन्दकृतः पद्यप्रणयनमेव । तथाहि । कस्यचिद्विशेषस्य सामान्येन समर्थनं कृत्वा पुनरपि विशेषेण समर्थनेहि विकस्वरालङ्कारः । अन्ततो विशेषे वक्तव्ये ‘ वक्तुर्गुणोहीं ’ ति वाक्ये एकमपि पदं विशेषवाचकं नास्त्येव । सर्वोपि सामान्यशब्दएव ॥

॥ इति विकस्वरविचारः ॥



विषयः (९३) काव्यार्थापत्तिः

अयमलङ्कारो मम्मटेन काव्यप्रकाशे नोक्तः । रुय्यकेणालङ्कारसर्वस्वेतूक्तः । तल्लक्षणं तत्रैवं दृश्यते । 'दण्डापूपिकयाऽर्थान्तरापतनमर्थापत्तिः' इति ॥ एतल्लक्षणसूत्रगतं दण्डापूपिकापदं प्रधानतया अवलम्ब्यापाततः कुवलयानन्दकृता 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इत्येवलक्षणंकृतम् ॥

रसगङ्गाधरकृतातु सर्वस्वकारस्यैवोक्तसूत्रव्याख्यानरूपामानुपूर्वीं समालोच्य तदनुगुणं लक्षणंनिर्मितम्, 'केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्यापत्तिरर्थापत्तिरि' ति ॥ एतन्मूलभूता सर्वस्वकारपाङ्क्तिरियम्, 'ततश्च यथा दण्डभक्षणादपूपभक्षणमर्थायातम् तद्वत्कस्यचिदर्थस्य निष्पत्तौ सामर्थ्यात्समानन्यायत्वलक्षणादर्थान्तरमापतति सार्थापत्तिः' इति ॥

अत्रार्थान्तरस्यापाद्यमानत्वे समानन्यायत्वमेव निमित्तमुक्तम् । कस्यचिदर्थस्य निष्पत्ताविति भावलक्षणसप्तम्या आपादकस्यार्थस्य सिद्धत्वमुक्तम् । 'यथा दण्डभक्षणादपूपभक्षणमर्थायातन्तद्वत्' इत्युक्त्या आपादकस्य दण्डभक्षणस्य सिद्धत्वादपूपभक्षणरूपार्थान्तरस्यापाद्यमानत्वमात्रे दृष्टांन्ततयोपादानं दण्डापूपिकान्यायस्य, नतु तेनैवन्यायेनेतिफलितम् ॥

तस्मात्सर्वस्वकारहृदयविदा जगन्नाथेन दण्डापूपिकांशो लक्षणे परित्यक्तः । तन्न्यायमात्रस्यालंकारत्वं नास्तीत्यपि सूचितं सर्वस्वकारेणैव, 'अर्थापत्तिश्च वाक्यविदां न्याय इति तज्जातीयत्वेनेहाभिधानम्' इति । 'अर्थापत्तिर्वाक्यविदांन्यायः' 'तज्जातीयत्वेन' इत्युक्त्यातत्सिद्धिः ॥

अस्यालङ्कारस्य जगन्नाथकृत श्चतुर्विंशतिधा विभागस्तु सर्वस्वकारतात्पर्यात् । तात्पर्यग्राहकस्तु 'द्वयश्च द्विधा, प्राकरणिकादप्राकर-

णिकस्याप्राकरणिकात्प्राकरणिकस्यचार्थस्यापतनात्' इति । समान न्यायस्यैवापादनहेतुत्वकथनात्समन्यूनाधिकानामप्यर्थानां ग्रहणं सूचितम् ॥

सर्वस्वव्याख्यात्रा विमर्शनीकारेण जयरथेनतु समन्यूनाधिकादिभेदेन भेदः प्रतियोगिविधया कथितः । तस्येयमानुपूर्वी 'द्विधेत्यनेनापततोऽर्थान्तरस्यसाम्यादिना बहुप्रकारत्वं नतथावैचित्र्यावहमिति सूचितम्' इति ॥

अनन्तरमेव 'आपततः पुनरर्थान्तरस्योपादानानुपादानाभ्यां संभवत्यस्या वैचित्र्यम्' इति पूर्वोक्तस्ववचनविरुद्धमभिहितम् । कथं विरोध इतिचेत्? द्विधेत्युक्त्या समन्यूनादिभेदनिषेधवदर्थान्तरस्योपादानानुपादानकृतभेदनिषेधोपि कथं नसिद्ध्येत्? वैचित्र्यन्तु सहृदयहृदयैकवेद्यम् ॥

एवंतत्त्वस्थितौ यद्दीक्षितेन रुय्यकसूत्रमात्रस्यापाततस्सिद्धमर्थमवलंब्य 'कैमुत्येनार्थसंसिद्धिः' इति अर्थापत्तिलक्षणमुक्तम्, तद्दूषयति जगन्नाथः । कैमुत्यन्यायोन्यूनविषयएव कथम्? कठिनतया नीरसतयाच भक्षणानर्हस्य दण्डस्याखुभिर्भक्षणं दुःखसाध्यत्वादधिकम् । मृदुतया रस्यतयाच भक्षणार्हस्य भक्ष्यस्य भक्षणं सुखसाध्यत्वान्न्यूनम् । इति न्यूनविषयत्वम् । एवं–'सजितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम्' इत्यत्र सरसीरुहमुकुलीकरणात्तज्जेतुश्चन्द्रस्य जयो मुखकर्तृकः प्रबलतया अधिकः, चन्द्रजयसिद्धौ तज्जितानां सरसीरुहां जयो न्यून इतिच ॥ अर्थापत्त्यलंकारस्यतु अधिकविषयत्वमपि दृश्यते,

'तवाग्रे यदि दारिद्र्यं स्थितं भूप द्विजन्मनाम् ।
शनैस्सवितुरप्यग्रे तमस्स्थास्यत्यसंशयम् ॥'

इत्यत्रापादिका राजाग्रे द्विजदारिद्र्यस्थितिर्न्यूना । तदपेक्षया आपाद्या सूर्याग्रे तमोवस्थितिरधिका । तस्मादत्राव्याप्तिस्स्यात् । तस्मात्कैमुत्यन्या-

यमात्रस्यार्थापत्त्यलङ्कारत्वं नयुक्तमिति । अत्र प्रतिवक्ति चन्द्रिकाकारो मर्मप्रकाशकृच्च, 'तवाग्रे' इत्यादि भवदुदाहृतपद्ये अर्थापत्तिर्नास्त्येव, किन्तु 'संभावनं यदीत्थं स्यादित्यूहोऽन्यस्यसिद्धये' इति दीक्षितवक्ष्यमाणसंभावनालङ्कारएव' इति ॥

अत्रेदमस्मदीयं प्रतिवचनम् । मम्मटेन रुय्यकेण तदुभयानुवर्तिना जगन्नाथेनच संभावनं नामालङ्कारो न परिगणितएव । तत्र कारणमपि दीक्षितवैद्यनाथनागेशैरेव कथितम् यन्मम्मटपक्षे 'यद्यर्थोक्तौचकल्पनम्' इत्यतिशयोक्तावन्तर्भाव इति । रुय्यकपक्षे त्वर्थापत्तौ, सत्येवं कोविषयस्संभावनालङ्कारस्य ? वादिप्रतिवादिनोर्विवादे प्रस्तुते साक्षिवचनमनादृत्य प्रतिवादिवचनमेव कः प्रमाणीकुर्यात् ? यदपि चन्द्रिकायां "'केनचिदर्थेन' इत्यादि जगन्नाथोक्तं लक्षणमयुक्तम्, 'कावार्ता सरसीरुहाम्' इत्यादि कैमुत्यन्यायविषयार्थापत्तावव्याप्तेः, कैमुत्यन्यायस्य न्यूनविषयत्वेन तुल्यन्यायत्वाभावादापादनाप्रतीतेश्च" इत्युक्तम् ॥

तत्रेदमस्मत्प्रतिवचनम्, यदा जगन्नाथेनार्थापत्तौ समन्यूनाधिकविषयत्वेन विभागः कथितस्तदा न्यूनविषयकार्थापत्त्युदाहरणानां 'कावार्ता' इत्यादीनामपि संग्रहान्नाव्याप्तिदोषावकाशः इति । 'कैमुत्यन्यायमात्रस्य चमत्कारित्वाभावान्नालङ्कारत्व' मिति जगन्नाथोक्ते, चंद्रिकाकारस्येदं प्रतिवचनं, 'अलङ्कारतत्त्वाभियुक्तानां प्राचीनानां शून्यहृदयताया अपामरेण संभावयितुमशक्यत्वात्' इति ॥

अत्रेदमस्मदीयं प्रतिवचनम् । केवात्रालङ्कारतत्त्वाभियुक्ताः ? मम्मटस्तु नाजीगणदिममलङ्कारमित्युक्तमेव । रुय्यकस्तु कैमुत्यन्यायमात्रस्यनालङ्कारत्वं, किन्त्वापादकेनार्थेनापाद्यस्यापादनांशे दृष्टान्ततया कैमुत्यन्यायप्रदर्शनमिति स्ववाक्यैरेव न्यदर्शयत् । एवं सति परिशेषाद्दीक्षितपक्षएवालङ्कारतत्त्वाभियुक्त इति भवदुक्त्या निष्पद्यते । नवयं भवानिव दीक्षितपक्षपातिनः किन्तु मध्यस्थाः इति ॥

यदपिचोक्तं चन्द्रिकाकारेण, 'कैमुत्यन्यायमात्रस्यापि लोके चमत्कारित्वदर्शनादलङ्कारत्वमस्ति' इति । तत्रेदं प्रतिवचनम् । कैमुत्यन्यायमात्रस्य चमत्कारित्वं यदिसहृदयहृदयसाक्षिकम् तर्हि आपादकस्य सिद्धत्वादापाद्यार्थापादनांशे चमत्कारित्वम् । तच्च 'दण्डापूपिकया' इति सूत्रपदव्याख्यानसमये सर्वस्वकारेणैव विवृतमिति नास्माकमवशिष्यते किमपि ॥

ननु—मम्मटपक्षमवलम्ब्य यद्यर्थातिशक्तिरेवोच्यनामत्र, नत्वर्थापत्तिरितिचेन्न । तादृशातिशयोक्तौ आपाद्यापादकयोर्वैपरीत्यएव पर्यवसानम्, यथा ॥

'राकायामकलङ्कश्चेदमृतांशोर्भवेद्वपुः ।
तस्यामुखंतदासाम्यपराभवमवाप्नुयात् ॥'

इति तदुदाहरणे राकायां चन्द्रबिम्बस्याकलङ्कत्वमपि नास्ति, तन्मुखस्य राकाचन्द्रेण पराभवोपि नास्तीति तयोरभावेविश्रान्तिः । एवं दीक्षितकल्पितसंभावनोदाहरणे 'यदिपुनरहंविधिस्स्यां खलजिह्वायां निवेशयिष्यामि । इत्यत्रापि अहं विधिरपि न भविष्यामि, कस्तूरिकागन्धगुणस्य खलजिह्वानिवेशोपि न भवष्यतीति तयोरभावे विश्रान्तिः । अर्थापत्तावापादकंसिद्धम् आपाद्यमानं संभावितमिति महतो भेदस्य विद्यमानत्वात् इति जगन्नाथेनोक्तम् । तच्च प्रत्युक्तं वैद्यनाथनागेशाभ्याम्, 'अयं भवदुक्तोभेदः अतिशयोक्तेरेवावान्तरभेदस्स्यात् नत्वर्थापत्तेः' इति ॥

अत्रास्मत्प्रतिवचनमिदम् । तादृशातिशयोक्तिवक्रा मम्मटेन तादृशभेदाकथनान्नास्माभिरपिकथ्यते । तादृशातिशयोक्तेरेव 'संभावन' मिति नामान्तरं कल्पयता दीक्षितेनापि तादृशभेदाकथनाच्च इति ॥

इत्थञ्च—जगन्नाथरीतिस्सर्वस्वस्वारस्यानुरोधिनी, दीक्षितरीतिस्तु सर्वस्वगत सूत्रप्रथमघटकदण्डापूपिकापदजन्यापातप्रतीतिमात्र शरणा । वैद्यनाथनागेशयोस्सरणिस्तु दीक्षितपक्षपातैकशरणा, इति तु रहस्यम् ॥

॥ इति काव्यार्थापत्तिः ॥



विषयः (९४) मिथ्याध्यवसितिः (क)

अस्यालङ्कारस्योदाहरणतयाप्रदर्शितमिदंपद्यं कुवलयानन्दे,

‘ अस्य क्षोणिपतेः परार्धपरया लक्षीकृतास्संख्यया<br>
प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्तयः ।<br>
गीयन्ते स्वरमष्टमं कलयता जातेन वंध्योदरात्<br>
मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि ॥ ’

इति ॥ अत्र पद्ये ‘ प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः ’ इतिपदस्य चन्द्रिकायामेवं व्याख्या ‘ प्रज्ञाचक्षुषा अन्धेन अवेक्ष्यमाणाश्चताः बधिरश्राव्याश्चेति कर्मधारयः ’ इति ॥ एवंसति ‘ भोज्योष्णम् ’ इति वद्विशेषणोभयपदकर्मधारय इत्युक्तं भवति । यथा भोज्यत्वमुष्णत्वञ्चान्ने, तथा अन्धावेक्ष्यमाणत्वं बधिरश्राव्यत्वञ्चाकीर्तौ वक्तव्यं स्यात् । कीर्तिर्नाम गुणवत्ताप्रथा अकीर्तिश्च दोषवत्ताप्रथा, सात्र शब्दरूपा तथाच शब्दानां यथा संख्यावत्वं, श्रोत्रग्राह्यत्वं, गानकर्मत्वञ्च प्रसिद्धं नतथा अवेक्ष्यमाणत्वम् । शब्दस्य श्रोत्रमात्रग्राह्यगुणत्वात् चक्षुर्ग्राह्यत्वाभावाच्च । अतः ‘ प्रज्ञाचक्षुर्भिः अन्धैः अवेक्ष्यमाणाः ये बधिराः तैः श्राव्याः ’ इत्यर्थादवेक्ष्यमाणत्वं बधिरेषु विशेषणं नत्वकीर्तिषु । नचात्र मिथ्याभूतार्थानां सर्वेषां अकीर्तावेव विशेषणत्वं वक्तव्यमिति वाच्यम् । अकीर्तिगानकर्तरि मूकप्रकरे विशेषणभूतं वन्ध्योदरजातत्वमप्यकीर्तौ विशेषणमिति नहि वक्तुं शक्यम् । तथेहापि ॥



## विषयः (९५) मिथ्याध्यवसितिः (ख)

अयमलङ्कारः काव्यप्रकाशे सर्वस्वे रसगङ्गाधरेवा नोक्तः। किन्तु दीक्षितमात्रकल्पितः—अस्यप्रथमोदाहरणं 'वेश्यां वशयेत्खस्रजं वहन्' इतीदं निदर्शनागर्भमित्युक्तं दीक्षितेन। अत्र जगन्नाथः, 'ननिदर्शनागर्भत्वं, किन्तु निदर्शनैवे' त्याह। युक्तश्चैतत्, "'त्वयि सति शिवदातरि' 'दोर्भ्यामब्धिं तितीर्षन्तस्तुष्टुवुस्ते गुणार्णवम्' इत्यादिषु वाक्यभेदाभावेपि वाक्यार्थवृत्तिरेव निदर्शना, विशिष्टयोरैक्यारोपसद्भावात्" इति निदर्शनाप्रकरणे दीक्षितोक्तया, दोर्भ्यामब्धितरणं तव गुणानां स्तुतिकरणञ्चैकमितिवत्, खस्रग्वहनं वेश्यावशीकरणञ्चैकमित्यर्थस्य, तत्तत्प्रतिपादकशब्दानामपि समानरूपत्वात्। यदि निदर्शनैव वाक्यं सर्वमाक्रामेत्तर्हि मिथ्याध्यवसितेः कुत्रावकाशः?

किञ्च दीक्षितेनैव मिथ्याध्यवसितेस्संबन्धातिशयोक्त्यपेक्षया भेदएव नास्तीत्याशंक्य, एकस्मिन्नपि वाक्ये अनेकार्थबोधकत्वस्य सत्वात्तत्तदवच्छेदकरूपमवलंब्य तत्तदलंकारत्वं निर्वाह्यमित्युक्तम्। एवञ्चास्मिन्नुदाहरणे संबन्धातिशयोक्तिरनुमता दीक्षितेन। एवमन्याक्रान्तत्वे संमते प्रौढोक्तिमेव मन्यते जगन्नाथः। नतु मिथ्याध्यवसितिम्। मिथ्याध्यवसितेरलङ्कारत्वे सत्याध्यवसितेरप्यलङ्कारान्तरत्वं स्यादितिचाह॥

मिथ्याध्यवसितौ चमत्कारोस्ति, सत्याध्यवसितौ सनास्तीति वैद्यनाथनागेशौ॥

प्राचीनालङ्कारिकानङ्गीकृतत्वं स्वकपोलकल्पितत्वं, अनेकालंकारान्तराक्रान्तत्वञ्चेत्यस्वरसता दीक्षितपक्षस्य॥

॥ इति मिथ्याध्यवसितिः॥



विषयः (९६) ललितम्

ललितालङ्कारोपि प्रकाशे सर्वस्वेवा नगणितः । कुवलयानन्देतु प्रतिपादितः ।

'क सूर्यप्रभवो वंशः क्वचाल्पविषया मतिः ।
निर्तीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'

इति श्लोकश्चोदाहृतः । ललितालङ्कारानङ्गीकर्तृमम्मटादिपक्षे 'क्वसूर्ये' त्यादिपद्ये निदर्शनैवोक्ता । तयैव चारितार्थ्यात् ॥

'अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य' इतीदमपि पद्यमुदाहरणं ललितस्येत्युक्तं कुवलयानन्दे । जगन्नाथेनत्वस्मिन्पद्ये पर्यायोक्तमेव । तल्लक्षणस्यैव समन्वयात् इतिउक्तम् । यद्यद्दीक्षितकल्पितालंकारोदाहरणं तत्तदलंकारान्तरेण गतार्थंवक्ति सोपपादनं जगन्नाथः । वैद्यनाथस्तु तादृशस्थले सर्वत्र 'उपधेयसंकरेप्युपाधेरसंकरः' इति ब्रह्मास्त्रं प्रयुङ्क्ते । एतत्प्रयोगेणायमर्थो निष्पद्यते । उक्तोदाहरणेषु जगन्नाथोपपादितो ऽलंकारो नास्तीति निषेद्धमशक्यम्, अपितु तत्ताद्विवक्षितार्थगतावच्छेदकरूपभेदमवलंब्य दीक्षितोक्तालंकारोपि निर्वोढुं शक्य इति । एवंसति कःपक्षः प्रबल इति परीक्षकैरेव सूक्ष्मेक्षिकयेक्षणीयम् । जगन्नाथोपपादनप्रकारस्तु रसगङ्गाधरएव द्रष्टव्यः । विस्तरभियानलिख्यते ॥

॥ इति ललितम् ॥



विषयः (९७) प्रहर्षणम् (क)

प्रहर्षणस्य लक्षणमुदाहरणञ्चेदम्,

'उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् ।
तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका ॥'

इति ॥ अत्र चन्द्रिका ' तामेवेति दूतिकामेवेत्यर्थः निसृष्टा प्रेषिता ' इति ॥ एवं व्याख्यातुरयं भावः कश्चन नायकः नायिकया प्रेषणीयां काञ्चिद्दूतीमद्यापि नागतेति चिन्तयन्नासीत् । तदा सैव दूतिका नायिकया प्रेषिता । समागतेति शेषः । प्रेषणमात्रेण हर्षानुदयात् । इति ॥ एवं व्याख्यायामिमे दोषाः ।

(१) ध्यानं नाम अविच्छिन्ना स्मृतिसन्ततिरिति योगवेदान्तादि सकलशास्त्रप्रसिद्धम् । तच्च ध्यानं नायिकाविषयकमुचितं नायकस्य । नतु दूतीविषयकम्, अनौचित्यादननुभवाच्च । (२) ' निसृष्टा प्रेषिता ' इत्युक्त्या प्रेषणमात्रेण नकिञ्चित्प्रयोजनमन्यत्रगतायाः । तस्या ' दागता ' इति पदमध्याहार्यम् । (३) ' नायिकया ' इत्यप्यध्याहर्तव्यम्, कर्तृपदस्यावश्यकत्वात् । (४) ' निसृष्टा ' इत्यस्य ' प्रेषिता ' इत्यर्थोऽप्यनुपपन्नः । तदा ' विसृष्टा ' इति भाव्यम् । (५) ' दूतीं चिन्तयतो नायकस्य सकाशं नायिका दूतीं प्रेषयामास ' इत्युक्ते नकश्चिच्चमत्कार इति कथमलंकारभावं भजेत् ? (६) दूतीप्रेषणे नायिकैव प्रभवतीति तस्या एव प्रयत्नः नतु नायकस्य, एवंसति कथं प्रहर्षणम् ? यत्नसाध्यस्य यत्नंविना सिद्धौ खल्वयमलङ्कारः ॥ (७) दूतीप्रेषणमात्रादागमनमात्राद्वा उत्कण्ठितार्थसंसिद्धिश्चनास्ति । उत्कण्ठा नाम

' सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते ।
तत्प्राप्तीच्छां ससङ्कल्पा मुत्कण्ठां कवयो विदुः ॥ '

इत्युक्तलक्षणविलक्षणविषयविषयिणी उत्कटेच्छा । एतादृशेच्छाविषयत्वं दूतिकायाएव प्रतिपादयन्कीदृशीं सहृदयतापदवीमधितिष्ठतु इति विमृशन्तुभावुकाः । (८) दूतिकाया एव तादृशेच्छाविषयत्वाभ्युपगमे नायिकापेक्षया दूत्यामेव नायकस्यात्यासङ्गप्रतीत्या प्रधानरसप्रतिबन्धादाभासता ॥ तस्मादुक्तव्याख्या सर्वथा अनुपपन्ना ॥

अतः 'तामेवे' त्यादिवाक्यमेवं व्याख्येयम् । 'तामेव नायिकामेव ध्यायते अविच्छेदं चिन्तयते तस्मै नायकाय तमुद्दिश्य सैव नायिकैव निसृष्टा दूतिका निसृष्टार्थदूतिकाख्या दूती अभूदितिच सिद्धमेव । नायिकां ध्यायतो नायकस्य सकाशं नायिकैव दूतीभूत्वा समागतेत्यर्थः । नायिका कथं दूतीभवतीतिचेत्? तदुक्तं प्रतापरूद्रीये, 'अथासां नायकानुकूलने सहायाः । दूती दासी सखी चेटी धात्रेयी प्रातिवेशिनी । लिङ्गिनी शिल्पिनी स्वाच सहायाः परिकीर्तिताः' इति ॥ अत्र 'स्वाचे' त्यनेन नायिकाया अपि दूतीत्वमभ्युपगतं तद्ज्ञैः ॥ निसृष्टार्थदूतीलक्षणञ्चोक्तं लाक्षणिकैः,

'रूढानुरागयोर्यूनोरभिलाषं मनोगतम् ।
ज्ञात्वा ताभ्यामनादिष्टा तदपेक्षितसिद्धये ॥
या प्रवर्तेत साप्रोक्ता निसृष्टार्थेति कोविदैः ।
निसृष्टः कार्यभारोऽस्यामिति व्युत्पत्तिसंभवात् ॥'

इति ॥ कौटिल्यश्चाह 'यत्कृतास्संध्यादयः प्रमाणं स निसृष्टार्थो दूतः, यथा भगवान्पाण्डवानाम्' इति ॥ भवभूतिना चोक्तं मालतीमाधवे 'अत्युदारप्रकृतिर्मालतीनाम, निपुणं निसृष्टार्थदूतकिल्पस्तन्त्रयितव्यः' इति ॥ मालती उदारप्रकृतित्वाद्यथा स्वयमेव निसृष्टार्थदूती भूत्वा माधवमुपसर्पेत्तथा सन्निवेशस्सन्धेय इति तदर्थः । एवं चास्मद्व्याख्यायां चन्द्रिकोपर्युद्घाटिता अष्टापि दोषा नप्रसजन्तीति सहृदयानामतिरोहितमेवैतत् । अतो विस्तरः परित्यक्तः ॥



विषयः (९८) प्रहर्षणम् (ख)

अस्यैवालङ्कारस्योदाहरणे गीतगोविन्दमङ्गलपद्ये 'नक्तंभीरुरयं' इत्यंशस्य चन्द्रिकायां 'नक्तम् रात्रिः अस्तीतिशेषः' इति व्याख्या

दृश्यते । साचानुपपन्ना । किन्तु ‘ नक्तं रात्रौ ’ इति व्याख्यया भाव्यम् । ‘ दिवाह्नीत्यथ दोषाच नक्तञ्च रजनाविति ’ इति कोशानुसारेण ‘ नक्त ’ मित्यव्ययस्य ‘ रात्रिरूपाधिकरणे ’ इत्यस्मिन्नेवार्थे निपातनात् । नतु ‘ रात्रिः ’ इत्याद्यर्थे । अतएव ‘ अस्ति ’ इति शेषपूरणमपि नकार्यमेव । भीरुरित्यत्रान्वयात् । भीरुः भयशीलः ‘ भियः क्रुक्लुकनौ ’ इति सूत्रात् ‘ ञिभीभये ’ इति धातोस्ताच्छील्ये क्रुप्रत्यये भीरुरिति रूपम् अयं कृष्णः नक्तं भीरुः रात्रौ भयशीलः । तस्माद्राधे त्वमेवैनं गृहं प्रापयेत्यर्थः ॥



विषयः (९९) प्रहर्षणम् (ग)

द्वितीयप्रहर्षणलक्षणमिदम् ‘ वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् ’ इति । अस्योदाहरणंकुवलयानन्दे ।

‘ चातकस्त्रिचतुरान्पयःकणान्याचते जलधरं पिपासया ।
सोपि पूरयति विश्वमंभसा हन्त हन्त महतामुदारता ॥ ’ इति ॥

अत्र रसगङ्गाधरकारो वक्ति, अस्यालङ्कारस्यान्वर्थं नाम प्रहर्षणमिति । प्रकृष्टो हर्षस्तदर्थः । सच वांछितापेक्षया अधिकार्थस्य लाभेनवा, तदनुभवेनवा भवेत् । तादृशहर्षाभावे अयमलङ्कारो नभवत्येव । प्रकृते चातकस्य वाञ्छितास्त्रिचतुराः पयःकणाः जलधरस्तु पयसा विश्वं पूरयति । विश्वपूरणेन चातकस्य नकश्चिल्लाभो भोगो हर्षश्च । तस्मान्नेदमुदाहरणं भवितुमर्हतीति । अयन्तु तदुक्तिपिण्डितार्थोऽस्मल्लिखितः ॥ अत्र चन्द्रिकाकारः प्रतिब्रूते । तस्येयमानुपूर्वी ‘ नहि क्षुदुपशमनाय तत्पर्याप्तान्नमात्रार्थिनस्तदधिकान्नलाभे हर्षाधिक्यं नास्तीति वक्तुं शक्यते, तदानीमुपयोगाभावेपि स्वस्यैव कालान्तरे तदुपयोगसत्त्वात् । नच चातकस्य जलसंग्रहानुपयोगाद्धै-

धर्म्यं शङ्कनीयम् । चातकवृत्तान्तस्याप्रस्तुततया तद्व्यंग्ये प्रस्तुतदातृयाचकवृत्तान्ते पर्यवसानात्' इति ॥

अत्रेदं विचार्यते कस्मिन्पक्षे चकास्त्यौचितीति । पद्ये शब्दवाच्यस्य चातकस्य जलधरकर्तृकांभःकरणकजगत्पूरणेन नकश्चिल्लाभ इति जगन्नाथेनोक्ते वैद्यनाथेन तत्प्रतीकाराय मनुष्यस्याधिकान्नलाभो हर्षहेतुतया दृष्टान्तीक्रियते । तदनुपपन्नम् । मनुष्यस्तु क्षुधा बाधितः परेद्युरन्नं पर्युषितमपि भोक्तुमर्हति । चातकस्तु नतथा । 'भूमौ निपतितं तोयं चातकस्य विषं भवेत्' इति तस्य तेनानुपयोगात् ॥

इदन्तु वैधर्म्यं वैद्यनाथेन स्वेनैवोक्तम्, 'नच चातकस्य जलसंग्रहानुपयोगाद्वैधर्म्यं शङ्कनीय' मिति । एतेन पूर्वोक्तो मनुष्यदृष्टान्तस्स्वेनैव निरस्तः। ततश्च जगन्नाथोक्तिस्स्थिरीकृता । पुनस्तत्परिहाराय 'चातकवृत्तान्तस्याप्रस्तुततया तद्व्यंग्ये प्रस्तुतदातृयाचकवृत्तान्ते काव्यस्य पर्यवसानात्' इत्युक्तम् । अत्रापीदं विचार्यते । पद्येऽस्मिन्कस्मिन्नंशे कोवाऽलङ्कारोवाच्यः किंवा व्यंग्यमिति ॥ 'उक्तिरर्थान्तरन्यासस्स्यात्सामान्यविशेषयो' रित्युक्तलक्षणोऽर्थान्तरन्यासस्स्फुटएव । यतोत्र 'चातक' इत्यादिपादत्रयप्रतिपादितः जलधरकर्तृकांभःकरणकजगत्पूरणरूपविशेषः 'हन्तहन्त महतामुदारता' इति महापुरुषसमवेतविस्मयजनकोदारतारूपसामान्येन समर्थितः ॥ अनेनचार्थान्तरन्यासेन दातुरुत्कर्षो व्यंग्यः । अत्र चातकस्य प्रथमपादे कथनं जलधरकर्तृकजगत्पूरणे निमित्तमात्रतया । तद्याचनादेव वर्षकथनात् । नतु विशेषनिर्देशकतया । चातकस्यैव विशेषनिर्देशपरत्वे सामान्यनिर्देशपरे 'हन्तहन्तमहतामुदारता' इति स्थाने 'याचकस्य बत भाग्यधोरणी' इति चातकप्रतिकोटिभूतयाचकनिर्देशस्स्यात् । तदभावाच्चातकस्य विशेषतयानिवेशाभावस्सिद्धः । इत्थञ्चार्थान्तरन्यासः पद्यं

सर्वेत आक्रम्य प्रहर्षणालङ्कारं निरकासयत् । यदि्च–' हन्ते ' त्यादि-सामान्यनिर्देशं विहाय पादत्रयमात्रमवलंव्य ' वाञ्छितादधिकार्थस्य संसिद्धिश्चप्रहर्षणम् ' इत्युक्तलक्षणसमन्वयः क्रियते, तदा जगन्नाथोक्तरीत्या प्रहर्षणशब्दार्थस्यैवासंभवादसंभवएव ॥

किञ्च—अत्र चातकवृत्तान्तोऽप्रस्तुतः प्रस्तुतोवा ? अप्रस्तुत इति वैद्यनाथनागेशौ । वस्तुतस्त्वप्रस्तुतो नभवति । नह्यत्र पद्ये अप्रस्तुतप्रशंसालङ्कारः, येन चातकवृत्तान्तोऽप्रस्तुतस्स्यात् । ' एकः कृती शकुन्तेषु योऽन्यं शक्रान्नयाचते ' इत्यप्रस्तुतप्रशंसोदाहरणे अप्रस्तुतस्यैव चातकवृत्तान्तस्य शब्दतःकथनं । तत्सदृशस्य क्षुद्रपुरुषयाचनानिवृत्तमानिपुरुषवृत्तान्तस्यतु व्यञ्जनयैव । नतुशब्दतः ॥

अर्थान्तरन्यासेतु प्रस्तुताप्रस्तुतयोरुभयोरपि सामान्यविशेषयोश्शाब्दत्वम् । उभयोश्शाब्दत्वेपि प्रथमनिर्दिष्टस्य विशेषस्य सामान्यस्यवा प्रस्तुतत्वम् अनन्तरनिर्दिष्टस्याप्रस्तुतत्वम्, इत्यर्थान्तरन्यासप्रकरणेदीक्षितनिर्णीतम्, ' प्रस्तुतसमर्थकतयैवाप्रस्तुतस्योपयोग इहापि वक्तव्यः ' इति ।

इत्थञ्च प्रकृतपद्ये अर्थान्तरन्यासस्यैव सर्वाभ्युपगतत्वात् चातकस्य विशेषकोटिप्रविष्टत्वात् विशेषस्य चातकस्य प्रस्तुतत्वमेवाङ्गीकरणीयम्, ' हन्तहन्ते ' तिसामान्येनाप्रस्तुतेन प्रस्तुतस्यविशेषस्य समर्थनात् । तस्मात् चन्द्रिकोक्तं चातकवृत्तान्तस्याप्रस्तुतत्वं दीक्षितोक्तिविरुद्धत्वादत्यन्तानुपपन्नमेव । तथानागेशोक्तमपि । तथा चन्द्रिकोक्तं दातृयाचकवृत्तान्तस्य व्यंग्यत्वं नास्ति ' हन्तहन्तमहतामुदारता ' इति दातृपुरुषवृत्तान्तस्य शब्दवाच्यत्वात् शब्दवाच्यस्य व्यंग्यत्वाभावात् । एवं प्रस्तुतत्वमपि नास्ति । अर्थान्तरन्यासे प्रथमनिर्दिष्टं प्रस्तुतमनन्तरनिर्दिष्टमप्रस्तुतमिति दीक्षितसिद्धान्तात् अत्र ' हन्ते ' त्यादिना दातृ-

पुरुषवृत्तान्तस्यानन्तरनिर्दिष्टत्वात् । अन्यच्च —चन्द्रिकामर्मप्रकाशयो-रियमुक्तिरेतत्पद्यप्रतिपाद्यार्थान्तरन्यासे अप्रस्तुतप्रशंसाभ्रममपितयोर्व्य-नक्ति । तथाच—जगन्नाथोक्तं दीक्षितदूषणमुभाभ्यामपि स्थूणानिखन-न्यायेन दृढीकृतम् ॥



विषयः (१००) प्रहर्षणम् (घ)

तृतीयप्रहर्षणस्यलक्षणमुदाहरणञ्चेदम् ।

‘ यत्नादुपायसिद्ध्यर्थात्साक्षाल्लाभः फलस्यच ।
निध्यञ्जनौषधीमूलं खनता साधिता निधिः ॥ ’

इति । उदाहरणान्तरमपि कुवलयानन्दे,

‘ उज्झित्य प्रथममधस्स्थितं मृगाक्षी
पुष्पौघं श्रितविटपं गृहीतुकामा ।
आरोढुं पदमदधादशोकयष्ट्यामामूलं
पुनरपि तेन पुष्पिता ऽभूत् ॥ ’

इति ॥ अत्र श्रीमन्महीशूरनगरवास्तव्य श्रीमन्महाराज संस्कृतशास्त्र महापाठशालातः प्रकटीक्रियमाणायां त्रैमासिकपत्रिकायां १९३० क्रिस्ताब्दे, ‘ जनवरि ’ मासे षष्ठसंपुटप्रथमसञ्चिकायां चतुर्थपार्श्वे ‘ कुवलयानन्दपाठसंशोधनाख्ये लेखे पङ्क्तिरेवं दृश्यते । ‘ प्रहर्षणालं-कारे ‘ उज्झित्य प्रथममधस्स्थित ’ मिति श्लोके उज्झधातोरनुपसृष्टात् क्त्वोल्यबादेशाभावात् ‘ उज्झित्वाप्रथम ’ मिति पठनीयम् । ‘ उच्छि-त्यप्रथमं ’ इति पाठान्तरञ्चास्ती ’ ति ॥

अत्रेदं विचार्यते । यद्यपि तल्लेखकैश्शब्दसाधुत्वं केवलं विचार्य शोधितम् । अर्थविचारे दृष्टिस्तु न निहिता । कुतइतिचेत् ? ‘ उज्झित्वा ’ इति तच्छोधितपाठाङ्गीकारे पद्यस्यायमर्थोऽवगम्यते ‘मृगा-

क्षी अधस्स्थितम् अशोकवृक्षस्कंधस्थितम् पुष्पौघं स्वयं भूमिस्थितयापि हस्तग्राह्यमितियावत् उज्झित्वा परित्यज्य अनपचित्येतियावत् । श्रितविटपं पुष्पौघं गृहीतुकामा शाखास्थितं पुष्पौघमपचेतुकामासती अशोकयष्ट्यां तन्मूलदेशे पदमदधात् स्वपादं न्यस्यतिस्म तेन पादन्यासेन अशोकयष्टिः तत्स्कन्धदेशः पुनरपि पुष्पितोऽभूदिति ॥

यद्येवं मूलदेशस्थितं हस्तग्राह्यं कुसुममनपचित्य शाखास्थपुष्प ग्रहणप्रवृत्तिरेव प्रथममनुपपन्ना । किञ्च मूलदेशस्थितपुष्पाणामनपचितत्वात्तत्रैव सत्सु पुष्पेषु पुनरप्यशोकयष्टिरामूलं पुष्पिताऽभूदित्युक्तिरत्यन्तविरुद्धा । अन्यच्च मूलदेशस्थितपुष्पत्यागे प्राथम्यं कीदृशम्? किं प्रथमं त्यक्त्वा पुनर्मूलस्थितं कुसुमं तत्याजेत्युच्यते? । अपरञ्च दीक्षितवचनविरोधः । तद्वचनन्तु ‘अत्र पुष्पग्रहणोपायभूतारोहण-सिद्ध्यर्थात्पदनिधानात्तत्रैव पुष्पग्रहणलाभः’ इति । अत्रारोहणसिद्ध्यर्थात्पदनिधानादनन्तरं मूलदेशएव पुष्पग्रहणलाभकथनात्पादनिधानात्पूर्वमपि मूलदेशे कुसुमस्थितौ अनन्तरंकुसुमलाभः कुतः? इति दीक्षितोक्तिविरोधस्स्फुटएव । यदपि ‘उच्छिद्यप्रथममितिपाठान्तरंचास्ति’ इति लिखितम् तत्राप्यनुपपत्तिः । उदित्युपसर्गपूर्वकछिदिर्धातोर्ल्यपि कृते ‘उच्छिद्ये’ति रूपेणभाव्यम् । प्राचीनास्सत्तालपत्रकोशे ‘उच्छिद्य’ इत्येवपाठो दृश्यते। सोपिपाठो नसुखञ्जनयति, कुसुमानामुच्छेदस्याननुरूपत्वात् । कुसुमापचयप्रकरणात् । तस्मात् ‘उच्चित्य’ इत्येव पाठस्साधीयान् । उत्पूर्वकात् ‘चिञ्चयने’ इति धातोर्ल्यपि ‘उच्चित्ये’तिरूपम् । उच्चयोनामैकत्र पिटकादौ राशीकरणम् । तथाच पद्यस्येदं तात्पर्यम् ॥

काचिदशोकवृक्षस्य मूलदेशस्थितानि कुसुमानि प्रथममेव हस्तप्राप्यत्वादपचित्य पुष्पभाजने निधाय शाखासु स्थितानि कुसुमानि

ग्रहीतुं वृक्षारोहणाय मूलदेशे पादं न्यधात् । युवतीपादस्पर्शस्याशोकतरुदोहलरूपत्वात्कुसुमरहितमूलदेशेपि पुनरपि पुष्पाण्युद्भूवन् ततश्च वृक्षारोहणं विनैव मूलदेशएव भूमिस्थितयैव कुसुमापचयः कृतइति । लक्षणसमन्वयस्तु सुग्रहएव ॥ मदरास्मुद्रितान्ध्रलिपिपुस्तके, कुंभघोणमुद्रितरसिकरञ्जनीपुस्तकेच 'उज्झित्य' इत्येवपाठः । अस्मत्तालपत्रपुस्तके 'उच्छिद्य' इति । चन्द्रिकायामिदं पदं नगृहीतं नवा व्याख्यातम् । रसिकरञ्जन्यान्तु 'अधोभागावस्थितपुष्पापचये' इति तात्पर्यवर्णनसरण्या अपचयशब्देन पद्यस्थं किं पदं व्याख्यातमिति नज्ञायते । तस्मात् मुम्बइनिर्णयसागरयन्त्रालयमुद्रितपुस्तकस्थः 'उच्चित्य' इत्ययमेव पाठस्सुसमीचीनः । नतु कुवलयानन्दपाठसंशोधनसंशोधितः 'उज्झित्वा' 'उच्छित्य' इतिवा पाठः ॥

॥ इति प्रहर्षणम् ॥



## विषयः (१०१) 'उल्लासः' (क)

इदमुल्लासलक्षणम् । 'एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि' इति । अस्यार्थः—एकस्य गुणेनान्यस्य गुणः, एकस्य दोषेणान्यस्यदोषः, एकस्यगुणेनान्यस्यदोषः, एकस्यदोषेणान्यस्य गुणोवा वर्ण्यते चेदुल्लासालंकार इति । सचैवं चतुर्धा । तत्र प्रथमस्य एकस्य गुणेनान्यगुणवर्णनरूपस्योदाहरणं 'अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी' इति । चन्द्रिकायामस्य वाक्यस्य व्याख्या । 'अपीति । अपिस्संभावनायाम्, साध्वी, पतिव्रता, स्नात्वा मां पावयेदिति जाह्नवी इच्छती त्यन्वयः' इति । एतदपेक्षया सरसेयमस्मद्व्याख्या 'जाह्नवी इति इच्छति' इत्यस्य, 'एवंप्रकारा जाह्नव्या इच्छा' इत्यर्थः, इच्छाप्रकार एवोच्यते 'अपि मां पावयेत्साध्वी स्नात्वे'

ति । अपिर्गर्हार्थे 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इतिकोशात् । प्रार्थनायां लिङ् । प्रार्थनाचेच्छा इत्थञ्च साध्वी पतिव्रता स्नात्वा स्नानं कृत्वा, मयीति शेषः । अपि मां पावयेत् सर्वस्नातृजनपापभागिनीमतएव गर्हितां मां परिशुद्धां करोतु इति गङ्गा इच्छतीत्यर्थः । सर्वपावनीमपि गङ्गां पावयति पतिव्रता स्वसंपर्कादित्यहो पतिव्रताया महिमा इति भावः ॥ चन्द्रिकोक्तरीत्या अपेस्संभावनार्थकत्वे लिङोपि संभावनार्थकत्वात्पुनरुक्तिः । लिङः प्रार्थनार्थकत्वाङ्गीकारेण पुनरुक्ति परिहारेपि लिङर्थप्रार्थनाया विषयतासंबंधेन पूञ् धात्वर्थे परिशुद्धान्वयावश्यकतया अपिशब्दार्थसंभावनाया अप्यन्यत्रान्वयासंभवेन धात्वर्थएव परिशुद्धावन्वयस्य वक्तव्यत्वाच्च इच्छाविषयः परिशुद्धिस्संभावना विषयः इति बोधः। संभावनाचोत्कटैककोटिकसंशयः । तथाच साध्वीस्नानजनितगङ्गापरिशुद्धेस्संशयविषयत्वकथने प्रकरणविरोधान्महृदस्वारस्यम् साध्व्याः गङ्गापापशोधकत्वनिर्णयेन पतिव्रतोत्कर्षबोधनप्रकरणात् । अन्यथा प्रकृतालङ्कारस्यैवोच्छेदापत्तेः । "पतिव्रतामहिमगुणेन तदीयस्नानतो गङ्गायाः पावनत्वगुणो वर्णितः' इति दीक्षितोक्तेर्विरोधापत्तेश्च इति ॥



## विषयः (१०२) उल्लासः (ख)

अस्यैवालङ्कारस्योदाहरणमिदम् ,

'यदयं रथसंक्षोभादंसेनांसो निपीडितः ।
एकः कृती मदङ्गेषु शेषमङ्गं भुवो भरः ॥' इति ॥

अस्य व्याख्या चन्द्रिकायां 'यदयमिति । रथस्य संक्षोभात् चलनात् यदयमंसः अंसेन अर्थात् वनितायाः निपीडितः संघृष्टः ममाङ्गेषु मध्ये सएवैकः कृती कुशलः अवशिष्टमंगं भूमेर्भारमित्यर्थः'

इति ॥ अत्र ‘ अर्थाद्वनितायाः ’ इति लेखनाच्चन्द्रिकाकारो विक्रमोर्वशीयनाटकं कालिदासकृतं नदृष्टवानिति स्फुटमवगम्यते । अन्यथा ‘ अर्थाद्वनिताया ’ इति षडक्षरीं विहाय ‘ ऊर्वश्या ’ इति त्र्यक्षरीमेव लाघवाल्लिखेत् । अर्थादितितु प्रकरणानवगमं सम्यग्बोधयति । इदमपि द्वितीयविनोक्त्युदाहृते ‘ आविर्भूतेशशिनी ’ त्यादिविक्रमोर्वशीयपद्यगतस्य मोहेनेत्यस्य मानावेशेनेति चन्द्रिकायां व्याख्यातत्वादस्माभिः पूर्वप्रतिपादितं विक्रमोर्वशीयानवलोकनमस्योपोद्बलयति ॥ विस्तारस्तु तत्रैव कृतः ॥

किञ्च अत्रैव पद्ये ‘ शेषमङ्गं भुवो भरः ’ इत्यंशस्य ‘ अवशिष्टमंगं भूमेर्भारमित्यर्थः ’ इति विवरणे अंगशब्दविशेषणतया ‘ भार ’ मिति नपुंसकान्ततया कथनमनुपपन्नम् । ‘ भृञ् भरणे ’ इति धातोः ‘ अकर्तरिच ’ इत्यादिसूत्रेण घञ्प्रत्यये ‘ भारः ’ इति रूपम् । ‘ घञन्ताः पुंसि ’ इति भारशब्दस्य नित्यपुंलिङ्गत्वात् । एतच्च पद्यएवसूचितम् ‘ अङ्गंभरः ’ इति ॥



विषयः (१०३) ‘ लेशः ’ (क)

लेशालङ्कारस्येदं लक्षणमुदाहरणञ्च—

‘ लेशस्स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ।
अखिलेषु विहंगेषु हन्तस्वच्छन्दचारिषु ।
शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम् ’ ॥

इति । दोषस्य गुणत्वकल्पनं गुणस्य दोषत्वकल्पनञ्च लेश इति लक्षणवाक्यार्थः ॥ अथोदाहरणश्लोकतात्पर्यवर्णनपुरस्सरं लक्षणसमन्वयप्रकारः प्रदर्श्यते कुवलयानन्दे, ‘ राज्ञोऽभिमते विदुषि पुत्रे चिरं राजधान्यां प्रवसति तद्दर्शनोत्कण्ठितस्य गृहे स्थितस्य पितुर्वचनमप्र-

स्तुतप्रशंसारूपम् । तत्र प्रथमार्धे इतरविहङ्गानामवक्तृत्वदोषस्य स्वच्छन्दचरणानुकूलतया गुणत्वं कल्पितम् । द्वितीयार्धे मधुरभाषित्वस्य गुणस्य पञ्जरबन्धहेतुतया दोषत्वं कल्पित ' मिति ॥

अत्र ' राज्ञोऽभिमते ' इत्यादिवाक्यस्य क्लिष्टत्वादर्थो वर्ण्यते मया चन्द्रिकायामव्याख्यातत्वाच्च । ' पुत्रे चिरं प्रवसतिसति पितुर्वचनमित्यन्वयः । पुत्रः कीदृशः ? राज्ञोऽभिमतः प्रीतिपात्रम् । विद्वांश्च । विद्वत्वाद्राज्ञः प्रीतिपात्रमित्यभिप्रायः । कुत्र प्रवसित इति चेद्राजधान्याम् । असकृद्राजदर्शनाय राजधान्यामेव स्थितइति भावः । पिता कीदृशः ? गृहेस्थितः तद्दर्शनोत्कण्ठितश्च ग्रामान्तरे स्वगृहएवावस्थितः पुत्रदर्शनेऽत्यन्तकुतूहलवांश्चेत्यर्थः । तादृशस्यपितुर्वचनमिदमिति । अस्य वाक्यस्य क्लिष्टत्वं कथमितिचेत् ? ' राज्ञोभिमतेविदुषिपुत्रे ' इत्यनेन राज्ञः कश्चित्पुत्र आसीत् सच राज्ञोत्यन्ताभिमतः । विद्वांश्च इत्यर्थोऽवगम्यते । ' चिरं राजधान्यां प्रवसति ' इत्यनेन सच राजपुत्रः स्वराजधानीं विहाय अन्यत्र राजधान्यां प्रवसति सति इत्यर्थोऽवगम्यते । ततश्च तद्दर्शनोत्कण्ठितस्य राजपुत्रदर्शनकुतूहलिनः गृहे स्थितस्य राजभवने स्थितस्य पितुः राज्ञः वचनं • इत्यर्थस्यैव स्फुटस्फूर्त्या तादृशार्थस्य दीक्षिताविवक्षितत्वाच्च क्लिष्टत्वम् ॥

किञ्च—राज्ञोऽन्यएव पिता कश्चन, तस्य पुत्रो राज्ञः प्रीतिपात्रम् सच राजधान्यां वर्तते इत्यर्थस्य कथञ्चिदवगमेपि ' गृहे स्थितस्य पितुः ' इत्यनेन किमरण्यवासव्यावृत्तिः पितुः ? पिता राजधान्यामेव गृहवासी चेदुभयोरेकत्र वासात्तद्दर्शनोत्कण्ठानुपपत्तिः । अतो ' ग्रामान्तरे ' इति पदाध्याहारावश्यकतयाच क्लिष्टत्वं । अतोऽस्मदुक्तरीत्या व्याख्येया पङ्क्तिः ॥



विषयः (१०४) लेशः (ख)

काव्यादर्शे दण्डिनोक्तं लेशालङ्कारं लक्षणोदाहरणपूर्वकं प्रदर्श्य लेशालङ्कारस्य व्याजस्तुत्या गतार्थत्वमाशंक्य अतिरिक्तालङ्कारत्वं स्थाप्यते कुवलयानन्दे ' दण्डीत्वत्रोदाजहार ' इत्यादिना ।

' युवैष गुणवान्राजा योग्यस्ते पतिरूर्जितः ।
रणोत्सवे मनस्सक्तं यस्य कामोत्सवादपि ॥
चपलो निर्दयश्चासौ जनः किन्तेन मे सखि ।
आगःप्रमार्जनायैव चाटवो येन शिक्षिताः ॥ '

इति श्लोकद्वयं दण्डिना लेशालङ्कारोदाहरणतया दर्शितम् । श्लोकद्वयेपि लक्षणं क्रमेण योज्यते कुवलयानन्दकृता । ' अत्राद्यश्लोके ' इत्यादिना । इयमत्र कुवलयानन्दानुपूर्वी । ' अत्राद्यश्लोके राज्ञो वीर्योत्कर्षस्तुतिः कन्याया निरन्तरसंभोगनिर्विवित्सोर्दोषत्वेन प्रतिभासतामित्यभिप्रेत्य विदग्धया सख्या राजकोपपरिजिहीर्षया सएव दोषो गुणत्वेन वर्णितः ' इति ॥

तत्र दण्डिनः प्रथमश्लोकस्यायमभिप्रायः दीक्षितवाक्यस्यच । स्वयंवरकाले समागतेषु राजसु कंचिद्राजानं निर्दिश्य स्वयंवरवधूं प्रति तत्सख्याश्चतुराया वचनमिदम् । प्रियसखि ! अयं राजा कामोत्सवं परित्यज्यापि रणोत्सवासक्तः, तत्र कारणं ऊर्जित इति । अत्यन्तबलवान् युवा भोगयोग्य तारुण्यवयश्शाली । गुणवान् सौन्दर्यौदार्यसौहार्दादिसमस्तोत्तमगुणशाली । राजा, देशाधिपः, अतस्ते योग्यः पतिः पतिर्भवितुमर्हः । इति । ' अनयाचोक्तया, निर्दिश्यमानो राजा मन्यतएवं, ' युवत्वाद्यनेकगुणपूर्णतया अयमेव त्वया वरणीय इति मामेव निर्दिश्य वधूं सखी बोधयति हन्ते ' ति । स्वयंवरवधूस्तु सन्ततभोगाभिलाषिणी जानात्येवम् । ' मादृणीष्वैनं नायं भोगासक्तः

एतत्पाणिग्रहणे तव भोगाशा सद्योदत्तजलाञ्जलिस्स्यादिति मां बोधयति सखी ' इति । इत्थञ्च भोगविरोधितया दोषभूतारणासक्तिः, वीर्योत्कर्षप्रतिपादकतया गुणत्वेनोक्तेति लेशालङ्कारत्वमत्रेति ॥

कुवलयानन्दे ' कन्याया निरन्तरसंभोगनिर्विवित्सोः ' इत्यानुपूर्वी वर्तते ॥ अत्र चन्द्रिका ' कन्याया दोषत्वेन भासतामित्यन्वयः । निर्वर्तितुमिच्छा निर्विवर्तिषा, तद्रूपदोषत्वेनेत्यर्थः, निर्विवित्सोरिति पाठे राज्ञोविशेषणम् ' इति ॥ अत्रोक्तचन्द्रिकानुपूर्व्या कुवलयानन्दपाठ एवमुन्नीयते ' कन्याया निरन्तरसंभोगनिर्विवर्तिषा दोषत्वेन भासतामित्यभिप्रेत्य ' इति । निरित्युपसर्गपूर्वकात् वृतुवर्तने इति धातोरिच्छार्थकसनन्तादप्रत्यये निर्विवर्तिषेतिरूपम् । निर्वर्तनंच साधनम् । साधनेच्छेति यावत् । कस्य साधनमिति चेत् ? निरन्तरसंभोगस्य । साधनेच्छा किं समवेता ? कन्यासमवेता । तस्या एव संबन्धितया षष्ठ्यन्तकन्यापदेनोपस्थितत्वात् ॥ ' तद्रूपदोषत्वेने ' ति चन्द्रिकया निर्विवर्तिषाऽभिन्नत्वं दोषे ज्ञायते, दोषत्वेनेति तृतीयार्थः प्रकारता, तस्या निरूपकतासंबन्धेन प्रतीत्युपसर्गपूर्वकभासृधात्वर्थ ज्ञानविषयतैकदेशभूतज्ञानेऽन्वयः ज्ञानविषयतायाः राजसंबन्धिवीर्योत्कर्षस्तुताबन्वयः । इत्थञ्च उक्तचन्द्रिकापाठानुसारेण अयं बोधः, कन्यासमवेतसन्ततसंभोगसंपादनेच्छाभिन्नदोषत्व प्रकारक ज्ञानविशेष्यीभूताराजसंबन्धिनीवीर्योत्कर्षस्तुतिः इति ॥ तथाच कन्यासमवेतज्ञानाकारः ईदृशः, ' राजसंबन्धिवीर्योत्कर्षस्तुतिर्मत्समवेतसन्ततसंभोगसंपादनेच्छाभिन्नोदोष ' इति ॥ अत्र ज्ञाने विशेष्यभूतस्तुतौ दोषाभेदः, दोषे संभोग संपादनेच्छाऽभेदश्च सिद्धइति, ' तदभिन्नाभिन्नस्य तदभिन्नत्व ' मितिन्यायेनोक्तेच्छाभिन्नदोषाभिन्ना स्तुतिरितिसिद्धौ इच्छायाः स्तुतेश्चाभेदः प्राप्तः । सचात्यन्तमनुपपन्नः इच्छाया आत्मसमवेतगुणरूपत्वात् स्तुतेराकाशसमवेतशब्दात्मकगुणरूपत्वात्तयोरत्यन्तभेदात् ॥ किञ्च—

अत्र दण्डिना दीक्षितेनवा कन्यासमवेतसंभोगेच्छाया गुणत्वं दोषत्वं वा नोच्यते, किन्तु राज्ञो रणोत्सवासक्तिरेव दोषो गुणत्वेन वर्णितः । कन्याया निरन्तरसंभोगनिर्विविर्तिषातु दण्डिना 'युवैष' इत्यादिश्लोके नकेनचित्पदेनोक्ता ॥

अपिच--"'निर्विवित्सोः' इति पाठे राज्ञो विशेषणम्" इति चन्द्रिकानुपूर्वी विचार्यते । 'निर्विवित्सोः' 'इति' इति पदद्वयं पुनरावर्तनीयम् । इत्थंच निर्विवित्सोरिति पाठे निर्विवित्सोरिति पदं राज्ञ इति पदस्य विशेषणमित्यर्थः । निरित्युपसर्गपूर्वकाद्विदसत्तायामितिधातोरिच्छार्थकसनन्तादुप्रत्यये निर्विवित्सुरिति रूपम् । तदर्थस्तु सत्तेच्छुरिति । सकः ? राजा—कस्यसत्ता ? निरन्तरसंभोगस्य । किं कर्मको भोगः ? कन्यायाः । तथाच कन्याकर्मक निरन्तरसंभोगसत्तेच्छोः राज्ञः वीर्योत्कर्षस्तुतिः दोषत्वेन प्रतिभासतामित्युक्ते, दोषत्वेन भानं कस्येति जिज्ञासायां, 'निर्विवित्सोर्दोषत्वेन भासता' मित्यानुपूर्व्या राज्ञएवेति सिध्यति । कन्याया इत्यस्यतु निरन्तरसंभोगे कर्मतयान्वितत्वात् ॥ एवंसति 'राज्ञो वीर्योत्कर्षस्तुतिः राज्ञो दोषत्वेन भासते इत्येतदसंबद्धभाषणं भवेत् । स्वस्य स्तुतिः स्वस्यैव दोषत्वेन कस्यापि नभासत इति ॥

'निर्विवित्सो' रित्यस्य राज्ञो विशेषणत्वंतु अत्यन्तानुपपन्नम्, 'यस्य मनः कामोत्सवादपि रणोत्सवे सक्तम्' इति मूलविरोधात् । तस्यसंभोगेच्छाभावस्यैवलाभात् । एवं विरुद्धार्थाभिधाने तदर्थेच महतिक्लेशे चन्द्रिकाकारस्य किं निमित्तमापतितमितितु नजानीमः । यतो दण्ड्येव स्वोदाहृतश्लोकद्वयस्यापि लक्षणसमन्वयप्रकारमनुपदमेव श्लोकद्वयेन सुलभार्थकेन व्यवृणोत् । तत्रायं प्रथमश्श्लोकः,

'वीर्योत्कर्षस्तुतिर्निन्देवास्मिन्भावनिवृत्तये ।
कन्यायाः कल्पते भोगान्निर्विविक्षोर्निरन्तरम् ॥'

इति ॥ अस्यैवमन्वयः । 'निरन्तरं भोगान्निर्विविक्षोः कन्यायाः अस्मिन् भावनिवृत्तये वीर्योत्कर्षस्तुतिः निन्दैव कल्पते' इति ॥ अनेनायमर्थो निष्पद्यते, कन्यायाः स्वयंवरवध्वाः निरन्तरसंभोगनिर्विविक्षावर्तते। पुरः स्थितो राजातु कामिनीसंभोगं विहायापि रणे एवासक्तः । अतः कन्यायास्तस्मिन्राज्ञि पतिभावपरित्यागोद्देशेन चतुरया सख्या 'रणोत्सवेमन' इत्यादिना या राज्ञस्स्तुतिः कृता सा निन्दैव कल्पते। मुखतस्स्तुतिस्तत्कोपो मा भूदिति । हृदयेनतु निरन्तरसंभोगविरोधितया निन्दैवेति ॥ अस्यैव श्लोकस्यार्थो दीक्षितेन तत्तत्पदग्रहणपूर्वकं 'राज्ञो वीर्योत्कर्षस्तुतिः' इत्यादिवाक्येन विवृतः । आनुपूर्वीतु क्लिष्टतरा । अतएव चन्द्रिकाकारो मुमोह । दीक्षितवाक्ये 'सएव दोषो गुणत्वेन वर्णितः' इत्यत्र 'सएवे' ति तच्छब्देन कोर्थो ग्राह्य इतितु नज्ञायते । स इति प्रथमान्तनिर्देशात्पूर्वं प्रथमान्तनिर्दिष्टएव ग्राह्यः। प्रथमान्तनिर्दिष्टातु वीर्योत्कर्षस्तुतिः । सापि नग्राह्या । स्त्रीलिङ्गनिर्दिष्टत्वात्, वाक्ये प्रथमान्तं नाकिञ्चिदन्यत्पदम् । दोषशब्दप्राधान्यात्सइति पुंलिंगेन वीर्योत्कर्षस्तुतेरेवग्रहणेपि स्तुतेर्गुणत्वेन दोषत्वं नसंभवत्येव। अतस्स्तुतिविशेषणीभूतवीर्योत्कर्षस्य तच्छब्देन ग्रहणं कार्यम् । वीर्योत्कर्षस्यापि गुणत्वाद्दोषत्वं नास्त्येव । अतः कुवलयानन्दपङ्क्तिः क्लिष्टतरा । दण्डिश्लोकेतु नैवं क्लेशः । 'वीर्योत्कर्षस्तुतिर्निन्दैव' इत्युक्तया, राजबुद्धया स्तुतिः कन्याबुद्धया निन्दाभूयादिति विदग्धया सख्या कथितमिति सुललितोऽर्थसन्दर्भोऽपि ॥

अन्यच्च —दण्डिनः काव्यादर्शश्लोके, 'निर्विविक्षोः' इति पाठे स्पष्टेऽवगतेपि 'निर्विवर्तिषा' 'निर्विवित्सोः' इति च पाठद्वयं कुतो लब्धं चन्द्रिकाकारेणेतिच नजानीमः, यतस्तेनैवैतदुत्तरवाक्यमपि लिखितमास्ति, "तदुक्तं दण्डिनैव 'लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम्' इति" इति ॥ मध्यस्थितश्लोके परं पाठभेदद्वयं कुतः प्राप्तम् ?

'निर्विविक्षोः' इत्यस्य कोर्थ इतिचेत्? निरित्युपसर्गपूर्वका 'विशप्रवेशने' इति धातोरिच्छार्थकसनन्तादुप्रत्यये निर्विविक्षुरिति-रूपम्। भोगेच्छुरिति तदर्थः, 'निर्वेशोभृतिभोगयोः' इति कोशात्॥ तर्हि 'भोगान्निर्विविक्षोः' इति पुनरुक्तिः 'भोजनं भुङ्क्ते' इतिवत्। इतिचेत्॥ नैषदोषः, भोगशब्दस्य 'भुज्यन्त इति भोगाः' इति व्युत्पत्त्या भोग्यवस्तुपरत्वात् निर्वेश शब्दस्य तज्जन्यसुखसाक्षात्कार-परत्वात्। तदुक्तं श्रीरामायणे 'भुञ्जाना मानुषान्भोगान्' इति। प्राचीनास्मत्तालपत्रकोशे रसिकरञ्जनीपुस्तकेच 'निर्विविक्षोः' इत्येव पाठः काव्यादर्श पाठानुवादी दृश्यते। चन्द्रिकाकारेणतु कुतोलब्धमिदमप-पाठद्वयमिति महान्विस्मयः॥

॥ इति लेशः ॥



विषयः (१०५) पूर्वरूपम् (क)

'पुनस्स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतम्।
हरकण्ठांशुलिप्तोपि शेषस्त्वद्यशसा सितः'॥

इति पूर्वरूपस्य लक्षणमुदाहरणञ्च। उदाहरणान्तरञ्चदर्शितं कुवलयानन्दे।

'विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितस्स्फुरन्त्या।
रत्नैः पुनर्यत्र रुचा रुचं स्वा मानिन्यिरे वंशकरीरनीलैः'॥

इति॥ इदमेवंव्याख्यातं चन्द्रिकायाम् 'विभिन्नेति। माघेरैवतकगिरिवर्णनम्। गरुडाग्रजेन विभिन्नवर्णाः मिश्रितवर्णाः सूर्यस्य रथ्याः अश्वाः यत्र गिरौ वंशांकुरवन्नीलैः रत्नैः परितस्स्फुरन्त्या रुचा स्वां रुचं नीलद्युतिम् आनिन्यिरे आनीतवन्तः रुचा विभिन्नवर्णाः इतिवाऽन्वयः' इति॥

इदमस्य पद्यस्य तात्पर्यं लिख्यते मया, सूर्याश्वास्स्वभावतो हरितवर्णाः सूर्यस्य सारथिररुणो रक्तवर्णः तेन ते विभिन्नवर्णाः कृताः विभिन्नः भेदं प्रापितः अन्यथा कृतः अरुर्णीकृत इति यावत् वर्णः येषां तादृशा अश्वाः रैवतकगिरेरुपरि यदा आगच्छन्ति तदा गिरिगतैर्वंशांकुरवन्नीलैर्हरितैः रत्नैः गारुत्मतरत्नैः कर्तृभिः परितस्स्फुरन्त्या रुचा मरकतरत्नकान्त्या करणेनेतियावत् । कृष्णनीलहरितानां पर्यायेण प्रयोगः कविसमयसिद्धः । स्वां रुचं पुनरानिन्यिरे पुनः प्रापिता इति ॥ अत्र सूर्याश्वानां स्वतो हरितवर्णानामरुणकिरणैररुणितानां रैवतकगिरिगारुत्मतरत्नकान्त्या पुनर्हरितत्ववर्णनात् 'पुनस्स्वगुणसंप्राप्ति' रूपपूर्वरूपालङ्कारत्वमिति भावः ॥

अत्र चन्द्रिकायां 'विभिन्नवर्णा' इत्यस्य 'मिश्रितवर्णाः' इति व्याख्यानमनुपपन्नम् । द्वयोरेव वर्णयोर्न्यूनाधिकभावतारतम्येन योजने कृते बहुविधा वर्णा भवन्तीति प्रत्यक्षसिद्धम् । तत्र हरितारुणयोर्मिश्रणे हरितमपि नभवत्यरुणमपि । तद्गुणालङ्कारमन्तर्भाव्यैव पूर्वरूपं निष्पद्यते नत्वनन्तर्भाव्य । अतएवास्योदाहरणे स्वभावतश्शुक्लस्य शेषस्य हरकण्ठांशुभिर्नीलत्वमुपवर्ण्य पुनर्यशसा शुक्लत्वं वर्णितम् । 'पुनस्स्वगुणसंप्राप्तिः' इति पुनश्शब्देनैव स्वगुणत्यागपूर्वकमन्यदीयगुणग्रहणरूपतद्गुणपूर्वकत्वं पूर्वरूपस्य स्पष्टम् । अन्यथा पूर्वरूपानिष्पत्तेः ॥

अतएव काव्यप्रकाशे अलङ्कारसर्वस्वेच पूर्वरूपालङ्कारएव नोक्तः किन्तु तद्गुणस्यैवोदाहरणतया प्रदर्शितमिदं 'विभिन्नवर्णा' इत्यादिपद्यम् । काव्यप्रदीपेपि 'अत्र तद्गुणद्वय' मित्युक्तम् । मल्लिनाथसूरिणाप्येतद्व्याख्यायां तद्गुणद्वयमित्युक्तम् । स्वतोहरितानां सूर्याश्वानामरुणेनारुणितत्वेनैकस्तद्गुणः तथा अरुणानान्तेषां गिरिगारुत्मतकिरणैः

पुनर्हरितीकरणादपरस्तद्गुण इति तयोरभिप्रायः । रसिकरञ्जनीकारो प्यमुमेवभावंवर्णयति ॥

इत्थञ्च–चन्द्रिकायां ‘ विभिन्नवर्णा ’ इत्यस्य ‘ मिश्रितवर्णा ’ इति व्याख्यानमनुपपन्नमेव । स्ववर्णस्यान्यवर्णेन मिश्रणे स्वगुणत्यागप्राप्तावपि अन्यदीयगुणग्रहणाभावात्तद्गुणस्यैवाभावापत्तेः, तद्गुणाभावे तद्गर्भितस्य पूर्वरूपस्य सुतरामभावापत्तेः ॥ किञ्च–‘ आनिन्यिरे ’ इति कर्मणिलकारस्य ‘ आनीतवन्तः ’ इति कर्त्रर्थक क्तवतुप्रत्ययेन विवरणमनुपपन्नम् ‘ आनीताः ’ इतितुभाव्यम् ॥

अपिच–अत्र पद्ये काव्यप्रकाशकाराभिप्रायेण तद्गुणद्वयमुपपादयितुं चन्द्रिकाकार एवं लिखितवान् ‘ अत्रहि पूर्वमश्वानामरुण गुणत्वमनन्तरं रैवतकरत्नैरुभयेषान्तद्गुणत्वमिति तद्गुणद्वयमिति तेषामभिमतम् ’ इति ॥

अत्र चन्द्रिकावाक्ये यदुभयेषां तद्गुणत्वमुक्तम् तदनुपपन्नम् । पद्ये रैवतकगिरिगारुत्मतकान्तिभिः पुनर्हरितीकरणं रविरथ्यानामेवोक्तम् नतु गरुडाग्रजस्यापि । गरुडाग्रजस्य ‘ विभिन्ने ’ ति भेदनक्रियायां कर्तृतयान्वितत्वात् ‘ आनिन्यिरे ’ इत्यानयनक्रियायां कर्मतयान्वयानर्हत्वात् कर्मार्थेतृतीयाया अविहितत्वाच्च । यदि, गिरिगारुत्मतैररुणोपि हरितः कृत इति तात्पर्य, तदा ‘ गरुडाग्रजेने ’ ति तृतीयां विहाय ‘ गरुडाग्रज ’ इति विभक्तिविपरिणामः कार्यः । ‘ आनिन्यिरे ’ इत्यत्र ‘ आनिन्ये ’ इति वचनविपरिणामश्च ॥

एवं विपरिणामेपि ‘ किमानिन्ये ’ इति कर्मान्तरजिज्ञासायां ‘ स्वां रुचमानिन्ये ’ इति वक्तव्यम् । स्वीयाच रुचिरारुण्यम् तच्च वंशकरीरनीलैरत्नैरितिच वक्तव्यम् । गारुत्मतैररुणता भवतीत्युन्मत्तोपि

न ब्रूयात् । शब्दशक्त्यनुपस्थितस्यापि तात्पर्यवशाद्भानांगीकारे गिरिगारुत्मतरुचा रविरथ्यानामिव तत्संनिहितस्यारुणस्यापि हरितत्ववत् तत्सन्निहितस्य रवेरपि हरितत्वतात्पर्येण रवि तत्सूत तद्रथ रथ्यानां चतुर्णामपि तद्गुणत्वं स्यादिति तद्गुणचतुष्टयमपि स्यादिति ॥



विषयः (१०६) पूर्वरूपम् (ख)

द्वितीयपूर्वरूपोदाहरणे—

'द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै
रन्तः कञ्चुकिभिस्स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन्सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः' ॥

इति पद्ये 'शयनं तल्पम्' इति व्याख्यातम् । तदपेक्षया 'शयनम्-शयनगृहम्' इति व्याख्यानं साधीयः 'शीङ्स्वप्ने' इति धातोरधिकरणे ल्युटि 'शय्यतेऽत्रे' ति व्युत्पत्त्या शयनमिति रूपम् । शयनशब्दस्य शयनगृह मञ्च शय्या रूपार्थत्रयवाचकत्वमपि वर्तते । यदि जेतृपुरुषेण जितस्यगृहे वासः क्रियते तदा आरण्यकानां व्यालानां वासस्य नावकाशः । यदि न कश्चिद्वसति तदा शत्रुभिरेव गृहोपकरणानि सर्वाणि नीयन्ते ॥

यद्यल्पमूल्यमिति जेतृभिः परित्यज्यते, तदा क्षुल्लकैरेव जनैरपह्रियते, शून्यगृहस्थितत्वेन अस्वामिकत्वात् । यदि नकेनाप्यपहृतं, तदापि वर्षातपादिभिस्तत्रैव मृद्भावमापद्यते, राजगृहस्यारण्यकव्यालमृगवासयोग्यताप्राप्तिपर्यन्तं नहितल्पं निजाकारेण वर्तितुमर्हति । किञ्च—'द्वारम्' 'बहिर्भूमयः' 'अन्तर्भूमयः' इत्यत्र यथा तत्तत्प्रदेशानां

ग्रहणं तथा ' शयन ' मित्यनेनापि शयनगृहप्रदेशस्यैव ग्रहणमुचितमिति ॥

॥ इति पूर्वरूपम् ॥



### विषयः (१०७) सामान्यम्

सामान्यालङ्कारप्रस्तावे कुवलयानन्दे एवमुक्तम् ' काव्यप्रकाशे मीलितालङ्कारोदाहरणतया प्रदर्शितमिदं पद्यम्,

' अपाङ्गतरले दृशौ तरलवक्रवर्णा गिरः
विलासभरमन्थरा गति रतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र नमदोदयः कृतपदोपि संलक्ष्यते ॥ '

इति ॥ अत्र ' अपाङ्गतरले दृशौ ' इत्यत्र चन्द्रिकायां विग्रहः प्रदर्शितः, ' अपाङ्गः तरलः ययोः ते ' इति ॥

एवं विग्रहे ' ययोः दृशोः अपाङ्गः नेत्रान्तभागः ' अपाङ्गौनेत्रयोरन्ता ' वित्यमरः। तरलः चञ्चलः ' इत्युक्तथा ' वामाक्षिस्पन्दंसूचयित्वा ' इत्यादाविवाक्षिस्पंदनमेवोक्तं भवति । नतु कटाक्षवीक्षणम्। तथाहि नेत्रंनाम कमलदलमीनाद्याकारविशिष्टो गोलविशेषः। तस्यान्त्यो भागः अपाङ्गः तस्य तरलत्वं नाम स्फुरणम् इति । तत्तु जरतीनांकुमारीणाञ्चभवति कटाक्षवीक्षणमेवात्रापेक्षितम् । बाल्ये स्थाविरेच मदादिचित्तविकाराभावादृजुदृष्ट्यैव वीक्षन्ते कुमार्यो जरत्यश्च । यौवनेतु भावभेदोदयादपाङ्गगतयैव कनीनिकया पश्यन्तीत्यनुभवः । तदनुसारिणी कवीनामुक्तिश्च ॥

अतः ' अपाङ्गयोः नेत्रान्तभागयोः तरले चञ्चले ' इति सप्तमीतत्पुरुषो वाच्यः ' दृशा ' वित्यत्र दृक्शब्देन अक्ष्णोः कनीनिके एवो-

च्येते । ' दृश्यते आभ्यामिति दृशौ ' इतिव्युत्पत्त्या । ' दृशिर्प्रेक्षणे ' इति धातोस्संपदादित्वात्क्विप् ॥ कुतएवमितिचेत् ? योग्यताबलात् । कानामयोग्यता ? इयम् । महाकविकालिदासेन ।

' तद्वल्गुना युगपदुन्मिषितेन तावत्
सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्तः
चक्षुस्तव प्रचलितभ्रमरञ्च पद्मम् ॥ '

इतिपद्ये अजस्य चक्षुषः पद्मस्यच साम्यं कनीनिकायाः भ्रमरस्यच साम्यमुक्तम् । अत्र चक्षुश्शब्देन गोलमुच्यते तस्यैव पद्मसाम्यात् नतु कनीनिकायाः तस्याश्च भ्रमरसाम्यं प्रत्यक्षसिद्धं नीलत्ववर्तुलत्वादिना ॥

दीक्षितकृतवरदराजस्तवे ' मालिन्यमब्जशशिनोर्मधुलिट्कलङ्का ' विति पद्ये वरदराजमुखस्य कमलस्यच दृशो मधुलिहश्च साम्यमुक्तम् । अत्रापि दृक् शब्देन कनीनिकैवोच्यते कनीनिकायाएव भ्रमरसाम्यस्य नीलत्ववर्तुलत्वचाञ्चल्यादिगुणयोगेन कविप्रसिद्धेश्चावगम्यमानत्वात् । इत्थञ्च तरुणीनां कटाक्षेणैव वीक्षणस्यानुभवसिद्धत्वात्तथैव कविभिर्वर्णनाच्च अपाङ्गयोर्नेत्रान्तयोरेव कनीनिकयोस्सञ्चारात्तारल्यमिति ' अपाङ्गयोः तरले ' इत्यस्मदुक्तरीत्यैव विग्रहस्साधीयान् ॥

किञ्च—' अपाङ्गतरलेदृशा ' वित्यतोऽव्यवहितोत्तरमेव ' तरलवक्रवर्णागिरः ' इति वाक्यम् । तस्यापि चन्द्रिकायामेवं व्याख्या, ' तरलाः सत्वरोच्चारणात् । वक्राः वक्रोक्तिगर्भाः वर्णाः यासुताः गिरः वाक्यरूपाः ' इति । अत्रापि मृगदृशां गीर्षु घटकीभूतावर्णाः तरलाश्चञ्चलाः तत्र हेतुरुक्तः ' सत्वरोच्चारणादि ' ति । अनेनच कुमार्यो विलंबेन वाक्यं वदन्ति, ताएव युवत्यश्चेत्सत्वरं वाक्यं वदन्तीत्यर्थः फलति ॥

अयन्तु नानुभवसिद्धः । वक्रोक्तिगर्भत्वन्त्वनुभवसिद्धम् । अतएव काव्यप्रकाशे प्रदीपे सर्वस्वेच 'मधुरवक्रवर्णागिरः' इत्येव पाठो दृश्यते । तस्मात्सएव पाठस्साधीयान् कुमारीदशापेक्षया युवतीदशायां वाचां माधुर्यमप्यनुभवसिद्धमेवेति ॥

॥ इति सामान्यम् ॥



## विषयः (१०८) उन्मीलितविशेषकौ (क)

इमावलङ्कारौ मम्मटरुय्यकादिभिरनुक्तौ । उन्मीलितं जयदेवोक्तम् । दीक्षितेन यद्यप्यर्थविशेषकृतचमत्कारमवलंब्य विशेषकः कल्पितः । तथाप्यनुमानालङ्कारेण चरितार्थौ भवतः । तस्मान्नातिरिक्तालङ्कारत्वमनयोरिति जगन्नाथः । अत्र चन्द्रिकाकारः प्रतिवक्ति ॥ तस्यायमभिप्रायः । नत्वानुपूर्वी । परस्पर सादृश्यादुभयोर्भेदाग्रहे मीलितालङ्कारः तथाभूतयोः केनचित्कारणेन भेदग्रहे उन्मीलितामिति मीलितप्रतिभटः उन्मीलितालङ्कारः । परस्परसदृशयोर्द्वयोर्व्यक्तितो भेदग्रहे सत्यपि अन्योन्यवैजात्याग्रहे सामान्यालङ्कारः । तथाभूतयोरेव तयोः केनचित्कारणेन वैजात्यस्फूर्तौ सामान्यप्रतिभटो विशेषकालङ्कारः । इति दीक्षितोक्तिर्युक्तैव नानुमानालङ्कारेणानयोश्चरितार्थता संभवति ॥

तथाहि । रसगङ्गाधरकारेण 'अन्यदीयगुणदोषप्रयुक्तमन्यस्य गुणदोषयोराधानमुल्लासः' इत्युल्लासलक्षणमुक्त्वा 'तद्विपर्ययोऽवज्ञा' इत्यवज्ञालङ्कारलक्षणमुक्तम् । एवं 'स्वगुणत्यागपूर्वकं स्वसंनिहितवस्त्वन्तरसंबन्धिगुणग्रहणं तद्गुणः' इति तद्गुण लक्षणमुक्त्वा 'तद्विपर्ययोऽतद्गुणः' इत्यतद्गुणलक्षणमुक्तं । तत्रोल्लासप्रतिभटोऽवज्ञाल-

ङ्कारः, तद्गुणप्रतिभटोऽतद्गुणश्च 'कार्याजनिर्विशेषोक्तिस्सतिपुष्कलकारणे' इति लक्षणलक्षितविशेषोक्तावेवान्तर्भवतः, उल्लासप्रतिभटत्वेनावज्ञालङ्कारस्य, तद्गुणप्रतिभटत्वेनातद्गुणस्यचालङ्कारान्तरत्वं चमत्कारित्वाद्यथाङ्गीकृतं, तथैवात्राप्युन्मीलितविशेषकयोरनुमानेन चारितार्थ्यसंभवेपि मीलितसामान्ययोः प्रतिभटत्वेनैव चमत्कारित्वादलङ्कारान्तरत्वं किं नस्यात्? इति ॥

अत्रायमस्मदीयोऽभिसंधिः ॥ कुवलयानन्दकृता शुद्धानुमानालङ्कारस्योदाहरणतया प्रदर्शितमिदं रामायणपद्यम्—

'निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।
विकसन्त्याच मालत्या गतोऽस्तं ज्ञायते रविः ॥

इति । उन्मीलितस्य 'हिमाद्रिं त्वद्यशोमग्नं सुराश्शीतेन जानते' इति । विशेषकस्यतु 'लक्षितान्युदिते चन्द्रे पद्मानिच मुखानिच' इति च । 'निलीयमानै' रित्याद्यनुमानोदाहरणस्य व्याख्यायां चन्द्रिकायामेवमनुमानप्रयोगः प्रदर्शितः, 'अयं कालः सूर्यास्तमयवान् । पक्षिर्निलीनताद्याश्रयत्वात् । रविरस्तगमनवान् तादृशकालसंवन्धित्वात् इति वा प्रयोगो ज्ञेयः' इति । एतादृशोनुमानप्रयोगः उन्मीलितविशेषकोदाहरणयोरपि संभवति । तथाहि । अयं देशः हिमाचलाभिन्नः अत्यन्त शीतलत्वात्, इमानि पद्मानि चन्द्रोदयकालिकमुकुलीभाववत्वात्, इमानि मुखानि, चन्द्रोदयकालिकमुकुलीभावशून्यत्वात् विकासवत्वाद्वा, इति ॥

तस्मादुन्मीलितविशेषकयोरनुमानेन गतार्थता भवति । नैवमतद्गुणावज्ञायोर्विशेषोक्त्या चरितार्थता वक्तुं शक्या । तथाहि । प्रसिद्धं यत्कारणं तत्सत्वेपि तत्कार्यानुत्पत्तिवर्णनेहि विशेषोक्तिः । अवज्ञायामेकस्य वस्तुनो गुणे दोषेवा अन्यस्य गुणो दोषोवा प्रसिद्धनियतका-

रणं न भवतः । अतद्गुणेपि एकस्य वस्तुनो नीलपीतादिरूपात्मके गुणे अन्यस्य नीलपीतादिर्गुणः प्रसिद्धनियतकारणं नभवत्येव । तस्माद् तद्गुणावज्ञयोर्विशेषोक्त्या गतार्थता नभवत्येव । उन्मीलितविशेषकयोस्तु अनुमानेन गतार्थता संभवतीति महद्वैलक्षण्यमुभयोरिति ॥



## विषयः (१०९) उन्मीलितविशेषकौ (ख)

कुवलयानन्दे 'तद्गुणरीत्यापि भेदानध्यवसायप्राप्तावुन्मीलितं दृश्यते । यथा,

नृत्यद्भर्गाट्टहासप्रसरसहचरैस्तावकीनैर्यशोभिः
धावल्यं नीयमाने त्रिजगति परितश्श्रीनृसिंहक्षितीन्द्र ।
नेदृग्यद्येष नाभीकमलपरिमलप्रौढिमासादयिष्यत्
देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः' ॥

इत्युक्तम् ॥ अत्र 'तद्गुणरीत्यापि भेदानध्यवसायप्राप्तावुन्मीलितं दृश्यते' इति कुवलयानन्दवाक्यार्थो विचार्यते । उन्मीलितं मीलितप्रतिद्वन्द्वीत्युक्तम् । मीलितंभेदाग्रहणरूपम् । उन्मीलितंभेदग्रहणरूपमित्युक्तम् । क्वचित्काव्येयदिमीलितमस्ति, तदा उन्मीलितंनास्ति । भेदाग्रहणभेदग्रहणयोर्विरोधात् ॥

नृत्यदित्यादिपद्येतून्मीलितमस्तीत्युच्यते । केनचित्कारणेन भेदग्रहणरूपोन्मीलितात्प्राग्भेदाग्रहणमावश्यकम् । तेनविनोन्मीलितस्यैवानुदयात् । 'भेदाग्रहणञ्चमीलितरीत्या न । किन्तु तद्गुणरीत्या' इत्युक्तौ उन्मीलितस्य मीलितप्रतिद्वन्द्वित्ववत्तद्गुणप्रतिद्वद्वित्वमप्युक्तमेव । उक्तपद्ये तद्गुणालङ्कारोस्ति, नवा? अस्तिचेत्तत्प्रतिद्वंद्वि उन्मीलितं नास्त्येव, तयोर्विरोधात् । तद्गुणो नास्ति चेत् 'तद्गुणरीत्या' इति

स्वोक्तिविरोधः । तदोन्मीलितमपि नभवत्येव । पूर्वं भेदाग्रहणप्राप्तेरेवाभावात् । तद्गुणलक्षणन्तु स्वगुणत्यागपूर्वकं स्वसंनिहितान्यदीयगुणग्रहणम् । यथा नासामौक्तिकस्य स्वगतधवलगुणत्यागपूर्वकं स्वसंनिहिताधरगतारुणगुणग्रहणम् । एवञ्च तद्गुणे धावल्यारुण्ययोर्भेदाग्रहः । एवं प्रकृतपद्येपि कमलाकामुकस्य स्वगतनीलरूपत्यागपूर्वकं नृसिंहभूपयशोगत धवलरूपग्रहणस्यैव सत्वात्तयोर्भेदग्रहणस्याकथनाच्च कथमत्रोन्मीलितं भवेत् ?

यद्युभयवस्तुगतगुणयोर्भेदाग्रहस्तद्गुणोन । किन्तुगुणवद्धर्मिणोर्भेदाग्रहस्तद्गुण इत्युच्यते, तदापि नीलरूपवतः कमलाकामुकस्य, धवलरूपवतो यशसश्च भेदाग्रहरूपतद्गुणस्यात्र विद्यमानत्वात्तयोर्भेदग्रहणरूपमुन्मीलितं कथमिव भवेत् ? तस्माद्दीक्षितलिखिता आनुपूर्व्येवासङ्गतार्था, इति जगन्नाथोक्तं दूषणं मयाद्य सुस्पष्टतया स्ववाक्यैर्विवृतम् ॥

अत्र—चन्द्रिकाकारस्येयमानुपूर्वी 'यत्तु तद्गुणस्यात्र निर्बाधकत्वात्कथं तत्प्रतिद्वन्द्वित्वमुन्मीलितस्येति । तदनुक्तोपालम्भरूपत्वादुपेक्ष्यम् । तद्गुणेन भेदानध्यवसायमात्रस्योक्तत्वात्' इति ॥

अनेन वाक्येन जगन्नाथोक्तं दूषणं नपरिहृतम् किन्तु अभ्युपगतम्, 'तद्गुणेन भेदानध्यवसायमात्रस्योक्तत्वात्' इति हेतुस्तु तद्गुणोस्ति अतएवोन्मीलितमत्रनास्ती' त्येवसाधयतीति ॥

अत्र नागेशेनापि आनुपूर्वीभेदेनेदमेवोक्तम् तस्येयमानुपूर्वी, "नह्यत्र 'तद्गुणरीत्या' इत्यनेन तद्गुणो नास्तीत्युच्यते, किन्तु तद्रीत्या देवान्तरेभ्यो विष्णोर्भेदानध्यनसायप्राप्तौ केनापि निमित्तेनाभेदाध्यवसायः इत्येतावन्मात्रमिति नकश्चिद्दोषः" इति ॥ अत्रापि यदा तद्गुणोङ्गीकृतस्तदा तत्प्रतिद्वंद्वि उन्मीलितं नास्तीत्येवाङ्गीकृतं भवति । तद्गुणोन्मीलितयोः प्रतिद्वन्द्वित्वस्योपपादितत्वात् ॥

अत्रायमपरो विशेषः, 'देवान्तरेभ्योविष्णो भेदानध्यवसाय प्राप्तौ' इति नागेशलेखनात्तदभिमतं पद्यतात्पर्यमेवमवसीयते । तथाहि । 'योपिकोपि सर्वदेवमध्यगतं विष्णुं यत्रकुत्रापि द्रष्टुं गतः । तदासर्वस्यापि देवगणस्य नृसिह्मभूपयशसा धवलीकृतत्वाद्विष्णुस्तेन विविच्य नदृष्टः इति । इदञ्चतात्पर्यं पद्ये 'देवाना' मिति निर्धारणेषष्ठी कमलाकामुकस्येति कर्मणिषष्ठी भेदाध्यवसायः कस्य नजात इति जिज्ञासायां सचपद्ये केनापि पदेन नोक्तः स्वाध्याहर्तव्यः, इत्यङ्गीकारे सिद्धयति । एवञ्च देवमध्यगतं विष्णुं द्रष्टुमनामधेयः कश्चन यत्रकुत्रापि गत इति कस्मिन्पुराणे कस्मिन्प्रकरणे अवगतं नागेशेनेति नजानीमः ॥

इदन्तु पद्यतात्पर्यम्, 'देवानामसुरबाधया पदेपदे विष्णुदर्शनाय क्षीराब्धिगमनं पुराणप्रसिद्धम् । तदा नृसिह्मभूपयशसा धवलीकृतत्वान्नीलमेघश्यामलस्यापि विष्णोर्दर्शनं देवानां नजातम्' इति । तथाच देवानामिति कर्तरि षष्ठी । कमलाकामुकस्येति कर्मणिषष्ठी । भेदानध्यवसायो देवानामिति सिद्धयति । एवंसति नाध्याहारः । विष्णुनृसिह्मभूपयशसोः विष्णुनील यशोधवलयोर्वा भेदानध्यवसायः, इतितुसरसम् । एतेन नागेशस्य साहितीभावग्रहणकुशलता विशदीकृता भवति ॥

अन्यच्च । 'नृत्यदि' त्यादिपद्यस्य तृतीयपादस्यैवं व्याख्या चन्द्रिकायाम्, 'ईदृक् कीर्तिवच्छुक्लः एषः कमलाकामुकः नाभीकमलपरिमलस्य प्रौढिं समृद्धिम् । यदि नासादयिष्यत् नाधारयिष्यत् इत्यन्वयः' इति ॥

अत्र—'ईदृक्' इत्यस्य 'कीर्तिवच्छुक्लः' इत्यर्थोऽनुपपन्नः लोके कीर्तेश्शुक्लतया वर्णनं कविसमयसिद्धम् । नतु शुक्लस्यान्यनः कीर्तिरूपमानतया कविसमयसिद्धा । यथा 'हंसीव कृष्ण ते कीर्तिः'

इत्यादि । कीर्तेश्शुक्लवस्तूपमानताभ्युपगमेपि उपमेयस्य विष्णोर्नीलत्वादुपमानत्वासंभवः । अतः ‘ कीर्त्याशुक्लः ’ इति वक्तव्यम् । तादृशार्थकत्वमीदृक् पदस्यनास्ति । ‘ तावकीनैर्यशोभिर्धावल्यं नीयमाने त्रिजगति ’ इत्यनेत पुनरुक्तिश्च ॥

किञ्च—आसादनंनाम प्राप्तिः साचाप्राप्तस्यैव । एतच्छब्दवाच्यस्य कमलाकामुकस्य नाभीकमलपरिमलप्रौढेः स्वतस्सिद्धत्वात्तदासादनमनुपपन्नमित्यस्वरसादेव ‘ अधारयिष्यत् ’ इत्यर्थमवर्णयत् । तदप्यस्वरसम् । प्रौढिः परिमलाश्रिता परिमलः कमलाश्रितः कमलं विष्णवाश्रितमिति बहुपरम्परायाः कल्पनीयत्वात् । अपिच—परिमलप्रौढिर्नामातिशयितः परिमलः । तस्यासादनं गन्धसाक्षात्कारः सच देवानां वक्तव्यः । देवैर्गन्धसाक्षात्कारादेव विष्णोर्ज्ञातत्वात् । विष्णोर्गन्धधारणमात्राद्देवानां विष्णुज्ञानासंभवाच्च । इति महती व्याकुलता ॥

तस्मादत्रैवमुत्पश्यामः । ‘ परिमलप्रौढिं ’ मिति समस्तपदपाठं परित्यज्य ‘ परिमलःप्रौढिं ’ मितिव्यस्तपदपाठः कल्प्यः । तत्रायमर्थः । ‘ ईदृक् ’ ‘ एषः ’ इत्युभयं नाभीकमलपरिमलस्य विशेषणम् । इममिव पश्यन्ति ईदृक् अस्यायमेवोपमानभूतइत्यर्थः असदृशइतियावत् । एषः अत्यन्तसमीपवर्ती ‘ समीपतरवर्तिचैतदोरूपम् ’ इति वचनात् । देवानामिति शेषः । एवं भूतः नाभीकमलपरिमलः । प्रौढिं व्यापनशीताम् नासादयिष्यच्चेत् नप्राप्नुयाच्चेत् देवकर्तृकः कमलाकामुककर्मकः अवबोधः ज्ञानम् नाभविष्यदेव ’ इति ॥

इत्थञ्च—नृसिंहभूपयशसा धवलीकृते जगत्रये क्षीरसागरवत्तद्गतशेषवत्तद्गतोविष्णुरपिदेवैर्नदृष्टश्चक्षुषा । ततोऽसदृशेन घ्राणसंनिकृष्टेन प्रौढेन नाभीकमलगन्धेन, समीपएव विष्णुर्वर्तत इत्यनुमित इति पिण्डितार्थः । एवं सति तादृशी नव्याकुलतेति सूक्ष्मधिषणैरीक्षणीयम् ॥

॥ इति उन्मीलितविशेषकौ ॥

विषयः (११०) सूक्ष्मम्

सूक्ष्मं पराशयाभिज्ञेतरसाकूतचेष्टितम् ।
मयि पश्यति सा केशैस्सीमन्तमणिमावृणोत् ॥ '

इति तल्लक्षणोदाहरणे ॥ अत्र चन्द्रिका ' सूक्ष्ममिति पराशयाभिज्ञस्य इतरस्मिन् परविषये साभिप्रायं चेष्टितम् सूक्ष्मालङ्कारः ' इति ॥ अत्र ' इतरस्मिन् परविषये ' इति व्याख्यानं कुवलयानन्दविरुद्धमसंगतञ्च । तथाहि । इदंहि लक्षणसमन्वयप्रतिपादकं कुवलयानन्दवाक्यम् ' कामुकस्यावलोकनेन सङ्केतकालप्रश्नभावं ज्ञातवत्याश्चेष्टेयम् ' इति ॥

' कामुकस्य ' इत्यनेन मूलगतपरशब्दार्थः ' संकेतकालप्रश्नभावं ' इत्यनेन ' आशय , शब्दार्थः, ' ज्ञातवती ' शब्देन ' अभिज्ञ ' पदार्थश्चोक्तः ॥ ज्ञातवतीपदोत्तरषष्ठ्या ' अभिज्ञ ' पदस्य ' इतर ' पदस्यचविशेषणपूर्वपदकर्मधारयः, ' इतर ' शब्दस्य, ' साकूतचेष्टित ' शब्दस्यच षष्ठीतत्पुरुष इति चोक्तंभवति । ' इतरस्मिन् परविषये ' इत्यर्थप्रतिपादकं नकिञ्चित्पदं दृश्यते । तस्मात्कुवलयानन्दविरोधः ॥

असंगतत्वं पुनरित्थम्—लक्षणवाक्ये विद्यमानः ' पर ' शब्दः ' इतर ' शब्दश्च अन्यशब्दपर्यायः । नतूत्कृष्टादिवाचकः, इति सर्वसंमतम् । एवंसति ' परशब्दवाच्यदेवदत्तस्याशयं यज्ञदत्तो ज्ञात्वा इतरस्मिन् उक्तोभयव्यतिरिक्तब्रह्मदत्तविषये साकूतचेष्टितं सूक्ष्मम् ' इत्यर्थलाभादुदाहृणेषु तथा व्यक्तित्रयस्याकथनादसङ्गतत्वमिति । एतद्व्याख्यानानन्तरं कुवलयानन्दानुसारिणी व्याख्यापि तत्रैव लिखिता, ' पराशयाभिज्ञश्चासावितरश्च, तस्य साकूतचेष्टितम् । अर्थात्परविषये इतिचार्थः ' इति ॥

अत्र पूर्वव्याख्यायामस्वारस्याद्व्याख्यान्तरकरणमित्यपि वक्तुं नशक्यम् । यत्र कल्पद्वयेप्युपपत्तिस्समाना प्रथमकल्पापेक्षया द्वितीय-

कल्पे स्वारस्यातिशयश्च वर्तते तत्र कल्पान्तरानुसरणं न्याय्यम् । विरुद्धासङ्गतार्थाया व्याख्याया अपि प्रथमकल्पत्वं कोवा ब्रूयात् ॥

॥ इति सूक्ष्मम् ॥



## विषयः (१११) पिहितम्

'पिहितं परवृत्तान्तज्ञातुस्साकूतचेष्टितम् ।
प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत् ॥ यथावा ॥

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैः
दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गरेखां लिलेख' ॥

इति कुवलयानन्दः ॥

अस्मिन्पद्ये 'भिन्नं' इति पदस्य 'लग्नम्' इति व्याख्या चन्द्रिकायाम् । साचानुपपन्ना । काश्मीरजं कुङ्कुमं तन्व्या कण्ठे किमर्थं ध्रियते ? अङ्गरागाय । तस्याः पुरुषायितजनितया मुखात्स्रुतया स्वेदजलधारया कण्ठस्थितं काश्मीरजं कीदृशं भवतीति प्रेक्षका एव विमृशन्तु । स्वेदजलेनाङ्गरागः क्षालितो भवतिवा ? लग्नो भवतिवा ? तस्मात् 'भिन्नम्' इत्यस्य 'भेदं प्रापितं' मध्येमध्ये प्रमृष्टमित्यर्थो वक्तव्यः ॥ काव्यप्रदीपेप्यस्यैव पद्यस्य व्याख्यायां प्रभाख्यायां 'भिन्नम्' इत्यस्य 'मिश्रितम्' इत्यर्थो वर्णितः । सोप्येतत्समानयोगक्षेमएव ॥

॥ इति पिहितम् ॥



विषयः (११२) विवृतोक्तिः

' विवृतोक्तिश्श्लिष्टगुप्तंकविनाविष्कृतंयदि ।
नृपापेहिपरक्षेत्रादितिवक्तिससूचनम् ॥ ' यथावा ॥

' वत्से मागा विषादं श्वसनमुरुजवं संत्यजोर्ध्वप्रवृत्तं
कम्पः कोवा गुरुस्ते किमिह बलभिदा जृंभितेनात्र याहि ।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद्वस्सदहतु दुरितं मन्थमुग्धः पयोधिः ॥ '

इति कुवलयानन्दे ॥

अत्र ' मन्थमुग्धः पयोधिः ' इति सर्वत्रपुस्तकेषु पाठो दृश्यते । चन्द्रिकायामपि तथैव । अर्थस्तु नवर्णितएव । अत्र ' मन्थमुग्धः ' इति-स्थाने ' मन्थमुग्धाम् ' इति पाठेन भाव्यम् । कुतइतिचेत् ? ' मथनात्क्षीरसागरोद्भूतां लक्ष्मीं तत्पिता पयोधिस्तस्याः भयशमनव्याजेन दिक्पालकानां तिरस्कारं कारयित्वा यस्मै प्रादात्सहरिर्दुरितं वो दहतु ' इति पद्यतात्पर्यम् ॥ अत्र लक्ष्म्याः भयमस्तीति तच्छमनमुदधिना कार्यम् । भयशामकवाक्येनैव ' दिक्पालांस्तिरस्कुरु ' इत्यर्थमपि लक्ष्मीर्बोधनीया । एतादृशदिक्पालकविप्रलंभकश्लिष्टचमत्कारिवाक्यवक्तुः पयोधेर्मुग्धत्वं मूढत्वं वक्तुं युज्यतेवा ? तदानीमेव मन्दरमथनक्षुब्धदुग्धार्णवोद्भूतायाः कन्यायाः अपरिचितदेवदानवगणदर्शनकातरायाः लक्ष्म्याः मन्थमूढत्वं वक्तव्यंवेति सहृदया धिया विभावयन्तु ॥ अपिच—अस्मिन्नेवालङ्कारे ' सुभ्रुत्वं कुपिते ' त्यादिपद्यस्य कुवलयानन्दगते समन्वयवाक्ये " सच ' दृष्टे ' इत्यस्य पदस्य लुप्तोच्चारणेन " इत्यत्र ' लुप्तोच्चारणेन ' इति स्थाने प्लुतोच्चारणेन ' इति पाठश्शोधनीयः ॥

॥ इति विवृतोक्तिः ॥



विषयः (११३) स्वभावोक्तिः

सर्वत्र मुद्रितपुस्तकेषु चन्द्रिकायाञ्च दोषोद्भावनाय असत्तात-तपादलिखितप्राचीनतालपत्रपुस्तकपाठानुसरेणायं श्लोको लिख्यते व्याख्यायतेच मया ॥

'तौ संमुखं प्रचलितौ सविधे गुरूणाम्
मार्गप्रदान रभसस्खलितावधानौ ।
पार्श्वोपसर्पणमुभावविभिन्नदिक्कं
कृत्वामुहुर्मुहुरपासरतां सलज्जम्' ॥

अस्येदं तात्पर्यम् ॥ कौचन दम्पती गृहे स्वस्वकार्याय प्रस्थितौ एकत्र हठादभिमुखमन्योन्यं सङ्घटितौ परस्परमार्गदानाय त्वरया द्वावप्येकामेव दिशं गत्वा तत्रापि तथैवाभिमुखं सङ्घटितौ तत्रापि मार्ग प्रदानाय त्वरया तत्प्रतिदिशं गत्वा तत्रापि सङ्घटिताविन्त्येवं अविभिन्नदिक्कं एकदिगाश्रयं पार्श्वोपसर्पणं मुहुः कृत्वा तदा सन्निहितं गुरुजनं दृष्ट्वा लज्जयोभावपि यथागतमपसरणमकुरुताम् । परस्परं वर्जयित्वा दूरतो गताविति वा इति ॥

चन्द्रिकाकारस्तु 'उभावपि भिन्नदिक्कं वामदक्षिणरूपदिक्संबन्धिपरस्परपार्श्वभागोपसर्पणं मुहुर्मुहुः कृत्वा सलज्जं यथास्यात्तथोपासरताम् उपसर्पणं चक्रतुरित्यर्थः' इति व्याचख्यौ ॥ अत्र परस्परपार्श्वभागोपसर्पणं यदि भिन्नदिक्कं स्यात् तर्हि तस्य मुहुर्मुहुः करणमनुपपन्नमेव । जाया पतिं पतिश्च जायां स्वस्वदक्षिणतः कृत्वा यद्यभिमुखमागच्छेतां तदोभयोरपि मार्गस्य निराबाधतया मार्गप्रदानस्य तद्रभसस्य तेनावधानस्खलनस्य चाप्रसक्तया मुहुर्मुहुरुपसरणस्यचाप्रसक्तेः ॥ अतः 'अविभिन्नदिक्क' मितिपाठेन भाव्यं ॥

एवं ‘ उपासरताम् ’ इति पाठमवलम्ब्य, ‘ उपसर्पणं चक्रतुः ’ इति व्याख्याप्यनुपपन्ना, गुरुजनसन्निधौ वधूवरयोर्लज्जितयोरुपसर्पणस्य समीपगमनस्यासंभावितत्वात् । अतः ‘ अपासरताम् ’ इति पाठेन भाव्यम् । लज्जितयोर्गुरुसन्निधावपसरणन्तु युक्तम् ॥ ‘ अप ’ इत्युपसर्गस्य वर्जनार्थकत्वात् अपसरणं परित्यज्य गमनम् । नतु तयोः परस्परसमीपगमनम् । ‘ उप ’ इत्युपसर्गस्य समीपार्थकत्वात् ॥

यत्तु ‘ पूर्वोदाहरणे कुरङ्गजातिस्वभाववर्णनम् । अत्र सलज्जक्रियास्वभाववर्णनम् । इति भेदः ’ इति चन्द्रिकायामुक्तम्, तदपिन ॥ कुतइतिचेत् सलज्जयोः क्रिया अत्रापसरणक्रिया साच चतुर्थपादोक्ता । तावन्मात्रं स्वभावोक्तेर्विषयोन । किन्तु आदितः पादत्रयोक्तार्थोपि । सतु सत्वरयोः क्रियास्वभावः । रथ्यादिषु कदाचित्कयोश्चित्सत्वरमभिमुखमागच्छतोरकस्मात्संघटितयोः परस्परमार्गप्रदानायान्यतोगतयोस्तत्रापि सङ्घटनं मुहुर्भवतीति सर्वानुभवसिद्धम् ’ इति सत्वरक्रियास्वभाववर्णनम् । नतु सलज्जस्वभाववर्णनम् । इति ॥

रसिकरञ्जनीकारस्तु ‘ नियुद्धप्रवृत्तयोर्मल्लयोस्स्वभाववर्णन ’ मित्याह । तदितोपि मन्दम् । कुत इतिचेत् ? बाल्ये केवलं खुरलीखेलायां कश्चत शिक्षकस्तद्गुरुरिति यद्यपि प्रसिद्धिरस्ति । तथापि देशान्तरेषु पणबन्धपुरस्सरं नियुद्ध्यतोर्मल्लयोर्गुरुसंनिधिरप्रसिद्धैव । किञ्च एकैकस्यमल्लस्य एकैको गुरुरिति गुरूणामिति बहुवचनमयुक्तम् । अपिच मल्लयोः परस्परमार्गप्रदानं तत्र त्वरा तया अवधानस्खलनञ्चात्यन्तानुपपन्नम् । तयोः परस्पराभिमुखमास्कन्दनस्यैवावश्यापेक्षितत्वात् । अन्यच्च । तयोर्लज्जया उपसरणमपसरणञ्चात्यन्तानुचितम्, वीरयोस्तयोर्गर्वामर्षोग्रतादिरूपव्यभिचारिभावौचित्येन लज्जायाः वीररससहकारित्वाभावात्, यदि पराजितयोस्तयो र्गुरुसन्निधौ लज्जा सम्भाव्येत

तदाप्युभयोः पराजयाप्रसक्तथा सलज्जोपसरणमुभयोरसङ्गतमेव । अपरञ्च नियुद्धप्रवृत्तयोस्तदा गुरुजनदर्शनमप्युद्दीपनविधया वीररसोद्बोधकममर्षादिकमेव जनयेत्। नतु लज्जामित्यसङ्गततममिदं व्याख्यानमिति ॥

॥ इति स्वभावोक्तिः ॥



विषयः (११४) भाविकम्

'भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम्' इति भाविकलक्षणम्। अतीतस्येदानीन्तनवत्साक्षात्कारकथने भाविकं नामालङ्कार इत्यर्थः। तथा भविष्यतोऽपि। उदाहरणद्वयमपि अतीतसाक्षात्कारपरम्। दीक्षितोदाहृत 'मद्यापी' त्यादिपद्यं प्राचीनतालपत्रकोशोपलब्धपाठानुसारि विलिख्य व्याख्यायते मया चन्द्रिकादिदोषोद्भावनाय ॥

'अद्यापि तिष्ठति दृशोरिद, मुत्तरीयं
　धर्तुं पुरस्स्तनतटात्पतितं प्रवृत्ता।
वाचं निशम्य नयनं नयनं ममेति
　किञ्चित्तदा यदकरोत्स्मितमायताक्षी' ॥

इति ॥ अत्रेयमन्वयसरणिः, 'स्तनतटात्पतितमुत्तरीयं धर्तुं प्रवृत्ता आयताक्षी 'नयनं नयनं' इति ममवाचं निशम्य तदा किञ्चित् स्मितमकरोदिति यत् इदं दृशोः पुरः अद्यापितिष्ठति। इति ॥ अयमभिसन्धिः 'काचिन्नायिका रहसि स्थिता स्वकुचतटात् स्रस्तमुत्तरीयमनाकलयन्ती स्वैरं स्थिता हठादागतं नायकमालोक्य लज्जया यथापुरं उत्तरीयमाच्छादयितुं प्रवृत्ता। तावदेव कुचमण्डल मालोकितवतो नायकस्यादरातिशयात्त्वरातिशयाच्च द्विरुक्तया 'नयनं नयनं' 'मम लोचनं त्वत्कुचोत्तरीयान्तर्लग्नंपरित्यज' इति वक्तुमारभ्य

'नयनं नयनं' इत्यर्धमात्रमुक्तवतो वाचं निशम्य तदा किञ्चित्स्मितं मन्दहासमकरोत् । तात्कालिकं तादृशं नायक्यामन्दहासमनुभूतवान्नायकस्तत्स्मृत्वा 'तदिदमद्यापि मम दृशोः पुरस्तिष्ठति' इति स्वस्यसखायं प्रत्युक्तवानिति ॥

चन्द्रिकाकार एवं व्याचष्टे 'अद्यापीति । मम नयनंनयनमिति तस्या वाचं निशम्य स्तनतटात्पतितमुत्तरीयं धर्तुं पुरः प्रवृत्ते मयि सति । तदा आयताक्षी यत्किञ्चित् स्मितमकरोत् इदमद्यापि मम दृशोः पुरस्तिष्ठतीत्यन्वयः । अत्र नयनपदेन स्ववाच्यकत्वरूपशक्यसंबन्धेन नेत्रपदं लक्ष्यते । तस्माच्च वस्त्रप्रतीतिः । किंवा स्ववाच्यकवाच्यत्वरूपशक्यसंबन्धेन वस्त्रमेव लक्षयतीति 'वचोवाणे' रित्यादिवल्लक्षितलक्षणावा बोध्या । नेत्रं मथि गुणे वस्त्रे' इतिविश्वः' इति ॥

एतद्व्याख्यानुसारेण पद्यस्येदं तात्पर्यम् 'कस्याश्चिदुत्तरीयं भूमौ पतितम् । सातु 'मम वस्त्रं वस्त्रं' इत्युवाच । पतितमितिशेषः कांश्चत्तदुत्तरीयं स्वयं प्रथमं ग्रहीतुं प्रावर्तत तद्दृष्ट्वा सा स्मितमकरोत् सतु तत्स्मितं स्मृत्वा सख्ये निवेदयति तदद्यापि मम दृशोः पुरस्तिष्ठति इति' इति ॥

इदञ्च तात्पर्यमनुपपन्नम् । तथाहि । इयं पतितोत्तरीया नायिका किमेकाकिनी रहसिस्थिता ? उत जनसमक्षम् ? आहोस्विन्नायकसमीपे ? रहसि स्थिता चेत् 'ममनयनंनयन' मिति न ब्रूयादेव । एकाकिनीत्वात् । यदि जनसमक्षं तदातु सुतराम् । विवसनं प्रपुंस्तदाप्रकटीकर्तुमयुक्तत्वात् । यदिच नायकसमीपस्थिता, तदापि स्वयमेव वस्त्रंगृह्णीयात् नतु नायकं प्रति ब्रूयात् । यदि दुर्ग्रहस्थानपतितं भवेत्तदा आनीय देहि कान्तेति ब्रूयात् । तदातु नायके तद्वस्त्रं ग्रहीतुं प्रवृत्ते तस्याः स्मिते नकिञ्चित्कारणम् । नायकस्य तत्स्मरणे । तत्कथनेच ॥

अस्य तात्पर्यस्य कथञ्चिदभ्युपगमेपि तादृशतात्पर्यमत्यन्तक्लेश-लभ्यम् । क्लेशश्चदोषः । तथाहि । नयनंनयनमिति नयनशब्दस्य वस्त्र-वाचकत्वं नकथञ्चिदपि कोशादिना लभ्यते । अतएव 'अत्रनयनपदेने' त्यादिना लक्षणां लक्षितलक्षणांवोपपाद्य वस्त्रोपस्थितिमंग्यकार्षीच्चन्द्रि-काकारः । लक्षणां विना निर्वाहे संभवति सति लक्षणाङ्गीरपक्षश्शास्त्र-ज्ञैर्दूरीकरणीयः ॥

किञ्चात्र 'नयनं नयन' मिति नयनपदेन बोध्यतया यदि वस्त्रमेव विवक्षितं कवे र्नतुलोचनं, तर्हि 'नयन' पदस्थाने 'वसन' पदोपस्थितिप्रतिबन्धकं किंवा पातकमाचरितन्तेनेति नजानीमः । यदि लोचनार्थकत्व मप्यपेक्षितं न्तर्हि चन्द्रिकोक्ततात्पर्ये कस्मिन्नंशे लोच-नरूपार्थस्योपयोगः ? तथाच नयनपदस्य वस्त्रार्थकत्वमनुपपन्नमेव ॥ अपिच । 'प्रवृत्ता' इति प्राचीनपाठपरित्यागः, 'प्रवृत्ते' इति पाठ-परिकल्पनञ्च । तत्कल्पननिर्वाहाय 'मयि' इति विशेष्यपदाध्याहा-रश्च । अनध्याहारेणैव निर्वाहे संभवत्यध्याहरपक्षः परिहरणीयश्शा-स्त्रज्ञैः ॥

अन्यच्च । 'वाचं निशम्य नयनं नयनं ममेति' इति तृतीय-पादएव 'वाच' मित्यस्य संबन्धिवाचके 'मम' इति पदे विद्यमाने 'तस्याः' इति असङ्गतपदाध्याहारश्च ॥ अपरञ्च एकस्मिन्नेवोत्तरार्धे 'वाचं निशम्य' इति वाक्श्रवणरूपायाः क्रियायाः 'स्मितमकरोत्' इति स्मितकरणरूपक्रियापेक्षया समानकर्तृकत्वं पूर्वकालिकत्वञ्च ल्यप्-स्थानिना क्त्वाप्रत्ययेन बोध्यते । तच्च स्फुटीकृतमायताक्षीति कर्तृपदेन ॥ एवं सुखसिद्धेप्यर्थे 'वाचंनिशम्य' इत्युत्तरार्धप्रतिपादितायाः वाक्-श्रवणरूपक्रियायाः पूर्वार्धप्रतिपादितोत्तरीयधरणप्रवृत्तिरूपाक्रियापेक्षया समानकर्तृकत्वपूर्वकालिकत्वबोधकतया क्त्वाप्रत्ययान्वयकरणमतीवास्व-रसमिति सर्वजनवेद्यमेव ॥

यत्तु रसिकरञ्जनीकारेणोक्तम् 'द्वितीयोदाहरणे नायिकायां स्तनतटच्युतोत्तरीयग्रहणप्रवृत्तायां मदीयंवस्त्रमित्यतर्कितागतप्रियतमवचनाकर्णनजनितस्मितस्य नायकेनाद्यापि तिष्ठति दृशोरिति प्रत्यक्षायमाणत्वोक्तेरत्रापि भाविकमित्यभिसन्धिः । तथा वर्णनेच किञ्चिदिति पदसूचितमशक्यवर्णनीयत्वं निभित्तम्' इति ॥ अत्र 'नायिकायामुत्तरीयग्रहणप्रवृत्तायाम्' इत्यनेन 'प्रवृत्ता' इति प्राचीनपाठएवाश्रित इति ज्ञायते । 'मदीयंवस्त्रमित्यतर्कितोपनतप्रियतमवचनाकर्णन' इत्यनेन 'नयनंनयन' मिति नायकस्यैव वचनमित्यवगम्यते । एवञ्चोक्तांशद्वये तुल्यकण्ठावावाम् ॥

परन्तु 'नयन' मित्यस्य 'मदीयंवस्त्र' मिति व्याख्यानात्किञ्चिद्विलक्षणं तात्पर्यमवगम्यते' 'नायिकायाः पतितमुत्तरीयं सैव स्वयमादातुं प्रवृत्ता, तदैव नायकोपि ममेदं वस्त्रमित्युवाच, तदा सा स्मितमकरो' दिति ॥ अस्मिन्नपि तात्पर्ये किञ्चिदस्वारस्यम्, 'ममेदं वस्त्र' मिति नायकवचनमात्रान्नायिकायाः न हासस्संभवति, किन्तु तथोक्त्वा नायकेप्युत्तरीयग्रहणप्रवृत्तेसत्येव । नायकस्योत्तरीयग्रहणप्रवृत्तिस्तु पद्यस्थेन नकेनापि पदेनावगम्यत इति ॥ अस्यामपि व्याख्यायां नयनपदस्य वस्त्रबोधकत्वप्रकारस्तुल्यक्लेशः, चन्द्रिकायां लक्षणया बोधइति तत्प्रकारोवर्णितः । रसिकरञ्जन्यां सोपि नास्तीति विशेषः ॥

इत्थञ्च अस्मदुक्तव्याख्यैव कविहृदयानुसारिणीति सहृदया विभावयन्तु ॥

॥ इति भाविकम् ॥



## विषयः (११५) उदात्तम्

उदात्तालङ्कारलक्ष्यवाक्ये 'सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः' इतिवाक्ये 'सानौ' इति पदस्य चन्द्रिकायां 'शिखरे इत्यर्थः प्रदर्शितः। सानुः पर्वतस्यनितंबप्रदेशः 'कटकोऽस्त्री नितंबोद्रेस्स्नुः प्रस्थस्सानुरस्त्रियाम्' इति कोशात्। शिखरञ्च तस्य शिरोभागः। 'कूटोऽस्त्री शिखरं शृङ्गम्' इति कोशात्। तथाच सानुशिखरयोरत्यन्तभेदात् 'सानौ-शिखरे' इति व्याख्यानमयुक्तम्। किन्तु 'सानौ-प्रस्थप्रदेशे' इति व्याख्येयम्। किञ्च पर्वतस्य प्रस्थप्रदेशे समा विशालाच भूमिर्युद्धयोग्या भवति। शिखरेतु सङ्कुचिता विषमाच भूमिरिति युद्धानर्हा॥

॥ इति उदात्तम् ॥



## विषयः (११६) निरुक्तिः

यत्किञ्चिद्वस्तुवाचकानां नामधेयानां अवयवशक्त्या अर्थान्तरकल्पने निरुक्तिर्नामालङ्कारः। 'निरुक्तिर्योगतोनाम्नामन्यार्थत्वप्रकल्पनम्' इति तल्लक्षणात्। 'ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवात्' इत्युदाहरणम्। विरहिण्या इयमुक्तिश्चन्द्रंप्रति। ईदृशैश्चरितैः विरहदग्धमुग्धजनवधरूपव्यापारैः भवान् दोषाकरस्सत्यम्। दोषाणाम् विरहिजनहननजनितवृजिनानाम्। आकरः खनिः महापातकीत्यर्थः। अत्र चन्द्रस्य नामधेयं 'दोषाकर' इति। तस्य 'दोषाणामाकर' इति योगशक्त्या महापातकित्वरूपमन्यार्थत्वं कल्पितमिति लक्षणसमन्वयः॥

अत्रचंद्रिका 'दोषायाः रात्रेः कर्ता दोषाणामाकरश्च' इति। एवं व्याख्यानमत्यन्तानुचितम्। 'दोषा' शब्दस्य 'रात्रौ' इत्यर्थे

निपातात् स्वरादिगणपाठाच्चाव्ययत्वात् ' दोषाया ' इति सुबन्ततया लेखनस्य प्रामादिकत्वात् ॥ किञ्च—' रात्रेः कर्ता ' इति व्याख्यानमनुपपन्नम् । रात्रेः कर्तृत्वं चन्द्रे नास्ति । यथा सूर्यस्योदयेसत्येवाहर्भवति, नतथा चन्द्रस्योदये सत्येव रात्रिरिति नियमः । कृष्णाष्टम्यामर्धरात्रात्पूर्वं चन्द्रोदयाभावेपि रात्रिदर्शनात् । अमायां चन्द्रोदयस्यैवाभावेपि रात्रिदर्शनाच्च । किंन्तु रात्रौ चन्द्रस्य प्रकाशः नत्वह्नि ॥

अतश्च ' दोषा रात्रौ कराः किरणाः यस्य सदोषाकरः ' इति व्याख्यया भाव्यम् । कोशश्च नामलिङ्गानुशासने ' दिवाह्नीति अथ दोषाच नक्तञ्च रजनाविति ' इत्यव्ययवर्गे । एतेन ' नक्षत्रेशः क्षपाकरः ' इत्यत्र अमरसुधाकारस्य ' क्षपां करोती ' ति व्युत्पत्तिप्रदर्शनमपि निरस्तम् । अमर कोशव्याख्याता क्षीरस्वाम्यपि क्षपां करोतीतिव्युत्पत्तिं प्रदर्श्य उद्योतयतीति तदर्थमाह । तेन चन्द्रस्य रात्रिकर्तृत्वं नास्तीत्यनुपपत्तिस्तेनापि विदितेतिज्ञायते । व्युत्पत्तिस्तुनसाध्वी ॥

ननुकथं ' निशाकृत् ' इति भामहप्रयोगः ? नकिञ्चिदेतत् । ' निशां कृन्तति ' इति व्युत्पत्त्या । ' कृतीच्छेदने ' इति धातोः क्विपि ' कृत् ' इति रूपम् । चन्द्रस्तु रात्रिं छिनत्ति विभजते । कृष्णपक्ष रात्रिषु चन्द्रोदयान्नाडिकाः जानन्ति मौहूर्तिकाः इति प्रसिद्धम् ॥

॥ इति निरुक्तिः ॥



## विषयः (११७) प्रतिषेधः

अस्य लक्षणम् ' प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तनम् । ' इति ॥ उदाहरणन्तु ' न द्यूतमेतत्कितव क्रीडनं निशितैश्शरैः । ' इति ॥ लक्षणसमन्वयप्रकारः कुवलयानन्दएव प्रदर्शितः, ' युद्धरङ्गे

प्रत्यवतिष्ठमानं शाकुनिकं प्रति विदग्धवचनम् । अत्र युद्धस्याक्षवृतत्वाभावो निर्ज्ञातएव कीर्त्यमानस्तवैव तव प्रागल्भ्यम् नयुद्धे दयुत्पत्तिग्रहोस्ति इत्युपहासं गर्भीकरोति । तच्च 'कितव' इत्यनेनाविष्कृतम्' इति ॥

अस्मिन् लक्षणसमन्वयवाक्ये स्थितस्य 'शाकुनिकं प्रती' त्यस्य चन्द्रिकायां 'शकुनैः पाशकैः दीव्यतीति शाकुनिकः' इति व्याख्या दृश्यते । एषाचानुपपन्ना । 'पक्षिमत्स्यमृगान् हंति' इति व्याकरणसूत्राच्छकुनशब्दात्तान्हन्तीत्यर्थे ठक् प्रत्यये 'शाकुनिक' इति रूपम् । तदर्थश्च पक्षिहन्ता व्याधः । नामलिङ्गानुशासनेच, जीवान्तकश्शाकुनिको द्वौ वागुरिकजालिकौ' इति ॥

चन्द्रिकाकारस्यतु 'तेन दीव्यती' ति सूत्रात् ठञ्प्रत्ययो विवक्षित इति तत्प्रदर्शितव्युत्पत्त्या अवगम्यते । तत्र प्रत्ययार्थोपपत्तावपि प्रकृत्यर्थोऽनुपपन्नः । शकुनशब्दस्य पाशकार्थकत्वस्य कुत्राप्यलाभात् कोशे प्रयोगाभावाच्च ॥

एवंविधां व्याख्यामवलोक्य ग्रन्थमुद्रणाय शोधयितारः 'शाकुनिकं प्रति' इति पाठं कुवलयानन्देप्यकल्पयन्निन्युन्नीयते । यतोऽस्मत्प्राचीनतालपत्रकोशे 'शाकुनिकम्' इत्यस्य स्थाने 'शकुनिम्' इति वर्तते । एवंसति भारतयुद्धे शकुनिं प्रति नकुलस्य वचनमिदम् । हेकितव अक्षदेवनचतुर शकुने नद्यूतमेतत् इदानीं प्रवर्तमानं द्यूतं नभवति किन्तु निशितैश्शरैः क्रीडनम् युद्धमित्यर्थः । भावस्तु कुवलयानन्दएव विवृतः । यद्यपि रसिकरञ्जनीसहित कुवलयानन्द पुस्तकेपि 'शाकुनिकंप्रति' इत्येव वर्तते । तथापि रसिकरञ्जन्यां 'उदाहरणे युद्धोद्यतशकुनिं प्रत्युक्तौ लक्षणं योजयति अत्र युद्धस्येति' इति ग्रन्थेन तस्यापि शकुनिं प्रति' इति पाठएव संमत इति स्पष्टं प्रतिभाति ॥

॥ इति प्रतिषेधः ॥

## विषयः (११८) हेतुः

हेत्वलङ्कारलक्षणं 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते' इति । उदाहृतमिदं पद्यं कुवलयानन्दे ॥

'माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां
स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते ।
तृष्णे त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना
यस्स्पृश्यो नपदा सएव चरणौ स्प्रष्टुं न संमन्यते' ॥

इति ॥ प्राचीनास्मत्तालपत्रकोशपाठानुसारेण मयेदं व्याख्यायते । अस्येदं तात्पर्यम् । कश्चिन्मानी शान्तो ह्रीमान्पराननुवर्तनशीलो महत्यामपि विपत्तावक्षुब्धहृदयः दैववशादर्थाशया कथञ्चिदसेव्यसेवां कृत्वा अन्ततःफलमप्यप्राप्य निर्विण्णमनाः तृष्णां संबोध्यब्रूते, 'माने' इत्यादि । हेतृष्णे बन्धकीतुल्ये त्वामनुबध्नन्नहं मद्धितैषिभिर्बंधुभिस्सर्वैर्निषिद्धोऽभूवम् । तथापि त्वामनुसरन्नहमेतावत्फलमलभे । कियत्फलमितिचेत् ? यः पुरुषः अस्माभिः पदापि स्प्रष्टुं नार्हः सएव पुरुषः इदानीं 'तव पादौ गृह्णामि प्रसारय' इति मया प्रार्थ्यमानस्सन् 'मा स्पृश दूरतो गच्छ' इति ब्रूते । इत्येतावत्फलं प्राप्तम् ॥ के ते बन्धवस्त्वां निषेद्धारः ? इति चेत् मम मानः चित्तौन्नत्यं मा मब्रवीत् 'तव तृष्णानुसरणं मम नेष्टम्' इति । ममोपशमस्तु 'तृष्णां मानुगच्छ' इति निरबध्नान्माम् । ह्रीस्तु 'हन्तायं निषिद्धोपि तृष्णामेवानुबध्नाति' इति लज्जया भुवमधोमुखी स्वपादांगुष्ठेन लिलेख । मम स्वातन्त्र्यन्तु 'जाल्मोयं प्रतिषिद्धोपि मया तृष्णामेवानुधावति, नास्य मुखमप्यवलोकनार्ह' मिति जुगुप्सया पराङ्मुखं बभूव । धैर्यन्तु 'नायं सहवासयोग्यः धिगेनम् नात्र क्षणमप्यवस्थातव्यं मया' इति मत्वा करौ व्याधूय दूरतो जगाम । तथाच प्रथमं याचितुं मानेन

नैच्छम् । ततो याचितुं प्रवृत्तं मां शान्तिर्न्यरुणत् । ततो लज्जाऽभूत् । ततस्तामपि विहाय परतन्त्रोऽभूवम् । धैर्यन्तु सुतरां नष्टम् । नष्टधैर्यः अकरणीयामसेव्यसेवामप्यकरवम् । पराभवञ्च प्राप्तम् । नतु धनकणिकामपि । तस्मादत्र परत्रच सुखसाधनभूतान्सर्वानुत्तमगुणान्परित्यज्योभयतो दुःखसाधनभूतां श्ववृत्तिमकरवम् । इत्येव फलं त्वदाश्रयणस्येति ॥

अस्मिन् पद्ये ' यत्स्पृष्टो न पदा सएव चरणौ ' इत्येव सर्वत्र मुद्रितपुस्तकेषु पाठो दृश्यते ॥ अस्य चन्द्रिकायामेवंव्याख्या, ' यत्पादेनापि यो नस्पृष्टः सएव चरणौ स्वीयौ स्प्रष्टुं न सम्यक्मन्यते अनुजानातीत्यन्वयः ' इति ॥ अत्र व्याख्यायामास्ति पदद्वयम् ' यत् ' ' यः ' इतिच । पदद्वयमपि पद्यस्थं न भवितुमर्हति । छन्दोभङ्गापत्तेः । किम् ' यः ' इत्यस्यावश्यकत्वमुत ' यत् ' इत्यस्येति विचारे कृते, ' सः ' इत्युत्तरत्र विद्यमानत्वात् ' यः ' इत्यस्यैवावश्यकत्वम् । ' यत् ' इत्यस्यतु न तथा । तदभावेप्यर्थपौष्कल्यात् । ' यः ' इत्यस्याभावेतु न्यूनपदत्वदोषः स्यात् ॥

किञ्च ' स्पृष्टः ' इति पाठे स्पर्शयोग्यतावर्तते नतु मम स्पर्शेच्छा आसीदित्यर्थो लभ्यते । ' स्पृश्यः ' इति पाठेतु स्पर्शयोग्यतापि नास्तीत्यर्थलाभे स्वारस्यम् । अपिच ' न पदा सएव ' इतिस्थाने ' न पदापि सोद्य ' इति पाठाङ्गीकारेतु ततोपि स्वारस्यातिशयः ॥

अन्यथा ' यः पदापि स्प्रष्टुमनर्हः ' इत्यपिशब्दस्यावश्यकत्वेन तदभावे अनभिहितवाच्यताख्यकाव्यदोषस्स्यात् । यथा ' रिक्तेषु वारिकथया, विपिनोदरेषु ' इति कुवलयानन्दोदाहृतपद्यपाठं चन्द्रिकाकार एवमशोधयत् । ' रिक्तेषु वारिकथयापि वनोदरेषु ' इत्यपिशब्दघटनया । इत्थञ्च सति ' यः स्पृश्यो न पदापि सोद्य चरणौ ' इति

पाठेन भाव्यमिति स्वभावनापरिकल्पितोयं पन्थाः ॥ यद्यस्ति स्वारस्यं गृह्णन्तु सहृदयाः ॥

॥ इति हेतुः ॥



## विषयः (११९) रसवदाद्यलङ्कारेषु समाहितम्

अस्य समाहितस्योदाहरणतया पद्यमिदमुपात्तम् कुवलयानन्दे,

'पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयाऽलंबितं
किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ॥
इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया ॥

अत्र शृङ्गारस्य कोपशान्तिरङ्गम्' इति ॥ अमरुकपद्यमिदम् । अस्येदं तात्पर्यम् । कश्चन युवा स्वानुभवं स्वसुहृदे कथयति । पश्यामइत्यादि । अन्यत्र गत्वाऽऽगतोहमस्याश्शयनगृहमगाम् तत्र तदा किमियं मां स्वयमालिङ्गति उतचुम्बत्याहोस्विदालपति ? किंवाऽन्यत्कुरुते ? पश्याम इति स्थिरीकृतमनास्तूष्णीमासम् । सापि गूढविप्रियकृदयं स्वयं किं मां नालपति पश्यामीति मयि कुपितेवाभूत् । नतुकुपिता । 'कोपस्तयाप्याश्रितः' इति कोपाश्रयणोक्तेः । इत्येवमन्योन्यस्य विलक्षा विस्मयान्विता या दृष्टिस्तया चातुर्यविशिष्टं यदवस्थान्तरन्तस्मिन् 'विलक्षो-विस्मयान्वितः' इति कोशात् । अत्र विस्मयो मनोविकासः । सच परस्परकार्यजिज्ञासारूपकुतूहलरूपः । तद्विशिष्टदृष्टिचातुर्यविशिष्टावस्थान्तरे तादृशदृष्ट्या अन्योन्यवीक्षणावसरे इत्यर्थः । यं कञ्चिद्व्याजमवलम्ब्याहसमहम् । सात्वरोदीत् । तेन मम धृतिरपहृता । तद्रोदनं दृष्ट्वा स्थैर्यं परित्यज्याहमेव तत्सान्त्वनाय प्रावर्ते । इति ॥

चन्द्रिकाकारस्तु 'विलक्ष' इति स्थाने 'विलक्ष्य' इति पाठं कृत्वा 'विलक्ष्या लक्ष्यरहिता या दृष्टिः तत्र चतुरे' इति व्याचख्यौ। अत्र दृष्टेर्लक्ष्यरहितत्वं विषयशून्यत्वमिति वक्तव्यं तच्चात्यन्तविरुद्धम्। परस्परभावजिज्ञासया परस्परकटाक्षदर्शनस्यैवात्रावश्यवक्तव्यत्वात्। दृष्टेर्निर्विषयत्वे चतुरत्वं सुतरां न संभवत्येवेत्यस्वारस्यम्॥ अर्जुनवर्मदेवप्रणीत 'रसिकसञ्जीवनी' समाख्यायां अमरुकव्याख्यायां विलक्षपदं न व्याख्यातम्। यद्यपि पाठो 'विलक्ष' इत्येव। रसिकरञ्जनीसहित कुवलयानन्दे प्राचीनास्मत्तालपत्रकोशेच तथैव। रसिकरञ्जन्यामपि न व्याख्यातम्॥

॥ इति समाहितम्॥



विषयः (१२०) भावसन्धिः

अस्येदमुदाहरणङ्कुवलयानन्दे,

'एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावलिः
जेतुर्मङ्गलपालिकेव पुलकैरन्या कपोलस्थली।
लोलाक्षीं क्षणमात्र भाविविरहक्लेशासहां पश्यतो
द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडम्बरम्'॥

इति॥ अत्र चन्द्रिकायामन्वयार्थभावास्समञ्जसाएव। विशेषस्तु 'मङ्गलपालिका मङ्गलरूपा पालिका। या कुशकाशादिनिर्मिता उभयपार्श्वस्थस्तंभवृक्षादिषु बद्धा मार्गपालीति प्रसिद्धा तद्वदभूदित्यर्थः' इति आनुपूर्वी॥

अत्रेदं युक्तम्। पलिका नाम मङ्गलकार्यारंभेषु यावत्कार्यसमाप्ति निर्विघ्नं कार्यरक्षणायाङ्कुरार्पणं नाम कर्म क्रियते। तस्य पात्रविशेषस्सुवर्णरजतताम्रमृत्तिकान्यतमनिर्मितः। तदुक्तमङ्कुरार्पणप्रयोगे॥

'मध्ये प्रजापतिं विद्यादिन्द्रंप्राच्यां तथैवच ।
दक्षिणे तु यमं विद्यात्पश्चाद्वरुणमेवच ॥
उत्तरे सोमएवस्यात्पालिकासु यथाक्रमम् ॥
वल्मीकमृत्तिकां हृत्वा गोमयञ्च तथैवच ।
एतानि प्रक्षिपेत्तासु पालिकासु यथाक्रमम्' ॥

इति ॥ तस्यांश्च मन्त्रपूर्वकमुप्तानां बीजानामङ्कुरितत्वात्तत्सादृश्यं रोमाञ्चितायाः कपोलस्थल्या उपपद्यते । उभयपार्श्वेस्थितस्तंभवृक्षादिषु बध्यमाना मार्गपाली कीदृशीतितु नविद्मः । अस्मदनुभवसिद्धातु सा कदलीस्तंभेक्षुकाण्डचूतपत्रादिरूपा । सातु पुलकितगण्डस्थल्याः उपमानतां नार्हति ॥

॥ इति भावसन्धिः ॥



## विषयः (१२१) प्रमाणालङ्कारेषु प्रत्यक्षम्

अस्योदाहरणं कुवलयानन्दे ।

'क्रान्तकान्तवदनप्रतिबिंबे भग्नबालसहकारसुगंधौ ।
स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥'

इति ॥ शिशुपालवधमहाकाव्ये दशमसर्गे तृतीयमिदं पद्यम् मधुपानवर्णनपरम् । अयमर्थः ॥ मधुनि मद्ये इन्द्रियवर्गः पञ्चानामपीन्द्रियाणां समूहः निर्ववार निर्वृतिं सुखं प्राप । क्रान्तेत्यादिप्रथमविशेषणेन चक्षुषः, भग्नेत्यादिना घ्राणस्य, स्वादुनीत्यनेन रसनेन्द्रियस्य, प्रणदितेत्यादिना श्रोत्रस्य, शीते इत्यनेन त्वगिन्द्रियस्यच निर्वृतिरुक्ता । अत्र बाह्येन्द्रियजन्यलौकिकसाक्षात्कारकथनात्प्रत्यक्षप्रमाणत्वम् इति ॥

अत्र चन्द्रिकायां 'भग्नबालसहकारसुगन्धौ' इत्यस्य 'भग्नकोमलाम्रपल्लववत्सुगन्धौ' इति व्याख्या कृता । भग्नस्य कोमलस्याम्र-

पल्लवस्य यस्सुगन्धस्तत्सदृशगन्धविशिष्टं मद्यमिति तदर्थः । मल्लिनाथसूरिस्तु ' भग्नाः क्षिप्ताः बालसहकाराः चूतविशेषपल्लवाः तैःसुगन्धौ सुरभिणि ' इति व्याचख्यौ ॥

इदं पुनर्वैलक्षण्यमुभयोर्व्याख्ययोः । आम्रपल्लवान्मद्यभाजने निक्षिपन्ति तत्र भग्नस्याम्रपल्लवस्य गन्धोऽपि मद्ये संपृक्तो भवतीति मल्लिनाथतात्पर्यम् । चन्द्रिकाकारस्यतु मद्यं भग्नसहकारपल्लवसदृशगन्ध विशिष्टमिति । एवं मल्लिनाथसूरिव्याख्यानस्य मूलं तत्रैवप्रकरणे ' लब्ध सौरभगुणः + + + मोदितालिः ' इति पद्येन मद्यस्य पुष्पपल्लवादिभिर्वासितत्वमुच्यत इति ॥ चन्द्रिकानुसारेण मद्यस्यैव चूतपल्लवसमानगन्धत्वं तदनुभवपरैरेव विज्ञेयम् ॥

॥ इति प्रत्यक्षम् ॥



विषयः (१२२) संशयोत्तरप्रत्यक्षम्

अस्याप्युदाहरणमिदम् ,

' किंतावत्सरसि सरोजमेतदारात्-
आहोस्विन्मुखमवभासते युवत्याः ।
संशय्य क्षणमिति निश्चिकायकश्चित्
बिब्बोकैर्बकसहवासिनां परोक्षैः ' ॥

इति ॥ इदञ्च पद्यं शिशुपालवधे जलक्रीडावर्णनप्रस्तावे दृश्यते। अस्येदं तात्पर्यम् । सरसि सरोजानां मध्ये कण्ठदघ्ने पयसि स्थितायाः कस्याश्चिन्मुखं दूरादवलोक्य कश्चित् किमेतत्सरसिजमुततरुणीमुखमिति संदिहानः पश्चाद्बकसहकासिनां सरसिजानांपरोक्षैः दुर्लभैः बिब्बोकैः कटाक्षभ्रूक्षेपादिशृङ्गारचेष्टाभिः मुखमेवेदमिति निरणैषीदिति । अत्र

'बिब्बोकैः' इत्यस्य 'मानात्प्रियकथालापे बिब्बोकोऽनादरक्रिया' इत्युक्तलक्षणैर्हावविशेषैः' इति चन्द्रिकायां यद्व्याख्यानम् ॥

तन्न प्रकरणोचितम् । तथाहि । अत्र जलविहाराय सरस्वतीर्णायाः एकस्यामुखदर्शनेन दूरस्थितस्य यस्यकस्यचित्संयोत्तरं विशेषदर्शनेन मुखमेवेदमिति निर्णयो जात इति कविनोच्यते । सच विशेषश्चन्द्रिकाकारेण प्रणयकोपजन्यप्रियकथालापविषयकानादरक्रियाविशेषश्शृङ्गारचेष्टाविशेषः इत्युक्तः ॥ वस्तुतस्तु सविशेषो भ्रूविक्षेपरूपश्शृङ्गारचेष्टाविशेषः इत्युक्तः ॥ वस्तुतस्तु सविशेषो भ्रूविक्षेपकटाक्षवीक्षणादिशृङ्गारचेष्टासामान्यरूपः । नतूक्तविशेषार्थकः । स्नानायावतीर्णायाः प्रणयकोपाप्रसङ्गात् । तत्पूर्वकालिकमानकल्पनेपि 'काचिदन्या तत्समीपे स्थित्वा प्रियकथां जगाद । इयन्तु तच्छ्रुत्वापि कोपादनादरञ्चकार' इत्यपि कल्पनीयं । तदा 'किं सरसिजमुतयुवत्यामुख' मिति एकवचनग्रहणस्वारस्यभङ्गप्रसङ्गः । तदा तत्र द्वयोर्मुखयोस्सत्वात् ॥

अतएवास्य पद्यस्य व्याख्याने मल्लिनाथसूरिणा लिखितम् 'यद्यपि 'बिब्बोकोऽनादरक्रिया' इत्युक्तम् । तथापि विशेषवाचिनां सामान्ये लक्षणेत्यदोषः' इति ॥ दृश्यतेच विलासबिब्बोकविभ्रमललितादीनां शृङ्गारचेष्टाविशेषाणां सत्यपि लक्षणभेदे पर्यायतया प्रयोगोऽनेकत्र ॥

किंबहुना चन्द्रिकाकारेणैव 'पद्मेत्वन्नयने' इत्यादिपद्ये 'विभ्रमैः' इत्यस्य 'विलासैः' इति पर्यायतया व्याख्या कृता । विभ्रमविलासयोर्लक्षणन्तु पृथगेव । 'विभ्रमस्त्वरया काले भूषास्थानविपर्ययः' 'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु' इतिच ॥ किञ्च—अत्रैव 'मानात्प्रियकथालापे बिब्बोकोऽनादरक्रिया इत्युक्तलक्षणैर्हावविशेषैः' इति चन्द्रिकावाक्ये बिब्बोकलक्षणमुक्त्वा 'अल्पालापस्तुशृङ्गारोहावो-

क्षिभ्रूविकारकृत्' इति लक्षणलक्षितहावपदेन पर्यायतया बिब्बोकपद-विवरणाद्बिब्बोकपदं शृङ्गारचेष्टासामान्यपरमेवेति ॥

॥ इति प्रत्यक्षम् ॥



## विषयः (१२३) अनुमानम्

कुवलयानन्दे, अनुमानस्य द्वितीयमुदाहरणमिदं प्रदर्श्य एव मुक्तम्,

'यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवौ
　यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापपुंखितशरप्रेङ्खत्करः क्रोधनः
　धावत्यग्रतएव शासनधरस्सत्यं तदासां स्मरः ॥
पूर्वं रूपकसंकीर्णम् । इदमतिशयोक्तिसंकीर्णमितिभेदः' इति ॥

'अतिशयोक्तिसङ्कीर्ण' मित्यस्य व्याख्या चन्द्रिकायामेवम् 'अतिशयोक्तीति । मार्गणत्वेन दृशामध्यवसानादिति भावः' इति ॥ अत्र मार्गणत्वेन दृशामध्यवसानं न सम्भवति । किन्तु कटाक्षाणाम् । दृशान्तु नीलोत्पलत्वादिरूपेण । तथैव कविजनसङ्केतात् । उक्तश्चात्रैवातिशयोक्तौ, 'पश्य नीलोत्पलद्वन्द्वान्निस्सरन्ति शिताश्शराः' इति । तादृशकविसङ्केतप्रयोजकीभूतोऽनुभवश्चैवं दृश्यते । यादृशी वामलोचनापाङ्गदर्शनपातविषयाणां पुंसामुत्कलिका जायते न तादृशी तल्लोचनमात्रदर्शिनाम् । तस्मान्मार्गणत्वेन कटाक्षाणामध्यवसानादतिशयोक्तिसङ्कीर्णमनुमानमिति ॥

॥ इति अनुमानम् ॥



## विषयः (१२४) उपमानम्

उपमानालङ्कारोदाहरणस्य,

‘ अत्र मन्मथमिवातिसुन्दरं दानवारिमिव दिव्यतेजसम् ।
शैलराजमिव धैर्यशालिनं वेद्मिवेङ्कटपतिं महीपतिम् ’ ॥

इति पद्यस्य व्याख्याने चन्द्रिकायां ‘ शैलराजम् हरम् धैर्यशालिनम् मदनशासकत्वात् ’ इति लिखितम् । अत्र ‘ शैलराज ’ मिति पदस्य ‘ हरम् ’ इत्यर्थः, केन कोशेन रूढ्या अवयवशक्त्यावा लभ्यत इति नजानीमः । किन्तु राजपदस्य श्रेष्ठे लक्षणामङ्गीकृत्य शैलराजपदेन शङ्करावासत्वात्पर्वतश्रेष्ठं कैलासं विवक्षित्वा ततो मञ्चाः क्रोशन्तीतिवदजहल्लक्षणया कैलासवासं हरमित्यर्थलाभोवक्तव्यः ॥

ईदृशक्लिष्टकल्पनापेक्षया अयमर्थस्साधीयान् । ‘ शैलराजः हिमवान् । तस्यैव पर्वतराजत्वात् । तच्च ‘ यंसर्वेशैलाः परिकल्प्यवत्सम् ’ ‘ यस्यार्थयुक्तंगिरिराजशब्दम् ’ इत्यादिना सर्वप्रसिद्धम् । धैर्यञ्च स्वस्वभावादविचाल्यत्वम् । तस्मिन्नंशे हिमवतएवोपमानत्वं सर्वत्र दृश्यते । यथा आदिकाव्ये ‘ धैर्येणहिमवानिव ’ इति ॥ किञ्च—प्रलयसमये समस्तजन्तुजातसंहर्तुर्हरस्य मदनशासकत्वेन धैर्योपपादनं विनतासुतस्यालगर्दमर्दनेन प्रौढताप्रतिपादनमिवातिनिकर्षावहम् । अपिच कालरुद्रस्योपमानत्वं रौद्रतायाम् नतु धैर्ये । तदुक्तं हर्षचरिते बाणभट्टेन ‘ हरइवकृतभैरवाकारः ’ इति । तस्मादस्मदुक्तार्थएव श्रेयान् ॥

॥ इति उपमानम् ॥



## विषयः (१२५) आचारः

आचाररूपप्रमाणालङ्कारस्योदाहरणमिदम्

'महाजनाचारपरंपरेदृशी स्वनाम नामाददते न साधवः ।
अतोभिधातुं नतदुत्सहे पुनर्जनः किलाचारमुचं विगायति ॥'

इति ॥ अस्य व्याख्यायां चन्द्रिकायां 'नामवितर्के' इति 'नाम' पदस्य वितर्कार्थकत्वमुक्तम् । अत्र वितर्करूपार्थस्य प्रकृते नोपयोगः । तथाहि । दिक्पालदूत्यमङ्गीकृत्यागतं नलं दमयन्ती पप्रच्छ, 'किन्ते-नामे' ति । तदा नलो ब्रूते । महाजनेत्यादि । इदन्तु तात्पर्यम् । महाजनानामाचारसंप्रदायएतादृशः । कीदृशइतिचेत् साधवः स्वनाम नाददते नाम । सन्तस्स्वनामधेयं नवदन्तीत्येतत्प्रसिद्धं धर्मशास्त्रेषु,

'आत्मनाम गुरोर्नाम नामातिकृपणस्यच ।
आयुष्कामो नगृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥'

इत्यादिना निषिद्धत्वादिति भावः । अतः आत्मनाम नवदामि । आचारपरित्यागे जनो निन्दत्येनम् इति । अतोत्र 'नाम' इत्यस्य प्रसिद्धार्थकत्वमेव साधु । न वितर्कार्थकत्वम् । वितर्को नाम विविधस्तर्कः । तर्कश्चोहः । 'अध्याहारस्तर्कऊहः' इति कोशात् । तत्र विविधत्वञ्च इदमेवंवा ? अन्यथावा ? इति बुद्धिः । प्रकृते नामशब्दस्य वितर्कार्थकत्वे 'साधवः स्वनाम नाददतेनाम' इत्यस्य सन्तस्स्वनामधेयं नकथयन्तिवा उतकथयन्ति इति सन्देहइत्यर्थः फलति । ततश्च 'अतो-भिधातुं न तदुत्सहे' इति तृतीयपादार्थासङ्गतिस्स्पष्टैवेति ॥

॥ इति आचारः ॥



विषयः (१२६) मीमांसकोक्त श्रुतिलिङ्गादिषुश्रुतिः।

एतदुदाहरणे,

'त्वंहि नाक्षैव वरदो न धत्से वरमुद्रिकाम्।
नहि श्रुतिप्रसिद्धार्थे लिङ्गमाद्रियते बुधैः'॥

इति पद्ये मद्रास चेन्नपुरी सरस्वतीनिलय मुद्राशालामुद्रितान्ध्राक्षर पुस्तके, मुंबइ निर्णयसागर मुद्रित संस्कृताक्षर पुस्तके, कुंभघोणस्थ श्रीविद्यामुद्रालय मुद्रितसंस्कृताक्षर रसिकरञ्जनीसहित पुस्तकेपि 'नाधत्सेवरमुद्रिकाम्' इत्येव पाठोदृश्यते। अस्मत्तातपादलिखितग्रन्थाक्षरतालपत्रकोशेतु, 'न धत्से वरमुद्रिकाम्' इति वर्तते॥ 'धत्से' इति 'डुधाञ्धारणपोषणयोः' इति धाञ्धातोरात्मनेपदे लटि मध्यमपुरुषे रूपम्। अर्थस्तु 'नधत्से नधारयसि' इति। पाठोयमर्थश्च सर्वतोभद्रः॥ आन्ध्राक्षरपुस्तके चन्द्रिकायां 'नाधत्से नाधास्यति' इति वर्तते। तदा, 'न आधत्से' इति पदविभागेन भाव्यं। तथासति आधानं स्थापनं। वरदानमुद्रायाः न कुत्रापि स्थापनं। किन्तु धारणम्॥ किञ्च 'नाधत्से' इति लण्मध्यमपुरुषान्तस्य 'नाधास्यती' ति लृट् प्रथमपुरुषान्तेन विवरणमत्यन्तासङ्गतम्॥

मुंबइ पुस्तकेतु 'नाधत्से नधास्यसि' इति वर्तते। अत्र 'नाधत्से' इत्याङ्पूर्वकं पदं प्रतीकतया गृहीत्वा 'नधास्यसी' ति विवरणे आङः परित्यागात्तस्य निरर्थकत्वं सूच्यते। ततश्चाधानं नार्थः। किन्तु धारणमेव। ततश्च न विरोधः, 'से' इति मध्यमपुरुषस्य 'सि' इति मध्यमपुरुषेणैव विवरणस्य साधुत्वेपि लटः लृटा विवरणमनुपपन्नमेव। तस्मात् 'त्वंहिनाक्षैवे'ति पद्ये 'नधत्से' इति पाठेन, चन्द्रिकायां 'नधत्से न धारयसि' इति पाठेनच भाव्यम्॥

॥ इति मीमांसकोक्त श्रुतिलिङ्गादिषुश्रुतिः॥

विषयः (१२७) चेष्टा

'लीलाभ्रूलतया विपक्षदिगुपन्यासे विधूतं शिरः
तद्वृत्तान्तपरीक्षणे कृतनमस्कारो विलक्ष्य स्थितः ।
ईषत्ताम्रकपोलकान्तिनि मुखे दृष्ट्या नतः पादयोः
उत्सृष्टो गुरुसन्निधावपि विधिर्द्वाभ्यां न कालोचितः' ॥

इति ॥ अमरुककाव्यस्थमिदं पद्यम् । अत्र प्रथमं पुस्तकभेदेनार्थभेदकरः पाठभेदः प्रदर्श्यते । मुद्रितेषु कुवलयानन्दपुस्तकेषु सर्वत्र 'तद्वृत्तान्तपरीक्षणे' इति, 'विलक्ष्य' इतिच, पाठः, निर्णयसागरमुद्रितामरुकपुस्तके 'तद्वृत्तान्तनिरीक्षणे' इति, 'विलक्ष' इतिच पाठः, अस्मत्तालपत्रकोशेतु 'तद्वृत्तान्तविदीक्षणे' इति 'विलक्ष' इतिच पाठः, सर्वपुस्तकेष्वपि 'कृतनमस्कारः' इतिच पाठो दृश्यते ॥

चन्द्रिकाकारस्तु 'अकृतनमस्कारः' इति पदं बभञ्ज । 'विलक्ष्य एव स्थितः' इतिच लिलेख । विलक्ष्यपदार्थं नचाकथयत् । बह्वीष्वमरुकव्याख्यासु प्रशस्ततमत्वेन परिगणितायाः रसिकसञ्जीवनीसमाख्याया व्याख्यायाः कर्ता अर्जुनवर्मदेवस्तु 'कृतनमस्कारः' इत्येव पदं व्यभजत् । विलक्षपदञ्च न व्याचख्यौ । अस्मदभिमतस्तु 'कृतमनस्कार' इति पाठः । प्रमादः कस्येति तु नजानीमः । अस्मत्तालपत्रकोशपाठानुसारेणास्मदभिमतपाठानुसारेणच पद्यमिदमिदानीं व्याख्यायते मया ॥

कश्चिद्दक्षिणनायकः खण्डितनायिकां स्वीयां गुरुजनसंनिधावेवाकस्माद्ददर्श । सातु तदैव तस्यापराधं संज्ञयैव प्रकटीकृत्य निरूप्यच चुकोप । सोपि संज्ञयैव तत्समाधानं चकार । इत्थं सति गुरुसांनिध्येपि ताभ्यां तात्कालिकसंलापतत्समाधानादिरूपो व्यापारो लज्जादिना न परित्यक्तः । अस्य समर्थनीयस्य चतुर्थपादार्थस्य समर्थनं

पूर्वपादत्रयेण क्रियते । तत्र क्रमेण सप्तम्यन्तैर्नायिकया नायके कोपकारणाविष्करणं तन्निरूपणं कोपश्च प्रतिपाद्यते । 'विधूतं शिरः' 'विलक्षस्स्थितः' 'दृष्ट्या नतः पादयोः' इत्यंशत्रयेण नायकेन तस्यास्समाधानप्रकारः प्रदर्शितः । तथाहि । प्रथमम् नायिका भ्रूसंज्ञया सपत्नीगृहं प्रादर्शयत् तत्रगतंत्वयेति । नायकस्तु 'न' इत्यभिप्रायेण शिरस्तिर्यगुभयतोऽचालयत् । सातु तस्य सपत्नीगृहगमनरूपवृत्तान्तवेदिन्याः कस्याश्चिन्मुखमवालोकत । तन्मुखावलोकनस्यायं भावः 'भवतस्तत्र गमनवृत्तान्तमियं यथावज्जानाति, त्वन्तु मृषाब्रूषे' इति । तदा सतु कृतमनस्कारः 'कथमियं मद्रहस्यं चारमुखेनाजानात्' इति विकसितमानसः विलक्षस्स्थितः विस्मयान्वितोऽभूत् । 'चित्ताभोगो मनस्कारः' 'विलक्षो विस्मयान्वितः' इत्युभयत्रामरः । एवं साक्षिमुखेनापराधे निरूपिते यदा विस्मयेन स तूष्णीमासीत्, तदा 'अप्रतिषिद्धमनुमतं भवति' इति न्यायेनाभ्युपगतमपराधं मत्वा सा चुकोप तस्मै । तदा तस्याः कपोलौ ताम्रावभूताम् । तदा तत्समाधानाय संतु दृष्ट्यैव पादयोस्तस्याः निपपात । एतत्सर्वं यथा गुरुजनस्संनिहितोपि नजानीयात्तथा निर्वृत्तम् । संज्ञयैव सर्वस्य कृतत्वात् । इति ॥

अत्र चन्द्रिकायां 'तद्वृत्तान्तपरीक्षणे नायिकया कृते सति' इत्युक्तया तया तद्वृत्तान्तपरीक्षा कृतेति ज्ञायते । परीक्षा नाम परपक्षप्रतिक्षेपपूर्वकस्वपक्षस्थापनं । तच्च वाचा न भवति । गुरुभिर्ज्ञायमानत्वात् । अतएव समीपं गत्वा संभोगचिह्नप्रदर्शनादिनापि न भवति । कया रीत्या परीक्षणं कृतमिति जिज्ञासा परमवशिष्यते । तदर्थं कश्चन दृष्टिव्यापारो वाच्यः । सतु 'तद्वृत्तान्तविदीक्षणे' इति पाठे संपद्यते । नतु 'परीक्षणे' 'निरीक्षणे' इति वा पाठे ॥

अर्जुनवर्मदेवव्याख्यारीत्या 'निरीक्षणे' इति पाठे निरीक्षणस्य दृष्टिव्यापाररूपत्वेपि वृत्तान्तस्य शब्दात्मकस्य श्रवणेनैव युक्तम् । नतु

निरीक्षणम् । चन्द्रिकायां 'अकृतनमस्कार' इति पदेन नकोपिलाभः । नायिकया दोषारोपणे कृते तत्समाधानाय नायकस्य यःकश्चनाकाररूपो व्यापार इङ्गितरूपोवा अवश्यं वक्तव्यः । अकृतनमस्कारः इत्यनेन व्यापाराभाव एवोक्तः । तत्राप्यभावस्य नमस्कारप्रतियोगिकत्वकथनेन न किमपि प्रयोजनम् । अकृतमहाक्रोधइत्यपिस्यात् । नयोर्वैलक्षण्याभावात् । 'विलक्ष्य एव स्थितः' इत्यस्यापि 'इत्यन्योन्यविलक्ष्यदृष्टिचतुरे' इत्यत्र चन्द्रिकोक्तरीत्या 'विलक्ष्यः लक्ष्यरहितः' इत्यर्थे कृते यथा दृष्टेर्लक्ष्यरहितत्वं तथा नायकस्यविलक्ष्यत्वं निर्विपर्यत्वं किं नाम ? अत इदमसंबद्धप्रलापायते ॥

अर्जुनवर्मदेवव्याख्यारीत्या 'कृतनमस्कारः' इत्येवोक्ते महान्विरोधः । गुरुजनस्याज्ञाततया तत्सन्निधावपि इङ्गितादिना स्वस्वव्यापारो निरूढ इति प्रकरणस्याननुरूपत्वात् । नहि गुरुसंनिधौ नायकेन नायिका नमस्क्रियते । अतएव तेन 'अथवे' त्यादिना भावान्तरं वर्णितम् 'तस्यै दिशे नमस्कारएवे' ति । तदितोप्यसारम् । 'दृष्ट्या नतः पादयोः' इति तृतीयपादेन पुनरुक्तिश्च । गुरुजनसमक्षमेव नमस्कारे कृते तृतीयपादेपि स्पष्टमेव नमस्कारस्स्यात् । 'दृष्ट्या' इति पदमेव माभूत् । इत्थञ्च 'अकृतनमस्कारः' 'कृतनमस्कारः' इत्युभयत्राप्यस्वारस्यदर्शनादस्मदभिमतः 'कृतमनस्कारः' इति पाठ एव साधीयानित्यत्र सहृदयहृदयमेव साक्षि ॥

किञ्च—अर्जुनवर्मदेवव्याख्याने महदस्वारस्यम् । एवंहि तद्व्याख्यानम् 'श्वशुरप्रायगुरुजनसकाशेपि द्वाभ्यां चातुर्येण कोपप्रसादनात्मको विधिस्समयोचितो नमुक्तः । कथंकथमित्याह । तत्र गत्वा आगतोसीति सूचकं स्पन्दितया भ्रूलतया अन्यवनितागृहोद्देशोपक्षेपे नायिकया शिरोवधूतम् । नायकोऽपि शिरःकम्पनवृत्तान्तनिरीक्षणे

विलक्षस्स्थितः । किंविशिष्टः नमरया भवती । यदेवमेव निरपराधस्य ममापराधमारोपयतीत्याशयेन कृतनमस्कारः । अथवा तस्यै दिशे मम नमस्कारएवेति भावः ' इति ॥

अस्यां व्याख्यायां व्याख्यातुर्भावः स्फुटएवावगम्यते विरोधश्च । ' विपक्षदिगुपन्यासे ' इत्यत्र ' चर्मणि द्वीपिनं हन्ति ' चर्मार्थे व्याघ्रं हन्ति (चर्म निमित्तीकृत्य । निमित्तश्चात्र फलमेवेत्यर्थः) इत्यत्रेव निमित्तसप्तमी वाच्या । विपक्षदिगुपन्यासाय किल शिरोऽवधूतं नायिकया । ' तद्वृत्तान्तनिरीक्षणे कृतनमस्कारः ' इत्यत्र नायिकाशिरो वधूननदर्शनाद्धेतोर्नायकेन नमस्कारः कृत इति तेन तात्पर्यस्य वर्णितत्वात्सप्तम्याहेत्वर्थत्वं वाच्यम् हेत्वर्थे सप्तमी न क्वचिदपि विहिता । ' ईषत्ताम्रकपोलकान्तिनि मुखे ' इति तृतीयपादेतु भावलक्षणे सप्तमीति तिसृणामपि सप्तमीनां वैरूप्यमित्यस्वारस्यम् । अस्मद्व्याख्यानेतु सप्तमीनां तिसृणामपि भावलक्षणेसप्तमीत्वादैकरूप्यम् ॥

किञ्च—अर्जुनवर्मदेवव्याख्याने प्रथमपादेन नायिकाव्यापारः, द्वितीयपादेन नायकव्यापारः, तृतीयपादेनोभयोर्व्यापारः कथित इति वैरूप्यम् ॥ अस्मद्व्याख्यानेतु तृतीयपादवत्पूर्वपादद्वयेपि उभयोर्व्यापार इत्यैकरूप्यम् ॥ अपिच—' उत्सृष्टो गुरुसंनिधावपि विधिर्द्वाभ्यां न कालोचितः ' इति चतुर्थपादानुरूप्येण पादत्रयेपि प्रत्येकमुभयोर्व्यापाराकथनात्तत्पक्षे स्वारस्याभावः । अस्मद्व्याख्यानेतु तदप्यस्तीति स्वारस्यम् ॥

अन्यञ्च —' अवधूत ' मित्यत्रावधूननक्रियाकर्तृत्वेन ' नायिकया ' इति तेनाप्यध्याहृतम् । अध्याहृतनायिकापदविशेषणत्वमेवोचितं ' लोलभ्रूलतयेत्यस्यापि । तेनतु ' स्पन्दितया भ्रूलतये ' ति भ्रूलतायाः करणत्वकथनेन भ्रूलतयैव विपक्षदिगुपन्यासे कृते पुनश्शि-

रोऽवधूननं व्यर्थमेव । तस्माच्छिरोवधूननं नायककर्तृकमेवोचितम् । तदनुरोधाद्द्वितीयतृतीयपादयोरप्युभयोर्व्यापारएवोचित इति जानन्तु काव्यचर्वणधुरीणाः ॥

॥ इति चेष्टा ॥



## विषयः (१२८) अर्थापत्तिः

अर्थापत्तेरुदाहरणमिदं प्राचीनास्मत्तालपत्रपुस्तकानुसारि विलिख्य व्याख्यायते मया पद्यम् ॥

'व्यक्तं बलीयान्यदि हेतुरागमादपूरयत्सा जलधिं न जाह्नवी ।
गङ्गौघनिर्भस्मितशंभुकन्धरासवर्णमर्णः कथमन्यथाऽस्यतत्' ॥

इति ॥ शिशुपालवधकाव्ये द्वादशसर्गे (६९) एकोनसप्ततितमं यमुनावर्णनपरमिदं पद्यम् । आगमात् शास्त्रात् शब्दप्रमाणापेक्षयेतियावत् । हेतुः आपादकमबाधितं कारणं ज्ञापकहेतुरितियावत् । बलीयान् प्रामाण्ये प्रबलः इति व्यक्तं यदि स्फुटश्चेत् निश्चितं चेदिति यावत् । सा यमुना जलधिमपूरयत् । जाह्नवी गङ्गा जलधिं नापूरयत् नैव पूरयामास । अन्यथा गङ्गया जलधौ पूरिते अस्य समुद्रस्य तत् गङ्गापूरितम् अर्णः अंभः गङ्गौघेत्यादि गङ्गाया ओघेन अंभसां रयेण 'ओघोवृन्देऽम्भसां रये' इति कोशः । निर्भस्मितायाः भस्मोद्धूलनशून्यीकृतायाः शंभुकन्धरायाः शितिकण्ठकण्ठस्य सवर्णं समानवर्णं सत् नीलवर्णमिति यावत् । कथम् वर्तेत इति शेषः । इत्यन्वयपूर्वकः पदार्थः ॥

तात्पर्यन्तु महाभारते अरण्यपर्वणि युधिष्ठिरतीर्थयात्रासंदर्भे अगस्त्यमहिमानुवर्णनप्रस्तावे जलधिनिलीनदानववधाय देवैरभ्यर्थितेन कुंभसंभवेन नीरधौ निपीते जीर्णेच विधातृवचनानुसारेण बहोः

कालाद्भगीरथेन सुमहत्तपस्तप्यता दिवो भुवमानीता गङ्गा सागरमपूरयदिति कथा दृश्यते । एतत्प्रतिपादकभारतवाक्यरूपशब्दस्यैव प्रबल प्रमाणत्वे तथैव गङ्गा सागरमपूरयदिति वयं प्रतीमः । तादृशशब्दप्रमाणापेक्षया दृष्टानुसारिणी युक्तिरेव प्रबलं प्रमाणं चेत् गङ्गा सागरं नापूरयत् । किन्तु यमुनैवेतिनिर्णयामः । यदि गङ्गा सागरमपूरयिष्यत् तर्हि सार्गरसलिलं स्वच्छधवलमभविष्यत् । नतु शितिकण्ठकण्ठसच्छवि । वर्ततेतु सागरसलिलं नीलं । अतश्च गङ्गा सागरं नापूरयत् । किन्तु यमुनैवेति ॥

अत्र चन्द्रिकाकारः । 'व्यक्तमिति । हेतुः तर्कः यदि व्यक्तं प्रकटम् बलीयान् तदा सा जाह्नवीजलधिं नापूरयत् । अन्यथा पूरणेसति अर्णः समुद्रस्य जलं गङ्गौघैः निर्भर्त्सितं तिरस्कृतं सत् शंभुकण्ठसमानवर्णं नीलं कथं स्यात् इत्यन्वयः ' इति व्याचख्यौ ॥

तत्तु न संगतम् । 'हेतु' रित्यस्य 'तर्क' इति व्याख्यानमनुपपन्नम् । तर्को नाम ऊहः । 'अध्याहारस्तर्कऊहः' इति कोशात् । ऊहस्य प्रमाणत्वं न कश्चिदभ्युपैति । नैयायिकाभिमतस्तर्कस्तु व्याप्यारोपेण व्यापकारोपरूपः । तस्यापि प्रमाणत्वं नकश्चिदंगीकरोति । प्रकृते हेतुशब्देन यत्किंचित्प्रमाणार्थकेन भाव्यम् प्रमाणप्राबल्यदौर्बल्यविचारप्रकरणात् । किञ्च गंगौघेत्यादिविशेषणमध्यघटकीभूतस्य निर्भर्त्सितपदस्य तदुत्तरशंभुकंधरापदे विशेषणत्वं सरसं परित्यज्य समस्तपदैकदेशस्य तस्य भिन्ने अर्णःपदे विशेषणत्वकथनमतीव क्लिष्टम् । नच अत्र विशेषणोभयपदकर्मधारयांगीकारात् गंगौघनिर्भर्त्सितत्वं शंभुकंधरासवर्णत्वंच सागरसलिले संपन्नमिति नक्लेश इति वाच्यम् । उभयोर्विशेषणयोरन्योन्यविरोधात् । विरोधश्चैवं । 'निर्भर्त्सितं तिरस्कृतंसत्' इति व्याख्यानाद्गंगाप्रवाहेण समुद्रजलस्य तिरस्कारो नाम

धवलीकरणम् । शंभुकन्धरासवर्णत्वञ्च नीलत्वम् । तदुभयमेकदा न संभवति । इति ॥

अपिच। अत्र गङ्गासलिलेन सागरसलिलस्य तिरस्कारे वाच्ये सलिलद्वयसत्त्वांगीकरणीया। तथासति उक्तभारतप्रमाणावगम्यमानमगस्त्येन निश्शेषं जलनिधेः पीतत्वेन स्थलीकरणं, जठरजीर्णत्वेन पुनर्विसर्जनानवकाशः, देवादिप्रार्थनया चतुर्मुखेन भाविभगीरथप्रयतनाद्दिव्यगङ्गया सागरपूरणकथनमित्यादेर्विरोधः ॥

अन्यच्च 'कथमन्यथास्यतत्' इति पाठंविहाय 'कथमन्यथास्यात्' इत्येव श्लोके व्याख्यानेच पाठदर्शनात्तथैवांगीकाराच्चाध्याहारदोषः । तथाहि । पूर्वार्धे जाह्नवीजलनिध्योरुभयोरपि कथनादुत्तरार्धोक्तमणेः किं जाह्नव्याः उतजलधेः ? इति सन्देहोदयात् 'समुद्रस्य इति संबन्धिपदमध्याहृतम् । 'अस्यतत्' इति पाठे 'अस्य' इति संबन्धिपदमस्तीति नाध्याहारः ॥

'सा' इत्यस्य 'यमुना' इति व्याख्यानाकरणात् जाह्नवीविशेषणत्वेन व्याख्यानाच्च यमुनावर्णनप्रकरणे माघकाव्यगतमिदंपद्यमिति नज्ञातं तेनेत्यपि ज्ञायते । अपरञ्च—अस्मिन्पद्ये आदितः पादत्रये द्वादशाक्षरा जगती च्छन्दः। 'स्यात्' इति पाठेतु एकादशाक्षरा त्रिष्टुबिति च्छन्दोभङ्गस्स्यात् । 'अस्यतत्' इतिपाठेतु समीचीनश्छन्दोबन्धः ॥

'निर्भस्मिते' ति प्राचीनास्मत्तालपत्रपुस्तकपाठेतु तस्य शंभुकन्धरायां विशेषणतयान्वयस्स्वरसः। प्रयोजनञ्चार्तीवमधुरम्। शंभुकन्धरायाः भस्मविशिष्टत्वे धावल्यस्यवा तन्मिश्रितनीलस्यवा प्रतीत्या समुद्रजलस्य शुद्धनैल्यं नोपपादितं भवतीति गङ्गाजलपूरणस्यापि संभाव्यत्वापत्त्या 'जाह्नवीं जलधिं नापूरयत्' इत्यस्यार्थस्योपपादन-

मेव ननिष्पन्नं प्रत्युत विरुद्धश्च स्यात्। निर्भर्सितत्वात्तु शुद्धनीलवर्णस्यैव शंभुकंधरायां विद्यमानत्वात्तत्समानवर्णत्वे समुद्रजलस्य शुद्धनीलत्वसिद्ध्या, 'जाह्नवी जलधिं नापूरयत् किन्तु यमुनैवेत्यर्थस्सम्यगुपपादितो भवति ॥

अत्रायमपरोविशेषः। सर्वदेशेषु सर्वलिपिभिर्मुद्रितेषु लिखितेषुचकुवलयानन्दतद्व्याख्यानेषु तादृशेषु शिशुपालवधतद्व्याख्यानेषुच 'अपूरयत्सा' इत्येवपाठो दृश्यते। मल्लिनाथव्याख्यायामपि 'सा यमुना' इति वर्तते। तच्चानुपपन्नम्। यमुनावर्णनप्रकरणे प्रत्यक्षगतायास्तस्याः 'इय' मितीदंशब्देनैव निर्देशस्योचितत्वात्। नतु परोक्षवाचकेन तच्छब्देन ॥

वस्तुतस्तु 'अपूरयद्या' इति यच्छब्दपाठेन भाव्यम्। कुतइतिचेत्? अस्मात्पद्यात्प्राक्तृतीयपद्यस्यैवमवतारिका दत्ता मल्लिनाथसूरिणैव। 'अथ चतुर्भिर्यमुनां वर्णयति' इति। तत्राद्यपद्ये 'या घर्मभानोस्तनया' इति यच्छब्दोदृश्यते। द्वितीयपद्ये 'यस्यामहानील' इति यच्छब्दः। तृतीयेस्मिन्पद्येपि 'या' इति यच्छब्देनैव यमुनायाग्रहणमुचितम्। एतदनन्तरपद्ये चतुर्थे 'सीमेव सा तस्यपुरः क्षणं बभौ' इति तच्छब्देन यमुनाग्रहणपूर्वकं तद्वर्णनं पूरितम्। 'सा' इति पाठभेदस्तु कदा केन कस्मात्परिवर्तितइतितु नजानीमः। इत्यन्विष्य गृहीतं च्छिद्रम् ॥

॥ इति अर्थापत्तिः ॥



विषयः (१२९) अनुपलब्धिः

इदमुदाहरणम्

'स्फुटमसदवलग्नं तन्वि निश्चिन्वते ते
तदनुपलभमानास्तर्कयन्तोपि लोकाः।

कुचगिरिवरयुग्मं यद्विनाधारमास्ते
तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥ '

इति ॥ अस्य चन्द्रिका ' हेतन्वि तर्कयन्तः तर्कशीला अपि लोकाः तत् अवलग्नम् अनुपलभमानाः अपश्यन्तः तव अवलग्नं मध्यम् असदिति स्फुटमेव निश्चिन्वते । कुलपर्वतश्रेष्ठयुग्मत्वेनाध्यवसितं स्तनद्वंद्वमाधारंविना यदास्ते तत्त्विह मकरकेतोरिन्द्रजालंमायाचरितं प्रतीमः इत्यन्वयः ' इति ॥

अत्र ' तर्कयन्तः ' इत्यस्य, ' तर्कशीलाः ' इति व्याख्यानं चिन्त्यम् । शतृप्रत्ययस्य ताच्छील्यार्थकत्वाभावात् । तथाहि ' लटश्शातृशानचावप्रथमासमानाधिकरणे ' (३-२-१२४) इत्यारभ्य शतृशानचोरर्थमुक्त्वा, आक्केस्तच्छीलतद्धर्मतत्साधुकारिषु ' (३-२-१३४) इत्यारभ्य तृनादिक्विबन्तानां प्रत्ययानामेव ताच्छील्याद्यर्थे विधानात् । शत्रर्थेषु ताच्छील्यस्याघटकत्वात्ताच्छील्याद्यर्थकप्रत्ययेषु शतुरघटकत्वाच्चेति । किन्तु—' लक्षणहेत्वोः क्रियायाः ' इति सूत्रेण हेत्वर्थे शतृप्रत्ययः । तथाच ' तर्कयन्तोपि ' ' तर्करूपहेतुमन्तोपि ' इत्यादिरर्थोबोध्यः । किञ्च मुद्रितामुद्रितसर्वपुस्तकेष्वपि ' कुचगिरिवरयुग्मम् ' इत्येवपाठोदृश्यते ॥

चन्द्रिकाकारस्तु ' कुलपर्वतश्रेष्ठयुग्मत्वेनाध्यवसितं स्तनद्वंद्वमाधारं विना यदास्ते ' इति लिलेख । अत्र वाक्ये स्तनद्वंद्वस्य कुलपर्वतश्रेष्ठयुग्मत्वेनाध्यवसानकथनात् कुचशब्दसत्वे अध्यवसानासंभवात्, गिरिवरशब्दमात्रेण कुलपर्वतश्रेष्ठरूपार्थालाभाच्च, ' कुलगिरिवरयुग्म ' मिति कुचपदस्थाने कुलपदपाठएव चन्द्रिकाकारसम्मतः इत्युन्नीयते । तत्पाठांगीकारे बहून्यस्वरसबीजानि । तथाहि । पूर्वार्धे हेतन्वि लोकास्ते मध्यप्रदेशो नास्तीत्येव निश्चिन्वते इत्युक्ते तदुपरि

जिज्ञासैवं जायते, 'मध्यप्रदेशाभावे कुचावाधाराभावात्कथंतिष्ठतः?' इति। नतु पर्वतद्वयमाधाराभावात्कथं तिष्ठतीति। मध्यस्य पर्वताधारत्वाभावात्॥ यदिच उक्तपाठावलम्बने रूपकातिशयोक्त्या चमत्कारातिशयइष्यते तदा अवलग्नस्यापि गगनादिरूपेणाध्यवसानेन भाव्यम्। तच्चनास्ति॥

ननु 'कुचगिरिवरे' तिपाठेपि उपमितसमासाश्रयेण, मयूरव्यंसकादिसमाश्रयेणवा उपमया रूपकेणवा न चमत्कारः। किन्तु 'कुचयुग्मं यद्विनाधारमास्ते' इत्येतावतैवालम्, 'गिरिवरे' ति मास्तु इति चेन्न। कदाचित्केषाञ्चित्तृणतूलादीनां लघूनां वायुनोन्नीतानामनाधारतया स्थितिरपि दृष्टेति तथैव कुचयोरपिस्यात् इति शङ्कायां तद्व्यावृत्त्यर्थं गौरवकठिनतादिगुणस्फोरणाय गिरिपदम्। तत्रापि हिमवद्विन्ध्यादिवदतिदीर्घत्ववक्रत्वनिम्नोन्नतत्वादि परिहारेण वर्तुलत्व आमूलादुपर्युपरि क्रमतनुत्वैकशिखरवत्वादिप्रतिपत्त्यर्थं गिरौ-वरत्वविशेषणमिति तु तत्त्वम्॥

चन्द्रिकानुसारिपाठे 'कुलगिरिवर' इत्यत्र 'गिरिवर' शब्देनैव कुलगिरीणामुपस्थितौ कुलगिरिषु श्रेष्ठौ कौ? इति जिज्ञासायां नामनिर्देशाभावान्न्यूनता। तथासत्यपि कुचयोरतिविशङ्कटत्वलाभाज्जुगुप्सैव। अपिच कुलगिरिवरयुग्मस्याधारं विनास्थितौ स्रष्टुरेवेन्द्रजालत्वं युक्तम्। कुचयुग्मस्याधारंविना स्थितेरेव कविविवक्षितत्वान्मकरकेतोरिन्द्रजालत्वमुक्तं कविना॥

इत्थञ्च 'कुलगिरिवरे' ति चन्द्रिकापाठः कविहृदयाननुगामीसकलपुस्तकश्लोकपाठविरुद्धस्सहृदयहृदयारुन्तुदश्च॥

॥ इति अनुपलब्धिः॥



विषयः (१३०) सम्भवः (क)

अस्योदाहरणमिदं कुवलयानन्दे ।

‘ येनाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैषयत्नः ।
उत्पत्स्यते ममतु कोपि समानधर्मा
कालोह्ययं निरवधिर्विपुलाच पृथ्वी ’ ॥

इति ॥ अत्रोत्तरार्धे ‘ उत्पत्स्यते ममतु कोपि ’ इति पाठोऽस्मत्तालपत्रपुस्तकानुसारी । ‘ उत्पत्स्यतेऽस्ति मम कोपि ’ इति चन्द्रिकारसिकरञ्जन्योः पाठः । मालतीमाधवनाम्नि प्रकरणे भवभूतिना प्रस्तावनायां कविप्रशंसाप्रकरणे पद्यमिदं विरचितम् । अस्य चन्द्रिकायां ‘ मम कोपि समानधर्मा सदृशः य उत्पत्स्यते अस्तिवा तं प्रति यत्नः हि यस्मात् निरवधिरयं कालः, पृथ्वीच विपुला इति क्रमेण योज्यम् ’ इति व्याख्या ॥

अनयोः पाठयोः कस्मिन्किं स्वारस्यमस्वारस्यंवेति विचार्यते ॥ ‘ उत्पत्स्यतेऽस्तिमम ’ इति चन्द्रिकापाठे किञ्चिदस्वारस्यं वर्तते । तथाहि । ‘ मम समानधर्मा कोप्युत्पत्स्यते ’ इति यदा कविनोक्तं, तदा ‘ न कश्चिदपि ममेदानीं समानधर्मास्ति ’ इत्यर्थसिद्धएव । ततश्च ‘ अस्ति ’ इत्येतद्विरुद्धम् । ननु–‘ कालोह्ययं निरवधिः ’ इत्यनेन ‘ उत्पत्स्यते ’ इत्यस्यहेतुरुक्तः ‘ विपुलाच पृथ्वी ’ इत्यनेन ‘ अस्ति ’ इत्यस्य हेतुरुक्तः । तथाच ‘ उत्पत्स्यतेस्ति ’ इति पाठएव समीचीन इति चेत् । न–तथासति वाशब्दस्यावश्यं भाविनोऽभावादनुक्तवाच्यताख्यदोषापातात् । किञ्च–वर्तमानकालिकत्वात्प्रथम ‘ मस्ती ’ त्युक्त्वा-पश्चाद्भविष्यत्कालिकत्वा ‘ दुत्पत्स्यते ’ इति वक्तुमुचितम् । अतः ‘ उत्पत्स्यते ममतु कोपि ’ इति तालपत्रपुस्तकपाठएव कविविवक्षितः ।

अयमेवपाठो मालतीमाधवव्याख्यात्रा त्रिपुरारिणापि योजनाद्वयेप्याहतः । काव्यदर्पणकारेणाप्यमुमेव पाठमादृत्य व्याख्यातमिदं पद्यम् ॥

अत्र चैवं त्रिपुरारिव्याख्या । तत्रेयमाद्यायोजना 'येनामेत्यादि । अत्र प्रमुखे विनयप्रदर्शनम् कवित्वगर्वौद्धत्यप्रकटनञ्च नामेतिप्रसिद्धौ मदपेक्षयापिप्रसिद्धाः येकेचिन्महात्मानः नः अस्माकमवज्ञां प्रथयन्ति कियदेतदित्यवजानन्ति ते हि विवेकसलिलसंक्षालित संसारवासनापङ्ककलङ्के मनसि प्रत्यगात्मवस्त्वेव परिभावयन्तस्तृणमिव जगदशेषमवलोकयन्तः किमपि रहस्यमुपनिषदेकगम्यं वस्तु जानन्तीति युक्तैव तेषामस्मास्वविद्यापरतन्त्रेष्ववज्ञा । अतएव तानुद्दिश्य न मे प्रयत्नः । किन्तर्हि । अतीतानामनेन प्रयोजनाभावाद्वर्तमानानामप्युत्तमाधमानामत्राप्रवृत्तेस्सदृशस्यचैवं विधग्रन्थनिर्माणदक्षस्यै तदनुपादानाद्योमत्सदृशउत्पत्स्यतेतंप्रतीति । यत्तदोरनुपादानेपि सामर्थ्यात्तदुभयलाभः । तादृशस्योत्पत्तिस्संभाव्यतइत्याह । 'काल' इति निरवधिः अनन्तः विपुला विस्तीर्णा । अतः कस्मिंश्चिद्देशे कस्मिंश्चित्काले मत्सदृशोपि कश्चिदेतदुपादायी जनिष्यत इति संभाव्यत इत्यर्थः ' इति ॥

अस्यां योजनायामिमाः अनुपपत्तयः, ये किल ब्रह्मसाक्षात्कारान्निवृत्ताविद्याः अपगतभेदवासनाः जगदखिलं ब्रह्मात्मकं पश्यन्ति न तेषामन्यावज्ञा युज्यते । अन्यस्यैवाभावात् । सर्वस्य ब्रह्मत्वात् । तथाच श्रुतिः 'यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कश्शोक एकत्वमनुपश्यतः' इति । अतएव ते तिरस्कारमपि न कुर्वन्ति । अपिच । तादृशान्ब्रह्मज्ञान्प्रति शृङ्गारैकप्रधानस्य एतादृशप्रकरणस्य प्रणयनमप्यसंभावनीयमेव । अतएव 'तान्प्रतिनैषयत्नः' इत्युक्तिरपिविफलास्यात् । तदर्थप्रयत्नप्रसिद्धौ किल तन्निषेधो युक्तस्स्यात् । निषेधस्य प्रतियोगिप्रसिद्धिसापेक्षत्वात् ॥

किञ्च—उत्पत्स्यमानस्यैतत्कविसमानधर्मत्वं किं रूपमिति विचारे 'सदृशस्यचैवंविधग्रन्थनिर्माणदक्षस्य' इति व्याख्यानेन समानधर्मत्वं 'एतादृशग्रन्थनिर्माण दक्षत्वमेव' इति सिद्ध्यति । तथासति कविसमानकालिकस्य एवंविधग्रन्थनिर्माणदक्षस्यैतद्ग्रन्थानुपादानं यथा, तथोत्पत्स्यमानस्याप्येवंविधग्रन्थनिर्माणदक्षस्यैतद्ग्रन्थानुपादानं तुल्यमेवेति 'उत्पत्स्यमानं प्रति मम प्रयत्नः' इत्युक्तिरपि निरुपयोगैव स्यात् ॥

प्रथमयोजनायामेतादृशाः दोषास्संभाव्यन्ते । द्वितीययोजनाप्येवं कृता, अथवेत्यादिना, तत्रापि 'कंप्रति तर्हि ? अतीतैः प्रयोजनाभावाद्वर्तमानस्यच मत्सदृशस्याभावाद्यःकश्चिन्मादृशउत्पत्स्यते । तंप्रति । कथमिदानीमेतावति प्रपञ्चे प्यविद्यमानस्त्वादृशः इतः परमुत्पत्स्यतइति संभावनेत्यतआह । अनवधौ कालेप्यपरिच्छिन्ने देशे—यथा अहमेक एतावतः कालस्योत्पन्नस्तद्वदेव कोजानीते कदावा कुत्रवा तादृशः कश्चिदुत्पद्येतापीत्यर्थः' इत्युक्त्या 'ममतुकोपी' त्येव पाठो व्याख्यातः । नतु 'अस्तिमम' इति पाठः ॥

चन्द्रिकायान्तु 'समानधर्मा' इत्यस्य 'सदृशः' इत्येव विवरणात् सादृश्यं किं निबन्धनमिति जिज्ञासायां साधारणधर्मो नविशदीकृतः । अतो न्यूनता । त्रिपुरारिणातु 'एवं विधग्रन्थनिर्माणदक्षत्वमेव साधारणधर्मः' इत्युक्तम् । तत्र विरोधस्तु प्रदर्शितएव । किन्तर्हि साधर्म्यं कविनासहोत्पत्स्यमानस्येतिचेदत्रब्रूमः ॥

नहि लोके ऽन्यदीयग्रन्थपरिशीलनमव्युत्पन्नाविदधते । योग्यताविरहात् । व्युत्पन्ना अपि विद्वांसः तथैव । 'प्रायस्समानविद्याः परस्परयशःपुरोभागः' 'शत्रुकाव्यान्न रसनिष्पत्तिः' इत्यादि न्यायेन समानकालिकानां विदुषामन्यदीय काव्यावलोकनकुतूहलमेव प्रतिब-

भ्रातीर्ष्या । अवलोकनेपि दोषैकदृक्कया पदं न्यस्यते । उक्तञ्च भर्तृहरिणा ॥

'बोद्धारो मत्सरग्रस्ताः प्रभवस्स्मयदूषिताः ।
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम्' ॥

इति ॥ किमत्र बहुनोक्तेन, गीताचार्योऽपि जगाविमां गीताम् । 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्' इति ॥ अयन्तुन्यायः उत्पत्स्यमानेपि विदुषि समानः । तस्मादन्यदीयकाव्यपरिशीलने प्रयोजकम् नवैदुष्यमात्रं अव्युत्पन्नस्याभिमानमात्रंवा ॥

किन्तु विदितशब्दार्थतत्त्वस्याभिज्ञताभिधालक्षणाव्यञ्जनावृत्तेस्सकलशास्त्राभिज्ञस्यसहृदयतासुहृत्सुहृदयतापरम् । एतदेवोत्पत्स्यमानस्य समानधर्मत्वं कविनासह । एतेन भवभूतेरनितरसाधारणं वैदुष्यं कवित्वं सहृदयत्वं मात्सर्यरहितत्वरूपं सुहृदयत्वञ्च व्यञ्जितं भवतीति ॥



## विषयः (१३१) संभवः (ख)

अस्योदाहरणङ्कुवलयानन्दे,

भ्रातः पान्थ कुतोभवान् नगरतो वार्तानवाविद्यते
बाढं ब्रूहि युवा पयोदसमये त्यक्त्वा प्रियां जीवति ।
सत्यञ्जीवति जीवतीति कथिता वार्ता मयापि श्रुता
विस्तीर्णा पृथिवी जनोपि विविधः किंकिं न संभाव्यते' ॥

इति ॥ अत्र चन्द्रिकादोषविशदीकरणायेदं व्याख्यायते मया पद्यम् । नगरादागच्छन्तं कञ्चन नागरिकं प्रति नगरं प्रति गच्छतः पान्थस्य मध्येमार्गे प्रश्नः 'भ्रातः' इति । पान्थस्यैव नगरवृत्तान्तज्ञानावश्यं-

भावात्। यस्माद्यपुरुषादपरिचितात्स्वकार्यापेक्षा तस्यैव 'भ्रात रिति संबोध्यत्वानुभवाच्च। 'पान्थ' इति पान्थं प्रति नागरिककर्तृकं संबोधनम्। 'कुतोभवान्' इति नागरिकं प्रति पान्थस्य प्रश्नः। 'नगरतः' इति नागरिकोत्तरम्। 'वार्तानवाविद्यते' इति पान्थकर्तृकः प्रश्नः। 'बाढं' इति नागरिकोक्तिः। 'ब्रूहि' इति पान्थस्य। 'युवापयोदसमयेत्यक्त्वाप्रियांजीवति' इति नगरवार्तानुपूर्वी नागरिकेणोक्ता। अयं भावः 'अस्य नागरिकत्वाद्वर्षाकाले युवतीं भार्यां स्वग्रामे त्यक्त्वा द्रव्यार्जनाय प्रवासिनं पान्थं युवानं मूढमालोक्यापहसितुं नगरवार्तामेवं कल्पयित्वोवाच नागरिकस्तच्चित्तपरीक्षायै' इति॥ प्रियाविरहसन्तप्तहृदयस्स्वजीवितसन्देहवान्स्वजीविताशया पृच्छति पान्थः, 'सत्यंजीवति? इति। नागरिकस्तु आत्मनः कान्ताविरहाभावेन विरहिणः पान्थस्योद्वेगं जनयितुं पुनराह 'जीवतीति कथिता वार्ता मयापि श्रुता' इति। 'विस्तीर्णे' त्यादिचतुर्थपादः पान्थवचनम्। अयंभावः। 'भो नागरिक! त्वन्तु विरहक्लेशानभिज्ञो यस्यकस्यापि वार्तां श्रुत्वा ब्रवीषि। अहन्तु विरहक्लेशं सम्यगनुभूय ब्रवीमि। युवा पयोदसमये त्यक्त्वा प्रियां न जीवत्येव। त्वच्छ्रुता वार्ता त्वसंभावनीयैव' इति?

चन्द्रिकाकारस्त्वेवं व्याचख्यौ। "'भ्रात' रिति पथिकं प्रति ग्रामस्थस्य प्रश्नः। कुतइत्यनन्तरमागतइति शेषः। 'नगरा' दित्युत्तरम्। 'वार्ते' ति पुनः पूर्वस्य प्रश्नः। 'बाढ' मित्युत्तरम्। अङ्गीकारे अस्तीत्यर्थः। 'ब्रूहि' इति पूर्वस्योक्तिः। 'युवे' त्यादिपान्थवचनम्। 'सत्यंजीवति' इति पूर्वस्य प्रश्नः। 'जीवती' त्यादिसर्वं पान्थवचनम्' इति॥

अनया व्याख्यया वाक्यार्थ एवं निष्पद्यते, नगरादागतं कञ्चन पान्थं ग्रामस्थः कश्चन पप्रच्छ 'त्वंकुतआगतोऽसी' ति। 'नगरादाग-

तोसी ' तिपान्थोऽब्रवीत् । ग्रामस्थः पुनः पप्रच्छ 'नगरे याकाचन वार्ता विद्यतेनवे ' ति । पान्थोऽब्रवीद्बाढमिति । अस्तीत्यर्थः । ग्रामस्थः प्राह 'तर्हिब्रूहि ' इति । पान्थः प्राह 'युवा पयोदसमये त्यक्त्वा प्रियां-जीवति ' इति । ग्रामस्थः पप्रच्छ 'सत्यंजीवति ' इति काक्वा प्रश्नः । पान्थोब्रूते 'जीवतीति कथिता वार्ता मयापि श्रुता । विस्तीर्णा पृथिवी जनोपि विविधः किंकिं न संभाव्यते ' इति ॥

अत्र विचारयामः । ग्रामस्थः प्रष्टेत्युक्तं चन्द्रिकाकृता । तदयुक्तम् । तथाहि । 'ग्राम ' पदेनाल्पसंख्याकारसिकाचतुरपशुप्रायकृषीवलजनवासयोग्यः प्रदेशविशेष उच्यते । 'स्थः ' इत्यनेन तत्रत्यस्तादृशएव जनो बोध्यते । अत्र परश्शतं प्रमाणानिसन्ति, 'ग्रामेस्मिन्प्रस्तरप्राये ' 'ग्राम्यजनो मृष्टमश्नाति ' 'भ्रूविकारानभिज्ञैः ' 'पांसुलपादो हालिकोपि जानाति ' 'इह महिषः कोऽयमुभयतःपुच्छः ' इत्यादीनि ॥

'पान्थ ' शब्देन अर्थार्जनतीर्थयात्राद्युद्देशेन स्वदेशगृहजनादिकं विहायान्यदेशे तत्रतत्र सञ्चरन्नुच्यते । सएव विदग्धजन इत्युच्यते । अत्रापि प्रमाणानि बहूनि सन्ति । 'तथा मन्ये लङ्घः पथिकतरुषण्डे स्मरद्रवः ' 'ग्रामेस्मिन्प्रस्तरप्राये न किञ्चित्पान्थ विद्यते । पयोधरोन्नतिं दृष्ट्वा वस्तुमिच्छसि चेद्वस ' 'गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति ' इत्यादीनि ॥

'नगर ' शब्देन परेङ्गिताद्यभिज्ञ रसिक विदग्धनापणचतुर धनिक भोगि बहुजनवासयोग्यः प्रदेशविशेष उच्यते । तस्मादागतस्य तादृशत्वमेवोचितम् । अत्रापि बहूनि प्रमाणानि सन्ति 'नगरस्त्रीकलालापमधु श्रोत्रेण पास्यति । मथुरां प्राप्य गोविन्दः कथं गोकुलमेष्यति ' ॥ 'नागरिक समधिकोन्नतिः ' 'नागरिकनृपा संज्ञापयैनाम् ' इत्यादीनि ॥

एवंस्थिते, पद्ये 'पान्थ' पदम् 'नगर' पदं च दृश्यते। ग्रामपदं 'ग्रामस्थ' पदं वा नैव दृश्यते। तस्माद्ग्रामस्थः प्रष्टेत्यनुचितमेव। नगरादागतस्य पान्थत्वमपि तदुक्तमयुक्तम्। उक्तप्रमाणैस्तयोरुभयोर्विलक्षणधर्मसत्त्वावगमात्। ग्रामस्थस्य प्रष्टृत्वकल्पनेपि तस्य नगरवार्ताप्रश्नो नोपपद्यते, तस्य ग्रामीणत्वेन पामरत्वात्कृषि गोरक्षणादिमात्रनिरतस्य तन्मात्रत्तस्यावकाशाभावात्प्रयोजनाभावाच्च। नगराद्ग्राममागतस्य पान्थत्वंच्च न संभवति। नगराद्ग्रामागमनं क्षेत्रव्यवहारादिदर्शनायैव। तत्र तच्च द्वित्रिदिवसावस्थानेनैव निष्पद्यते। तावन्मात्रेण तस्य नागरिकस्य पान्थत्वं न युक्तियुक्तम्। यद्यपि नगरादागतं प्रत्यपि ग्रामस्थस्य प्रश्नः स्वग्राम स्वव्यवहाराद्यनुकूलविषयश्चेदुपपन्नतरएव॥

तथापि 'युवा पयोदसमये त्यक्त्वा प्रियां जीवति' इति नगरवार्ताकथनस्य न कापि सङ्गतिः, उभयोरपि कान्ताविरहविरहात्। नगरादागतस्य कान्ताविरहसत्तांगीकारेपि यावत्पयोदसमयं ग्रामे वासः कल्पनीयः। तत्कल्पनेपि नागरिकेण ग्राम्यजनाय स्वदुरवस्थानिवेदनकथनं कथयितुरत्यन्तग्राम्यतामेव कथयति॥ यावत्पयोदसमयँ ग्रामवासः कल्पयितुमनर्हः, 'कुतोभवानि' ति प्रथमदर्शनएव प्रश्नप्रवृत्तेः। तदानीमेव स्वदुरवस्थानिवेदने नागरिकस्य नागरिकत्वमतिहास्यास्पदं भवेत्। एवं विधव्याख्याकर्तुरपि तत्तथैव॥

किञ्च—कदापि कान्ताविरहानभिज्ञस्य ग्रामस्थस्य 'सत्यं जीवति' इति प्रश्नएवानुपपन्नः। सच प्रश्नः तस्य 'युवा पयोदसमये त्यक्त्वा प्रियां नजीवति' इति निर्णयमाक्षिपति। सचनिर्णयः पान्थस्यैव ग्रामस्थस्य नानुभवसिद्धः। अपिच—'जीवतीति कथिता वार्ता मयापि श्रुता' 'विस्तीर्णा पृथिवी जनोपि विविधः किंकिं न संभाव्यते' इति वाक्यद्वयमपि कथमेकस्यैव पान्थस्य वचनं भवेत्। विरोधात्।

तत्र प्रथमवाक्येन ' मया वार्तापरं श्रुता, जीवतिवा नवा नाहं जाने ' इत्यभिप्रायो ज्ञायते । ' भुवो विस्तीर्णत्वेन जनानां बहुविधत्वेन सर्वं संभाव्यते ' इत्यर्थकेन द्वितीयवाक्येनतु ' युवा पयोदसमये त्यक्त्वा प्रियां जीवति ' इत्ययमर्थः असंभाव्यएव । इत्यभिप्रायो ज्ञायते ॥

तथाच संशयनिर्णयबोधकयोर्वाक्ययोरेकवक्तृकत्वं कोवा प्रतीयात् । एवमसंबद्धानेकार्थकत्वादेव तद्व्याख्यया नकोपि चमत्कार्यर्थविशेषो गृह्यते पिण्डतः पण्डितेनापि । अस्मदुक्तव्याख्यानेतु बहु स्वारस्यम् । पद्यशैल्यप्युत्तरप्रत्युत्तररूपा सरसा । यथा अमरुके ।

' बाले! नाथ! विमुञ्च मानिनिरुषं, रोषान्मया किं कृतम्
खेदोस्मासु, नमेऽपराध्यतिभवान्सर्वेऽपराधामयि ।
तत्किं रोदिषि गद्गदेन वचसा? कस्याग्रतो रुद्यते? नन्वेतन्मम
का तवास्मि? दयिता नास्मीत्यतो रुद्यते ॥

इति । प्रकृतपद्येपि तथैव । ' भ्रातः! पान्थ! कुतोभवान्, नगरतः, वार्तानवाविद्यते? बाढम्, ब्रूहि, युवापयोदसमयेत्यक्त्वा प्रियाञ्जीवति । सत्यंजीवति? जीवतीतिकथितावार्तामयापिश्रुता, विस्तीर्णापृथिवीजनोपिविविधः किंकिं नसंभाव्यते । इति ॥

॥ इति सम्भवः ॥



विषयः (१३२) समप्राधान्यसङ्करः

अस्योदाहरणमिदम् ।

' अङ्गुलीभिरिव केशसञ्चयं संनिगृह्य तिमिरं मरीचिभिः ।
कुट्मलीकृतसरोजलोचनं चुंबतीव रजनीमुखं शशी ' ॥

इति ॥ अत्र अङ्गुलीभिरिवेत्युपमा । तन्निष्पादिता चुंबतीवेत्यत्रोत्प्रेक्षा । निशायां नायिकात्वं शशिनो नायकत्वं तेन तस्या मुखचुम्बनरूपोऽ-

प्रस्तुतवृत्तान्तश्च प्रतीयत इति समासोक्तिश्च । उत्प्रेक्षासमासोक्त्योस्समं प्राधान्यमिति समप्राधान्यसङ्करत्वम् ॥

अत्र पद्ये चन्द्रोदयवर्णनकप्रकरणान्मरीचितिमिरसरोजानां प्रकृतत्वम् । एतदुपमानभूतानां क्रमिकाणामङ्गुलि केशसञ्चयलोचनानामप्रकृतत्वम् । उभयकोटिगतानां त्रयाणामपि साधारणधर्माः क्रमेण तनुदीर्घारुणत्व नीलनीरन्ध्रत्व कान्तिमत्त्वानि । तत्र मरीचीनामङ्गुलीनाञ्च साधारणधर्माः तनुत्वं दीर्घत्वं अरुणत्वञ्च । तिमिराणां केशसञ्चयानाञ्च नीलत्वं नीरंध्रत्वञ्च । सरोजलोचनयोश्च कान्तिमत्त्वम् । इति निर्देशक्रमानुरोधेनैव साधारणधर्माणामत्यन्तसौष्ठवं सिद्धमेव ॥

एवं सत्यपि चन्द्रिकाकारः 'तनुदीर्घारुणत्वे' त्यत्र 'अरुण' पदस्थाने 'आवरण' पदं निवेश्य धर्माणां साधारणत्वञ्च विरुद्धं परिकल्प्य स्वरससिद्धं क्रमञ्च भङ्क्त्वा व्याचख्यावेवम् । 'यद्वेति । तनुदीर्घेत्यादौ पूर्वनिपातनियमानुरोधेन यथा संख्यक्रमपरित्यागः । तथाच अङ्गुलिमरीच्योस्तनुत्वनीरन्ध्रत्वाभ्यां तिमिरकेशसञ्चययोरावरणरूपत्वनीलत्वाभ्याम् सरोजलोचनयोर्दीर्घत्वकान्तिमत्वाभ्याञ्च सादृश्यंबोध्यम्' इति ॥

अत्रास्मदुक्तरीत्या यथासंख्यक्रमपरित्यागएव नास्ति । असतस्तस्याभ्युपगमेपि पूर्वनिपातनियमानुरोधोपि नास्ति । पूर्वनिपातनियामकमभ्यर्हितत्वमल्पाच्तरत्वं वा । साधारणधर्मेषु सर्वेषां साधारणत्वादभ्यर्हितत्वं नसंभवतीत्यल्पाच् तरत्वं वाच्यम् । तदपि त्वदुक्तानुपूर्व्यां नास्ति । तत्सत्वेचैवमानुपूर्व्या भाव्यम् 'तनुकान्तिनीलदीर्घनीरन्ध्रावरणत्वादिना' इति ॥

यत्तु—'अङ्गुलिमरीच्योस्तनुत्वनीरन्ध्रत्वाभ्यां सादृश्यं बोध्य' मित्युक्तम् । तन्न । अङ्गुलिरीमच्योस्तनुत्वसत्वेपि नीरन्ध्रत्वं नास्ति । मरीचीनां विशरारुतया सर्वत्र प्रसृमरत्वात् । केशसंयमनकाले अङ्गु-

लीनां नीरन्ध्रकरणे कुण्ठिहस्तवद्वैरूप्यापत्तेश्च । किन्तु विरलानामङ्गु-लीनां केशसंयमनकार्यकरणत्वानुभवाच्च । तथा तिमिरकेशसञ्चययो-र्नीलत्वसत्वेप्यावरणरूपत्वं नास्ति । आवरणस्य धर्मरूपत्वाद्धर्मस्य धर्मिरूपत्वासंभवात् । आवरणशब्दस्य कर्तरि ल्युप्रत्ययान्तत्वेन धर्मि-परत्वाङ्गीकारेतु कथमपि साधर्म्यसम्भवः ॥

सरोजलोचनयोस्तु दीर्घत्वकान्तिमत्वाभ्यां सादृश्यं न सम्भ-वति । कान्तिमत्वस्य सरोजलोचनयोस्सत्वेपि दीर्घत्वस्योभयनिष्ठत्वा-भावात् । दीर्घत्वन्तु लोचननिष्ठमपि सरोजनिष्ठं न भवति सरोजस्य दीर्घत्वाभावात् । यद्यपि सरोजदलस्य दीर्घत्वम् नतु सरोजस्य ॥ एवं पूर्वनिपातनियमोपि भग्नः । यथासंख्यक्रमश्च परित्यक्तः । अविद्य-मानस्यापि धर्मस्य साधारणत्वमुक्तम् । केयमनर्थपरंपरा ? ॥

' तनुदीर्घावरणत्व ' इति पाठः प्राचीनास्मत्तालपत्रपुस्तके रसि-करञ्जनीसहित कुवलयानन्द पुस्तकेच स्पष्टमेव दृश्यते । चन्द्रिकाका-रस्तु केनचिद्व्युत्पन्नशिखामणिलिखितेन कुवलयानन्दपुस्तकेन विप्र-लब्ध इत्यत्यन्तशोचनीयमेतत् । यच्च—अङ्गुलिमरीच्यो स्तिमिरकेशस-ञ्चययोस्सरोजलोचनयोश्च प्रत्येकं धर्मद्वयनियमनेन महतः क्लेशस्या-भ्युपगमः सतु महात्पलिखितामस्य व्यनक्ति । कथमितिचेत् ? अङ्गुलि-म..च्युभयगतसाधारणधर्माणां त्रयाणां द्वन्द्वसमासेन संग्रहं कृत्वा तदुपरि भावार्थकमेकं त्वप्रत्ययं, तिमिरकेशसञ्चययोस्साधारणं धर्म-द्वयं द्वन्द्वेन संगृह्य तदुपरि भावार्थकमेकं त्वप्रत्ययम्, सरोजलोचन-योस्साधारणमेकमेव धर्मं निर्दिश्य तदुपरि भावार्थकं त्वप्रत्ययमेकञ्च निवेशयता कुवलयानन्दकृता आगामि व्याख्यातृजनक्लेशस्सर्वोपि स्वेनै-वपरिहृतः । एवंस्थितेपि चन्द्रिकाकारः अव्युत्पन्नलिखितं तत्पुस्तकमु-त्तेजयामासेनमितिच ॥

॥ इति समप्राधान्यसङ्करः ॥

विषयः (१३३) सन्देहसङ्करः

सन्देहसङ्करोदाहरणस्य,

'शशिनमुपगतेयं कौमुदी मेघमुक्तं
　　जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा ।
इति समगुणयोगप्रीतयस्तत्रपौराः
　　श्रवणकटु नृपाणामेकवाक्यं विवव्रुः' ॥

इति पद्यस्य व्याख्यायां चन्द्रिकायाम् 'शशिनमिति तत्र अजस्येन्दुमत्यास्वयंवरे समगुणयोः अजेन्दुमत्योः योगेन प्रीतिर्येषान्ते पौराः नागरिकाः नृपाणाम् अन्येषां श्रवणयोः कटु पीडाकरम् इति पूर्वार्धरूपम् एकमेववाक्यं विवव्रुः उच्चारयामासुः इत्यन्वयः । इति ॥ 'तत्र–तस्मिन्पक्षे' इति च वर्तते ॥

अत्र पद्यस्थस्य 'इति' शब्दस्य 'पूर्वार्धरूपम्' इति, 'एकवाक्यम्' इत्यस्य 'एकमेववाक्यम्' इति, 'विवव्रुः' इत्यस्य 'उच्चारयामासुः' इति 'तत्र प्रस्तुतेधर्मिणि' इत्यादिवाक्यघटकस्य 'तत्र' इति पदस्य 'तस्मिन्पक्षे' इति च विवरणमत्यन्तमसमञ्जसम् । तथाहि । पौरास्सर्वे यद्येकमेव वाक्यमुच्चारयामासुः तर्हि किन्ते सर्वे परचित्तज्ञायोगिनः? उतस्वयं वरापूर्वमेव 'इन्दुमत्यजमेव वरिष्यति । तदाअस्माभिस्सर्वैरपि इदमेकमेव वाक्यं वक्तव्यम् नद्वितीयम्' इति कृतसङ्केताः? उभयमप्यसम्भावितमेव । हासास्पदञ्च ॥

किञ्च–किं तदेकंवाक्यं? यत्पौराऊचुः इति जिज्ञासायाम् 'पूर्वार्धरूपम्' इत्युक्त्या पूर्वार्धानुपूर्व्याएव निर्देशादयमर्थस्सिद्ध्यति ? 'अजेन्दुमतीस्वयंवरसभायां कालिदासोपि पौरैस्सह मिलितस्स्थितस्तदैव 'शशिनमुपगतेय' मित्यादिपूर्वार्धं विरचय्य पौरान्पाठयित्वा तैर्वाचयामासेति । सोऽयमर्थ उन्मत्तेनापि नप्रतिपाद्यत इति पांसुलपादो हालिकोपि किं नजानाति? अपिच––'विवव्रुः' इत्यस्य

'उच्चारयामासुः' इत्यर्थवर्णनमनुचितम्। 'वृञ्वरणे' इति वरणार्थकवृञ्धातोर्विपूर्वकस्य विवरणार्थकत्वात्। विवरणं नाम स्वसमानार्थकपदान्तरेणार्थकथनम्। उच्चारणन्तु कण्ठताल्वाद्यभिघातरूपव्यापारमात्रम्। उभयोरप्यर्थज्ञानजनकत्वतदभावाभ्यामत्यन्तवैलक्षण्यात्॥

तर्हि कथमत्र वाक्यार्थनिर्णय इति चेदित्थम्। 'इति एवं रूपत्वात् नृपाणां श्रवणकटु एकवाक्यम् समानार्थकवाक्यम्। जात्येकवचनम् वाक्यानीत्यर्थः। विवव्रुः विशदीचक्रुः इत्यर्थः। अयमभिसन्धिः अनुरूपवधूवरसमागमस्य येये दृष्टान्ततया प्रसिद्धास्तानेकार्थकान् भिन्नभिन्नवाक्यैः कथयामासुः पौरा इति॥ एतत्सर्वं मल्लिनाथसूरिणा सूचितम् 'इति एवम् नृपाणां श्रवणकटु एकं अविसंवादिवाक्यम् विवव्रुः स्फुटमूचुः' इति। अत्राविसंवादित्वं वाक्यस्य समानार्थकत्वमेव। संवादः समित्येकीकारे एकरूपोवादः। 'वि' इत्युपसर्गस्य विरुद्धार्थकत्वाद्भिन्नभिन्नार्थकवाक्यानि विसंवादाः। अविसंवादस्तु तद्विरुद्धएकरूपोवादएव एकरूपत्वंचैकार्थकत्वमिति फलितम्। अन्यच्च। 'उच्चारयामासु' रित्यस्यानन्तरं 'इत्यन्वयः' इति लेखनमनुपपन्नम्। तत्रेत्यादिना उच्चारयामासुरित्यन्तेन ग्रन्थेनानेकेषां पदानामर्थवर्णनात्पद्यस्थपदमात्रयोजनाया अकृतत्वाच्च॥ किन्तु 'इत्यर्थः' इति भाव्यम्॥

अपरञ्च–उत्तरत्र वाक्ये 'तत्र' इत्यस्य 'तस्मिन्पक्षे' इति विवरणञ्चास्वरसम्। प्राचीनास्मत्तालपत्रकोशे रसिकरञ्जनीपुस्तकेपि 'तत्र' इत्यस्य स्थाने 'तदा' इत्येव वर्तते। तदेवयुक्तम्। 'यदि' इति पदेनैव वाक्यारम्भात्। अस्माद्वाक्यात्पूर्ववाक्येपि 'यद्यजं वृतवतीन्दुमती विशिष्टरूपेण निर्दिश्यते, तदा बिम्बप्रतिबिम्बभावापन्ने' त्यादौ 'यदि' 'तदा' पदसमभिव्याहारो दृश्यते। तस्मा दशुद्धपुस्तकपाठावलम्बनेन तत्रेत्यभ्युपगम्य 'तस्मिन्पक्षे' इति व्याख्याने

महाक्लेश इत्यसत्कृतव्याख्यैव साधीयसी मल्लिनाथानुरोधिनीति सहृदयाविभावयन्तु ॥



## १३ पुटे १६ पंक्तौ योजनीयमिदम्

### (उपमेयोपमाशेषः)

'गिरिरिवगजराजोऽय' मितिपद्यस्य केवलप्रकृतविषयत्वे अयमपरोहेतुः। चतुर्णामपि इवपदानां केनकेन पदेन सह योगोवर्तत इति चिन्तिते अस्येति पदं निर्झरसम्बन्धिनं गिरिराजमेव बोधयति। नतु मदधारासम्बन्धिनं गजराजमिति ॥



## ४२ पुटान्ते पठनीयम्

### (उत्प्रेक्षाशेषः)

न्यायभास्कर वेदान्तवादावल्याद्यनेकग्रन्थप्रणेतृभिः यदुगिरिनित्यवासरसिकैः शेषार्यवंशजलधिकौस्तुभैरनन्तार्यैः 'कृष्णराजकलोदयो' नामकश्चिदलङ्कारग्रन्थः प्रणीतः। तत्रालङ्कारास्सर्वेकुवलयानन्दोक्तमुपमानन्वयादिक्रममनुसरन्ति। लक्षणकारिकास्स्वविरचिता एव। प्रत्यलङ्कारं लक्षणवाक्यं परिष्कृत्य सदलप्रयोजनं विचारितम्। उदाहरणानितु 'मुम्मडि कृष्णराजवोडेयर्' नामानं महीशूरदेशाधिपं लक्षीकुर्वन्ति। विषादनालङ्कारपर्यन्तएव ग्रन्थउपलभ्यते। तत्रोत्प्रेक्षालक्षणकारिकेयम्

'अन्यधर्मनिमित्तेना न्याभेदो यत्रवर्ण्यते।
उत्प्रेक्षालंकृतिस्तत्रकथ्यते काव्यवेदिभिः ॥'

इति। अतएवात्रलक्षणवाक्ये अन्यपदंविहाय यत्रेतिपदंनिविष्टम्। अत्रायंविशेषः। यथाश्रुतमूलोक्तलक्षणस्य रूपकेऽतिव्याप्तिः। तत्रापि

आह्लादकत्वादि धर्मनिमित्तेन 'मुखंचन्द्रः' इत्यादौ मुखेचन्द्राभेदवर्णनात्। अवश्यनिवेशनीयस्य संभावनापदस्य अनिवेशाच्च। निवेश्यतेहिसर्वत्र संभावनापदम्। 'संभावनास्यादुत्प्रेक्षा' इति कुवलयानन्देदीक्षितेन। 'उत्प्रेक्षोन्नीयत्रहेत्वादिः' इति चन्द्रालोकेजयदेवेन 'संभावनमथोत्प्रेक्षा' इति काव्यप्रकाशेमम्मटेन। नच—वर्ण्यते इत्यनेनैव संभावनालाभः। 'प्रस्तुते वर्ण्यवाक्यार्थप्रतिबिंबस्यवर्णनम्' इति ललितालङ्कारलक्षणेपि वर्णनशब्देन संभावनारूपार्थलाभापत्तेः। तत्रहिवर्णनं शब्दशक्त्या प्रतिपादनम्। तथात्रापीति ॥



## ९२ पुटे ९ पंक्तौ योजनीयमिदम्

### (व्यतिरेकशेषः)

मर्मप्रकाशे 'रक्तस्त्व' मित्यादिपद्यव्याख्याने एवमानुपूर्वीदृश्यते। 'कान्तापादेति। कामिनीपादाघातेन अशोकस्य पुष्पोद्गम इति प्रसिद्धिः। नायकेतु पद्माख्यबन्धाभिप्रायेण। तदुक्तम् ॥

'धृतैकपादाजघने कुर्वत्यन्यपदाहतिम्।
शनैश्शनैर्निधुवने पद्मबन्धस्तदामतः' ॥ इति ॥'

इति ॥ अत्र नायकस्य पद्मबन्धेकान्तापदाहत्यामोदोवा?, निधुवनेन मोदोवा?, इति विचारे निधुवनस्यैव विस्तारितान्य सकलसुखदुःखतया विलक्षणसुखैकहेतुत्वमाक्षतुरुंखपिगीलिकननुभूयत इति, तथैव कविभिर्वर्ण्यत इति च पुनरुक्तकल्पम्। एवं स्थिते निधुवनसमये यदि पादप्रहारेणैव नायकेन सुखमनुभूयेत, तर्हि निधुवनस्वरूपमेव हीयेत। नायकोपि नागेश इव परमरसिको भवेच्च। तस्मादनुपपन्नमिदं व्याख्यानम् ॥

तर्हि कथमितिचेत्? इत्थम्। सकलरसाभ्यर्हितशृङ्गारैकप्रधाने अमरुककाव्ये चरममिदं पद्यम्॥

'सालक्तकेन नवपल्लवकोमलेन
पादेन नूपुरवतामदनालसेन।
यस्ताड्यते दयितया प्रणयप्रकोपा
त्सोऽङ्गीकृतो भगवता मकरध्वजेन'॥

इति॥ अन्यत्रापि 'पादप्रहारः परमं हि भाग्यम्' इति च॥ तस्मात् प्रणयकुपित कामिनीपादप्रहारान्नान्यदस्तिकामुकस्य परमभोग्यमिति 'तद्वन्ममापि' इत्युक्तमिति भावः। नतु नागेशोक्तरीत्या॥



पुटं १४५ पंक्तिः १५ अत्र पठनीयम् (समालङ्कारश्लेषः)

अत्र प्रतिविधीयते। 'गतिबुद्धि' इत्यादिसूत्रम् 'अकथितञ्च' इति सूत्रञ्च कर्मसंज्ञाविधायकम्। अनयोराद्यस्य प्रवृत्तौ णिजन्तधातुसमभिव्याहारो निमित्तम्। द्वितीयस्य अधिकरणादिरूपेण अकथनं निमित्तम्। इति स्थितम्। 'उच्चाटनं मां लम्भयसे' इत्यत्र णिजन्तधातुसमभिव्याहार रूपनिमित्तसत्वात् गत्यादिसूत्रस्यैव प्रवृत्तिर्वाच्या। सातु न सम्भवति। लभधातोर्गत्याद्यर्थकत्वाभावात्। अत एव नागेशेनापि 'अकथितञ्च' इति सूत्रेणैवकर्मसंज्ञोक्ता। सापि न सम्भवति। णिजन्तलभधातोः वहधातुसमानार्थकत्वाभावात्। तथाहि। 'भृत्यो भारमापणं वहति' इत्यत्र वहधात्वर्थः भारादिद्रव्यप्रतियोगिकः आपणादिदेशानुयोगिकश्च यस्संयोगः तदनुकूलव्यापारानुकूल व्यापारः। णिजन्तलभधात्वर्थस्तु 'उच्चाटनंलंभयसे.' 'विद्यां लंभयसे' 'कीर्तिं लंभयसे' इत्यादौयथायोगंक्रियाज्ञानशब्दादिप्रतियोगिकः चेतनानुयोगिकश्च यः तत्तत्संबन्धविशेषः तदनुकूलव्यापारप्रयोजकत्वमिति

महान्भेदः। इत्थञ्च 'अकथित' सूत्रस्याप्यप्रवृत्त्या जगन्नाथोक्तरीत्या 'उच्चाटनंमयालंभयसे' इत्येवसाधु। नतु मां-इति ॥



विषयः (१३४)

कुवलयानन्दग्रन्थान्ते श्लोकोयं दृश्यते

चन्द्रालोकोविजयतां शरदागमसंभवः।
हृद्यः कुवलयानन्दो यत्प्रसादादभूदयम् ॥

इति। अत्र चन्द्रिका 'शरदागमसंज्ञकः चन्द्रालोकमूलभूतोग्रन्थः' इति। एतत्तु अविज्ञानात्। शरदागमः चन्द्रालोकस्य काचन व्याख्या। तदुक्तं चन्द्रालोकव्याख्याता पायगुण्डोपाह्व वैद्यनाथेन बालंभट्टापरनाम्ना नागेशशिष्येण स्वकृत रमाख्यायां व्याख्यायाम्। 'यत्तु शरदागमकृत् 'यत्ररूप्यरूपकयोः व्यवधानेनाभिधानं सपरिणामः। अस्तिचलक्ष्ये। तत्रहि मौनोत्तरमित्यत्रैव नाभेदधीः। किन्तु मध्ये एवशब्देन व्यवधानात् रूप्यरूपकयोः वाक्यमहिम्नाविलम्बेनेति तत्पर्यवसानमितिभावः' इति। तन्न। दृगब्जे ति समासे अव्याप्त्यापत्तेः। इतिदिक्' इति। एतद्व्याख्यायाः मूलभूतः चन्द्रालोकगतः परिणामालङ्कारलक्ष्यलक्षणश्लोकोयम् ॥

परिणामोऽनयोर्यस्मिन्नभेदः पर्यवस्यति।
कान्तेन पृष्टा रहसि मौनमेवोत्तरं ददौ ॥ इति ॥

एवंस्थिते चन्द्रिकाकारः 'संभवः कारणम् शरदागमः संभवोयस्य' इति व्युत्पत्तिं मनसिनिधाय यथा कुवलयानन्दस्य चन्द्रालोकोमूलम् तथा चन्द्रालोकस्यापि मूलं शरदागमाख्यग्रन्थः इति व्याचख्यौ। वस्तुतस्तु उक्तप्रमाणानुसारेण शरदागमस्य चन्द्रालोकव्याख्यारूपत्वात् 'शरदागमसंभवः' इत्यस्य एवंविग्रहोवक्तव्यः। 'संभवत्यस्मादिति संभवः। कारणमित्यर्थः। शरदागमस्यसंभवः। शरदागमाभिधग्रन्थमूलभूतः चन्द्रालोकः' इति ॥

॥ इति शुभम् ॥



लेखोलेखं हन्ति नो लेखकं तत् क्षन्तुं मन्तुं याचनानोचितैव ।
युक्तायुक्ते किन्तुवक्तुं सुधीरान् याचे वाचा दुर्गतोऽर्थं यथेशान् ॥

सिह्मव्याघ्रतरक्षुभल्लुककिटिप्राये महाभीषणे
दुर्गेऽस्मिन्नसिमात्रपाणिरचरं निर्भीकएकोऽनिशम् ।
प्रासादेऽद्य गवाक्षजालविसरन्मन्दानिलासेवितः
कान्ताधीनतनुर्नवेद्मिकिमपि प्रायो बहिश्चान्तरम् ॥ २ ॥

साहसेऽस्मिन्महाकार्ये स्खलितानि बहून्यपि ।
सम्भावितानि क्षाम्यन्तु प्रार्थये पण्डितानिदम् ॥ ३ ॥

नीरक्षीरविभागेन क्षीरग्रहणचातुरी ।
यथाहि श्वेतगरुतां नान्येषां क्षीरपायिनाम् ॥ ४ ॥

निरालम्बेऽम्बरे वर्षबिन्दून्गृह्णाति चातकः ।
यथा तथा नशक्ताहि पृथ्वीपानीयपायिनः ॥ ५ ॥

निराकारामपि ज्योत्स्नां पातुं शक्तो यथा खगः ।
एकएव चकोराख्यो नान्ये निशि शयालवः ॥ ६ ॥

एवं काव्यामृतास्वाद परिपक्वधियस्तुये ।
सुधियस्तेतु जानन्ति प्रबन्धस्यास्य रस्यताम् ॥ ७ ॥

जयग्रामभूपचन्द्रे गिरिमुदयं सिह्मपीठमारुह्य ।
निजकीर्तिकौमुदीभिः पुष्यति जनतौषधीःप्रीत्या ॥ ८ ॥

सृष्टः कुवलयानन्दचन्द्रिकापारणाकृती ।
चकोरोऽयं विहरतात् विद्वन्मानसमानसे ॥ ९ ॥

त्रयीवेदनिधीन्द्वङ्कैः संमिते ह्यौणवत्सरे ।
मुद्रापितोऽयं जयता दाचन्द्रोडुदिवाकरम् ॥ १० ॥

वेदपादस्तवं वृत्तमुक्तासारावलीमपि ।
षड्श्रीश्वरतत्पत्न्योर्विषये यस्स्तुती व्यधात् ॥ ११ ॥
उपासिता हयास्यस्य प्रशान्तात्मा सदाप्रियः ।
वाधूलान्वि कुलाब्धीन्दुर्दिशागरार्याभिधोऽभवत् ॥ १२ ॥
तस्यशिष्येण यदुगेन वेङ्कटार्येण निर्मिता ।
इयंकृतिर्भगवतःप्रीत्यै भवतुचार्पिता ॥ १३ ॥
त्वय्यर्पितं मदशनादि निहीनकर्मा
    प्यन्तर्मुदं तव तनोति यदि त्वदुक्त्या ।
हे पार्थसूत मम काव्यमिदं कथं तां
    पादार्पितं नतनुनां वद दीनबन्धो ॥ १४ ॥

इति श्री यदुगिरि वाधूलमहार्यपौत्र श्रीनारायण गुरुचरणाम्बुज षट्चरणस्य, ऐरुवत्तिरुवट् स्थानिकं पण्डितरत्नं कुप्पण्णास्वामिनां प्रसादादधिगत सकलज्ञानस्य, साहित्यालङ्कार सांख्य-योग विशिष्टाद्वैत वेदान्त द्राविड वेदान्तविदुषः कलकत्ता राजधानीसमासादित सांख्यतीर्थोपाख्यस्य, श्रीयदुगिरि संस्कृतमहापाठशालाध्यापकस्य श्रीमन्महीशूर संस्थानाधिपति श्रीजयचामराजेन्द्र भूपास्थानीविदुषः श्रीयदुगिरि नित्यवासिनो जग्गु वेङ्कटाचार्यस्य कृतिषु, कुवलयानन्दचन्द्रिकाचकोर स्समाप्तः

श्रीः

# अशुद्धसंशोधनम्



पाठकेषु विज्ञप्तिरियम्। बहुशोऽत्रपुस्तके टठयोः, ववयोः, पषयोः, तनयोः, घधयोः, ङ्कङ्गयोः, श्वश्चयोः, डङयोः, स्वखयोः, ममयोः, द्वद्रयोः, ङ्गङ्गयोः, त् म् इत्यनयोश्च वैपरीत्यं दृश्यते । तत्र अवहित दृष्टिभिः कृपया शोधनीयमिति ॥

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| ४ | १९ | लुप्तोमा | लुप्तोपमा |
| ८ | २० | पादने | पादाने |
| ९ | १४ | उपान | उपमान |
| १२ | ७ | विद्यामा | विद्यमा |
| २१ | २१ | स्साधुः | स्साधुः |
| २२ | ३ | पुरग्धृ | पुरदग्धृ |
| २३ | १७, २० | अलोकौ—नानब्दं | आलोकौ—नानन्दं |
| २४ | ६ | करिणि | कारिणि |
| २८ | ८ | गृहीतृ | ग्रहीतृ |
| २९ | २४ | चद्रिका | चन्द्रिका |
| ३० | ३ | णक्षण | लक्षण |
| ३२ | ६ | मादय | मादाय |
| ३३ | ७ | मुत्प्रेक्षि | मपह्नु |
| ४१ | २ | वर्ण्यांना | वर्ण्यांना |
| ४४ | १७ | स्त्रीसौ | स्त्रीसौ |
| ४५ | ८, १८ | स्वगो—णकर्तैं | स्वगो—णकर्तैं |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| ४९ | २२ | विरूद्धो | विरुद्धो |
| ५७ | १० | चनात् । | चनात्, |
| ७१ | २१ | इयुक्तंम् | इत्युक्तम् |
| ७२ | १४ | वृक्ति | वृत्ति |
| ७३ | ७ | व्यव्याप्ति | व्याप्ति |
| ७६ | २१ | दण्ढः | दण्डः |
| ७९ | २२ | जातियो | जातीयो |
| ८५ | २, ३ | रतुनो–रतुप | स्तुनो–स्तुप |
| १०६ | १५ | त्येतत् । | त्येतत्, |
| १११ | २१ | मार्गाघ्ध | मार्गाध्व |
| ११२ | ९ | त्प्रौनरु | त्पौनरु |
| १२४ | १५ | वश्कम् | वश्यकम् |
| १३९ | २० | दियद्यम् | दिपद्यम् |
| १४४ | १९ | स्पूर्ति | स्फूर्ति |
| १४५ | १७ | व्चाच | व्याच |
| १५० | २ | एवै | एवं |
| १५३ | १५ | विशेव्य | विशेष्य |
| १५४ | २१ | मेतनि | मेतानि |
| १५५ | १४ | ङीदूदे | ईदूदे |
| १५७ | १ | अलङ्कारः ४६ | अलङ्कारः ४५ |
| ,, | ७ | मादिभि | मादिभिः |
| १६५ | ४ | कृत्या | कृत्वा |
| १६९ | २१ | मघ्धा | मध्या |
| १७१ | १५ | सवैमे | सैवमे |
| १७२ | ८ | गनाथो | गन्नाथो |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १७३ | ५ | मथावा | यथावा |
| १७६ | १३ | शब्दश्रू | शब्दश्रू |
| १९२ | १८ | पञ्चम | दशम |
| १९४ | १३ | ठस्तुस | ठस्स |
| १९५ | २ | लम्बश्च | लंभश्च |
| १९७ | १७ | यतेनै | यत्तेनै |
| १९९ | १०, १६ | श्रिश्रय–कनिनि | शिश्रय–कविनि |
| २०० | २६ | द्वयश्च | इयश्च |
| २०८ | ६ | रूद्रीये | रुद्रीये |
| २१२ | ९, १९ | साधिता–उम्झित्य | साधितो–उज्झित्य |
| २१३ | २० | पचय | पचाय |
| २१४ | ४ | पचयः | पचायः |
| २१३ | १ | अलङ्कारः ५९ | अलङ्कारः ६७ |
| २१४ | १ | अलङ्कारः ५९ | अलङ्कारः ६९ |
| २०३ | १७ | भवष्य | भविष्य |
| २१९ | १४ | दाषेत्वे | दोषत्वे |
| २२८ | १६ | तिभाटो | तिभटो |
| २२९ | २३ | वज्ञायो | वज्ञयो |
| २३० | १८ | दिस्यादि | दित्यादि |
| २३१ | २३ | ध्यनसा | ध्यवसा |
| २३३ | १९, २० | शीताम् | शीलताम् |
| २३४ | १९ | सूक्ष्यम् | सूक्ष्मम् |
| २३७ | ४ | नुसरे | नुसारे |
| ,, | ७ | सस्वलि | सस्खलि |
| ,, | २३ | स्वलन | स्खलन |

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| २३८ | ९, २१ | भावर्णी–स्वलल | भावव[illegible]–स्खलन |
| २४१ | ५ | कार्पीं | कार्पा |
| २४३ | १६ | भवात् | भवान |
| २४८ | २० | दृष्टि | दृष्टि |
| २४९ | २२ | पलिका | पालिका |
| २५२ | ५ | त्सयोस्त | त्संशयोस्त |
| २५५ | १६ | सासु | साधु |
| २६४ | १० | निदेंश | निर्देश |
| २६५ | २१, २३ | ध्यवासा–म्भवतः | ध्यवसा–म्मतः |
| २६७ | १९ | लोह्ययम् | लोह्ययम् |
| २६८ | ४, ५ | पुररि–प्रद्रर्श | पुरारि–प्रदर्श |
| २६९ | २४ | भागः | भागाः |
| २७२ | २१ | प्रदोश | प्रदेश |
| २७५ | ४ | वर्णनक | वर्णन |
| ,, | २२ | नतुका | तनुका |
| ,, | २५ | रीमच्यो | मरीच्यो |
| २७६ | २३ | सर्वेपि | सर्वापि |
| ,, | २४ | "अव्युत्पन्नलिखित" मित्यनन्तरं "पुस्तकमवलंब्य स्वयमपि प्रमीलापर्वशोसुमोद्द इति पठनीयम् ॥ | |
| २७७ | १८ | वरापूर्व | वरात्पूर्व |
| २८० | ५ | श्रीयत्र | श्रीयतेयत्र |